

नमो नमः श्रीप्रभुधर्मसूरये ।

# धर्मदीपिका

## ( व्याकरणम् )

रचयिता—

न्यायविशारद-न्यायतीर्थोपपदविभूषित

उपाध्यायश्रीमङ्गलविजयः ।

भावनगरस्थश्रीयशोविजयजैनग्रन्थमालायाः
कार्यवाहकेन फूलचन्द्र वैद इत्येतेन वटपद्रस्थ-
'लुहाणामित्र स्टीम' मुद्रणालये मुद्रयित्वा प्रकाशिता ।

वीरस. २४५१ ] धर्मसं. ४ [ वि. सं. १९८१

प्रथमावृत्ति. ] [ प्रतिः ५००

मूल्यम् ४-०-०

# गुरुदेव–पुष्पाञ्जलिः ।



( १ )

काश्यां पुण्यां श्रममतितरां सर्वविद्याप्रदेशे
कृत्वा विद्यालयमनुपमं स्थापयामासिवान् यः ।
दृष्ट्वा हिंसामपकरुणतां काशिराजस्य योगं
लब्ध्वा शालां पशुहितकरीमभ्युदग्रप्रतापः ॥

( २ )

समुत्पाद्य प्राज्ञान् विशदमुपनीय प्रकटतां
पुराणां सद्ग्रन्थावलिमकृत विद्याप्रसरणम् ।
निराकृत्याऽऽरेका विविधविषया. प्राच्यविदुषां
तथा पाश्चात्यानां जिनपथविकासं व्यधित यः ॥

( ३ )

गत्वाऽङ्ग-बङ्ग-मगधादिषु दूरदूरं
देशेषु संविहितवानभिभाषणानि ।
हिंसानिषेधविषयं च सहस्रसंख्यान्
मांसाशिनोऽनयत यः पदवीं कृपायाः ॥

( ४ )

प्रामुख्ये काशिराजः प्रवरकृतधियां मण्डलैः सङ्कुलायां
धर्माचार्यैर्महद्भिर्मुनिभिरपि परैर्भूषितायां सभायाम् ।
नैकट्ये जैनधर्मानुचर-बहुमत-श्रेष्ठिचूडामणीना-
माचार्याख्यप्रतिष्ठा-पदवितरणत सत्कृतो यो बभूवान् ॥

( ५ )

"आबू"-तीर्थजिनालयेषु बहुशोऽगच्छन्नुपानद्युता
पाश्चात्या निरचीकरत् तदिदक दुःखाकृदाशातनम् ।
श्रीमज्जोधपुरे पुरे व्यररचत् " साहित्य-सम्मेलनं "
प्रज्ञालैरधिकारिभिश्च बहुभि सम्पूजितो योऽभवत् ॥

( ६ )

अनेके भूपाला' प्रथितयशसो भारतभुवो
न्यपुर्यद्व्याख्यानामृतरसमनल्पादरतया ।
तथा "बोम्बे"-नेता निजनिकटमाहूय महता
'प्रमोदेनार्चद् यच्चरण-कमले उत्सुकमनाः ॥

( ७ )

ईदृग्धर्मधुरन्धराय भुवनप्रख्यातनाम्ने पुनः
श्रीजैनेश्वर-शासनामरपथाभोगप्रभामालिने ।
सूरीन्द्राय युगप्रधान-पदभाक्-भट्टारक-स्वामिने
श्रीश्रीश्रीयुतधर्मसूरि-गुरवे भूयान्नमः कोटिशः ॥

( ८ )

तव प्रसादात् गुरु-देवते ! मया
काश्यां त्वदङ्घ्रि-द्रुतले प्रभाविनि ।
स्थित्वा सुखं ज्ञानलवः समर्जित
शाब्दादिशास्त्रेष्वपि मूढबुद्धिना ॥

( ९ )

तवोपकारोऽयमनल्परूप.
क्षणे क्षणे मे स्मरण समेति ।
स्मृति-क्षणेऽश्रूणि पतन्ति दृग्भ्यां
त्वद्विप्रयोगार्तिनिपीडितस्य ॥

(१०)

शल्यं पुनर्मे हृदयस्थमेतद्
विशेषतो मां भगवन् ! दुनोति ।
यथोचित कर्तुमपारयं न
सेवां त्वदीय-क्रमयामलस्य ॥

(११)

इदं लघु व्याकरणाख्यपुष्प—
निर्वापधाष्ट्यँ हि पुरस्तव स्तात् ।
आश्वासकं मे मनसोऽधमर्ण—
शिरोमणेर्दीन-विहीनशक्तेः ॥

# धर्मदीपिकामां आर्थिक सहायक सद्गृहस्थोनी
# शुभ नामावली.



नकलो

१२५ आदरिनिवासी शेठ लीलाधर लक्ष्मीचन्द--मुबइ.

८५ पोरबन्दरनिवासी मास्तर हरखचन्द कपूरचन्द--मुबई.

५० मांगरोळनिवासी शेठ प्रेमचन्द नागरदासना मातुश्री बाइ रळीआत--मुंबई.

५० आगरानिवासी सद्गत शेठ चान्दमलजी नाहटाना धर्मपत्नी श्रीमती वसन्तकुवरी--आगरा.

२५ नागपुरनिवासी श्रीमान् शेठ कशरीमलजी मानमलजी जोहरी.

२५ अमलनेरनिवासी शेठ भवरीलालजी हीरालालजी.

२५ अमलनेरनिवासी शेठ कस्तूरचंदजी तेजपालजी

१३ आगरानिवासी शेठ अमरचन्दजी वैदना सौभाग्यवन्ती धर्मपत्नी बाई उदयकुमारी--आगरा.

१३ धीणोजनिवासी शेठ रवचंद कपूरचंद.

---

४११

# प्रस्तावना ।



उपयोगि खलु भाषासौष्ठवाय सद्व्यवहारसिद्धये च व्याकरणम् । संस्कृत-भारत्या पुनर्मधुरतया, मनोरञ्जकतया, चित्ताकर्षकतया, सन्तोषानन्दावहतया च गीर्वाणवाणीतयैव प्रसिद्धाया अनुभवसिद्धायाश्च समधिगमो निःश्रेयसायापि तत्प्रतिपादकशास्त्रानुप्रवेशकारितया कल्पते ।

संस्कृतव्याकरणानि जैन-जैनेतराभिरूपप्रणीतानि सन्ति सम्प्रत्यपि बहूनि । तत्र च जैनव्याकरणानामप्रसिद्धावस्थाया पतितत्वेन पाणिनीयादिव्याकरणानि पठन-पाठनगोचरतया सुव्यापक-प्रचारमवाप्तवन्ति । सुप्रसिद्धनामधेय-भगवत्पाद-**श्रीहेमचन्द्राचार्य**विरचित "**सिद्धहेम**" नामशब्दानुशासनस्य विंशतितो वर्षतो यदाध्ययनं चाध्यापनं च समारब्धं समभवत् जगत्पूज्य-गुरुदेव-शास्त्रविशारद-जैनाचार्यश्री १००८ श्री **विजयधर्मसूरि**स्थापित-संस्कृतविद्यालये काश्यां, तदा काशीस्थ वैयाकरणचूडामणिविबुधानामन्तःकरणानि तस्य सरलशैलीमुचितपद्धतिं सुगमामथ च साङ्गोपाङ्गां प्रतिपादनसरणीं च प्रति नम्रीभूतानि, लब्धवच्च तेषां चेतस्सु तत् सुयोग्यप्रतिष्ठास्थानम्, समारब्धवाँश्च तस्य महिमयशःसम्भारेण प्रसरता सह पठन-पाठनप्रवृत्तेरपि प्रचारः ।

तस्य चातिविस्तृततया समधिक-प्रज्ञा-समयव्ययसाध्यत्वेन, लध्व्या वृत्तेरपि बृहद्वृत्तिवद् अष्टाध्यायीक्रमसहिततया चन्द्रप्रभा-हैमलघुप्रक्रियाभ्यामपि च सरलरीतिप्रकारेण संस्कृत-व्युत्पादन समभिलाषुकेण निर्मितं मयेदमल्पं व्याकरणम् ।

अत्र च पूर्वार्धे पञ्च सन्धयः, षड्लिङ्गानि, युष्मदस्मत्प्रक्रिया, अव्ययप्रकरणम्, स्त्रीप्रत्ययः, कारकाणि, समास-तद्धित-प्रकरणे च समावेशितानि ।

उत्तरार्धे पुनः—दश गणाः, यत्र च १७०० धातवः प्रायो निर्दिष्टा वर्त्तन्ते, दश प्रक्रियाः, कृत्यप्रक्रिया, पूर्वकृदन्तानि, उणादयः, उत्तरकृदन्तानि, अन्येऽपि चोपयोगिनो विषया निवेशिताः सन्ति । धातुपाठ-न्याय-द्रव्य-गुण-जात्यादिलक्षणादयोऽपि विषयाः समुपन्यस्ताः सन्ति ।

प्रायः २४० पृष्ठेषु पूर्वार्धम्, ५०० पृष्ठेषु चोत्तरार्धं समाप्तिमाप्नुतः । भाषायाः सरलतायामप्यादितोऽवसानपर्यन्तं यावदुपयोगोदयं विहितः प्रयत्नः । प्रकाशमधिगच्छति चायेतिहास-तत्त्वमहोदधिजैनाचार्यश्रीविजयेन्द्रसूरि-सुसान्निध्यतः ।

कार्ये चास्मिन् न्यायविशारद-न्यायतीर्थपदालङ्कृतेनास्मत्स-तीर्थ्येन निर्ग्रन्थेनापि विहितानेकगद्यपद्यहृद्यग्रन्थेन श्रीमन्न्याय-विजयेन विदुषा शान्तमूर्तिमुनिराजश्रीजयन्तविजयादिना च प्रसङ्गोचितां सहायतां प्रदायाहं प्रोत्साहितस्तथा च प्रुफसंशोधनादौ

विशेषतः परिश्रमवता भगवान्दासश्रेष्ठितनुजेन पण्डितलालचन्द्रेण विशदीकृत्यैतद् व्याकरणं विभूषां प्रापितम्; अतोऽत्रैतान् प्रति कृतज्ञताऽऽविष्क्रियतेऽन्तःकरणतो धन्यवादपुरस्सरम् ।

सर्वाङ्गशुद्धं कार्यं विरलं सुदुर्लभं चेति तु सर्वप्रतीतम् । अत एव सम्भवन्त्यस्त्रुट्योऽत्र संशोधयिष्यन्ते विद्वद्भिः, उल्लिख्य च ता मयि प्रेषयितुमपि कृपा करिष्यते, इत्यभ्यर्थनां कुर्वाणो विरमति—

—मङ्गलविजयः ।



# विषय-सूची ।

## पूर्वार्धे—

## उत्तरार्धे—



## परिशिष्टे—

श्रीविश्वनाथः शरणम् ।

इह खलु नानाविधभारतीप्रभाभास्वरे भारतेऽद्यावधि परमकरुणाक्रान्तस्वान्तैः परोक्षापरोक्षज्ञानगौरवाधरीकृतान्यप्रान्तजातविपश्चिज्जातैर्महामहिमशालिभिर्वाचस्पतिप्रतियोगिकसादृश्यानुयोगिभिर्विद्वद्वरिष्ठैः प्रणीता भूयांसो ज्यायांसो लघीयांसश्च शब्दशास्त्रारण्यविहरणमानसमनीषिकेसरिजनानन्दसन्दोहसम्पादकाः शब्दानुशासनग्रन्था अध्ययनाध्यापनविषयतामुपलभमाना सर्वत्रैव प्रत्यक्षीक्रियन्ते । तेषु निखिलशास्त्रीयविषयान् करकमलामलकवद् वीक्षमाणैः सुप्रतीतनामधेयैरार्हतमतावतंसभूतैः **श्रीमद्धेमचन्द्राचार्य्यसूरिवर्य्यैः** सम्पादितः स्वोपज्ञबृहद्वृत्तिसमेतः **सिद्धहेमनामको** ग्रन्थः प्रायः सर्वान् नूतनानतिशेते । तस्य च तीक्ष्णबुद्धिवैभवैरपि दुरवगाहतया तत्प्रणीतलघुवृत्तेश्च सूत्रक्रमेण निर्मिततया संस्कृते प्रविविक्षूणां बालानां सुगमतया अशक्यबोधविषयत्वात् परमकारुणिकैः सकलशास्त्रनिष्णातस्वान्तैः श्रीमन्मुनिप्रवर**मङ्गलविजयैः** सकुतूहलं सम्पादितः सद्यः शब्दसाधुत्वसम्पादकोऽल्पीयसा प्रयत्नेन हृदयग्राह्यः सिद्धहेमपयोनिधिदुग्धसारभूतोऽयं धर्मदीपिकाभिधो ग्रन्थोऽवश्यं संस्कृतसाहित्यसुमेरुशिखरारुरुक्षून् बालान् स्वास्वादेनातितरां सन्तोषयेदित्याशास्ते—

| | |
|---|---|
| सं. १९७९ | काशीस्थविरलाविद्यालय—व्याकरण—<br>साहित्य—न्यायप्रधानाध्यापकः<br>व्याकरणोपाध्यायः **सभापतिशर्मोपाध्यायः** |

---

न्यायतीर्थ—न्यायविशारद—

## उपाध्याय श्रीमंगलविजयजी कृत अन्यान्य ग्रन्थो.

### १ जैन साहित्यमां पदार्थनी व्यवस्था.

हिन्दी भाषामां

### २ जैन तत्त्वप्रदीप

संस्कृत भाषामा

जैन दर्शनमां प्रतिपादित पदार्थोने जाणवा माटे न्याय शैलीमां मुख्य साधनरूप छे. आ ग्रथमां दरेक पदार्थनुं लक्षण प्रदर्शित करवा पूर्वक स्वरूप समजाववामां आवेल छे, तेमा सात अधिकार राखवामां आव्या छे.

मूल्य रू. १

### ३ सप्तभंगीप्रदीप

गुजराती भाषामां

स्याद्वाद-सप्तभंगीना स्वरूपना बोध सिवाय जैनदर्शनमां प्रवेश थवो अशक्यप्राय होवाथी तेनो दरेक लोको लाभ ले, ते खातर नवीन शैलीथी गुजराती भाषामां आ ग्रन्थ रचवामां आव्यो छे ग्रन्थना प्रमाणमां किंमत घणी थोडी राखवामां आवी छे. पृष्ठ १५०. मूल्य रू. ०।=

### ४ तत्त्वाख्यान ( पूर्वार्ध )

गुजरातीमां

बौद्ध, नैयायिक, सांख्य अने वैशेषिक आ चार दर्शनोनो आचार, पदार्थोनी व्यवस्था विगेरे जाणवा माटे आ एक

अपूर्व साधन छे. दरेक दर्शननी समालोचना पण घणी सरल युक्तिपूर्वक करवामां आवेली होवाथी दरेक विद्वान्‌नु मन ते जावा उत्कंठित थाय छे तेनी उपर घणा विद्वानोना उच्च अभिप्रायो पण आवी गया छे नकलो थोडी छे अने मागणी घणी छे. व्हेलो ते पहेलो पृष्ट ३१५ ग्रंथ जोता किमत घणी ज थोडी छे. मूल्य रू. १)

५ द्रव्यप्रदीप गुजरातीमा

षड् द्रव्यनुं स्वरूप न्यायशैलीथी युक्तिपूर्वक जाणवा माटे जैनोमां आ एक अपूर्व साधनरूप छे. ग्रंथ नानो होवा छतां पण विषयो गंभीर होवाथी घणी सरल भाषामां निरूपण करवामां आव्युं छे. पृ ६४ मूल्य रू ०।

६ धर्मप्रदीप गुजरातीमा

भिन्न विषयो पर द्रव्यानुयोगने लक्ष्यमां राखी प्रथमा चोवीश तीर्थंकरोना स्तवनो आपवामां आव्यां छे. तेमां खास परमपूज्य आचार्य श्रीविजयधर्मसूरिजीकृत स्तवनोनो पण समावेश छे साथ साथ तेओश्रीनी अष्टप्रकारी पूजा पण आपवामा आवी छे. पृष्ट ९६. मूल्य रू. ०।=

७ तत्त्वाख्यान (उत्तरार्ध) गुजरातीमां

आमां वेदांत, मीमांसा अने जैनदर्शन आ त्रणनु घणा विस्तारपूर्वक विवेचन छे. साडाछसो पृष्ट मू रू ४

८ धर्मदीपिका ( व्याकरण ) संस्कृतमा

नवीन पद्धतिथी लखायेल व्याकरण शास्त्रनो आ एक

अपूर्व ग्रंथ छे. श्लोकप्रमाण लगभग सात हजार जेटलुं छे. मूल्य रू ४-०-०

## छपाववाना ग्रंथो.

९ सम्यक्त्व प्रदीप

१० धर्मजीवनप्रदीप ( विजयधर्मसूरिरास )

११ प्रदीपप्रकाश. गुजराती

आ "जैनतत्त्व प्रदीप"नुं गुजराती भाषामां तैयार थयेलुं विवेचन छे लगभग एक हजार पृष्ट जेटलो आ ग्रंथ थशे.

१२ व्युत्पत्तिवादव्याख्या संस्कृतमां

ए नामनी न्यायना ग्रंथनी टीका नव्यन्यायमा लगभग बे हजार श्लोक जेटली थशे

१३ शक्तिवादटिप्पन संस्कृतमा

नव्य न्याय शैलीमां लगभग पांचसो श्लोक जेटलुं.

प्राप्तिस्थान—

श्री यशोविजय जैनग्रंथमाला.
हेरीसरोड, भावनगर.
(काठियावाड)

॥ अर्हम् ॥

नमो नमः श्रीप्रभुधर्मसूरये ।

# ❀ धर्मदीपिका । ❀

नत्वा वीरं जगद्वन्द्यं धर्मसूरिं गुरुं तथा ।
सिद्धहेमप्रवेशाय क्रियते धर्मदीपिका ॥ १ ॥

अर्हँ । १ । १ । १ ।

'अर्हँ' इत्येतदक्षर परमेश्वरस्य परमेष्ठिनो वाचकं शास्त्रस्यादौ प्रणिधेयम् ।

सिद्धिः स्याद्वादात् । १ । १ । २ ।

कथंचित् सर्वदर्शनसमतसद्भूतनित्यानित्यादिवस्त्वंशानां मिथ. सापेक्षतया वदन स्याद्वाद । अथवा नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगम· स्याद्वाद । तस्मात् प्रकृताना शब्दानां सिद्धिर्निष्पत्तिर्ज्ञातव्या ।

औदन्ताः स्वराः । १ । १ । ४ ।

अकाराद्या औकारान्ता वर्णा. स्वरसंज्ञका· स्युः । ते च अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ।

**ॡदन्ताः समानाः । १ । १ । ७ ।**

ॡकारान्ता वर्णा अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ इत्येते समानसञ्ज्ञका स्युः ।

**अनवर्णा नामी । १ । १ । ६ ।**

अवर्णरहिता स्वरा नामिसंज्ञकाः स्युः । इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ।

**ए ऐ ओ औ सन्ध्यक्षरम् । १ । १ । ८ ।**

ए ऐ ओ औ इत्येते वर्णाः सन्ध्यक्षरसंज्ञकाः स्युः ।

**अं अः अनुस्वारविसर्गौ । १ । १ । ९ ।**

अकारावुच्चारणार्थौ । अं इति नासिक्य, अः इति च कण्ठ्यः तौ क्रमेणानुस्वारविसर्गसंज्ञकौ स्याताम् ।

**एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः । १ । १ । ५ ।**

मात्रा कालविशेषः । एक–द्वि–त्र्युच्चारणमात्रा औदन्ता वर्णाः क्रमेण ह्रस्वदीर्घप्लुतसंज्ञकाः स्युः । अ इ उ ऋ ऌ ह्रस्वाः, आ ई ऊ ॠ ॡ ए ऐ ओ औ दीर्घाः, आ३ई३ऊ३इत्यादयःप्लुताः। अर्धमात्रिकं च व्यञ्जनम् प्रतिपादितमन्यत्रापि—

"एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम्" ॥१॥
"चाषस्त्वेकां वदेन्मात्रां द्विमात्रां वायसो वदेत् ।
त्रिमात्रां तु शिखी ब्रूयाद् नकुलश्चार्धमात्रकम्" ॥२॥

तथा उच्चस्वरेणोपलभ्यमानो वर्ण उदात्त', नीचै. स्वरेणोपलभ्यमानो वर्णोऽनुदात्त , समवृत्या चोपलभ्यमानो वर्ण' स्वरित । तदुक्तम्—उच्चैरुदात्त , नीचैरनुदात्त , समाहार' स्वरितः इति ।

**कादिर्व्यञ्जनम् । १ । १ । १० ।**

कादयो हपर्यन्ता वर्णा व्यञ्जनसंज्ञका भवन्ति । क ख ग घ ङ, च छ ज झ ञ, ट ठ ड ढ ण, त थ द ध न, प फ ब भ म, य र ल व, श ष स ह इति ।

**पञ्चको वर्गः । १ । १ । १२ ।**

कादिवर्णेषु यो य पञ्चसङ्ख्यापरिमाण' प्रसिद्धः, स वर्गसञ्ज्ञः स्यात् । क ख ग घ ङ, च छ ज झ ञ, ट ठ ड ढ ण, त थ द ध न, प फ ब भ म ।

**अपञ्चमान्तस्थो धुट् । १ । १ । ११ ।**

वर्गपञ्चमान्तस्थावर्ज. कादिवर्णो धुट्सञ्ज्ञ' स्यात् । क ख ग घ, च छ ज झ, ट ठ ड ढ, त थ द ध, प फ ब भ, श ष स ह ।

**आद्यद्वितीयशषसा अघोषाः । १ । १ । १३ ।**

वर्गाणामाद्यद्वितीयवर्णास्तथा शषसाश्चाघोषसञ्ज्ञाः स्युः । क ख च छ ट ठ त थ प फ श ष स ।

**अन्यो घोषवान् । १ । १ । १४ ।**

अघोषादन्ये वर्णा घोषवत्सञ्ज्ञकाः स्युः । ग घ ङ ज झ ञ ड ढ ण द ध न ब भ म य र ल व ह इति ।

**अं अः ≍क ≍प शषसाः शिट् । १ । १ । १६ ।**

अकपा उच्चारणार्थाः, अनुस्वारविसर्गौ वज्रगजकुम्भाकृती शषसाश्च वर्णाः शिट्संज्ञकाः स्युः ।

**य-र-ल-वा अन्तस्थाः । १ । १ । १९ ।**

निरनुनासिक-सानुनासिकभेदभिन्ना य-र-ल-वा अन्तस्थासंज्ञकाः स्युः ।

**तुल्यस्थानास्यप्रयत्नः स्वः । १ । १ । १७ ।**

भाषावर्गणापुद्गलस्कन्धस्य यत्र वर्णभावापत्तिस्तत् स्थानम् । आस्ये मुखे प्रयत्न आस्यप्रयत्न, आन्तरिकव्यापारविशेषः । तुल्यौ वर्णान्तरेण सदृशौ स्थानास्यप्रयत्नौ यस्य स वर्णस्तं प्रति स्वसंज्ञकः स्यात् । तत्र वर्णानां स्थानानि—

**"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।**
**जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च"॥१॥**

अवर्ण-कवर्ग-ह-विसर्गा कण्ठस्थानाः, इवर्ण-चवर्ण-य-शास्तालव्याः, उवर्ण-पवर्गोपध्मानीया ओष्ठस्थाना, ऋवर्ण-टवर्ग-र-षा मूर्धन्याः, ऌवर्ण-तवर्ग-ल-सा दन्त्याः, ए ऐ तालव्यौ, ओ औ ओष्ठ्यौ, वकारो दन्त्यौष्ठ्यः, जिह्वामूलीयो जिह्व्य, नासिक्योऽनुस्वार, ङञणनमा स्वस्वस्थाना नासिकास्थानाश्च । वर्गाणां पञ्चमैर्युक्तोऽन्तस्थैश्च युक्तो हकार उरःस्थानीय, तदुक्तम्—

"हकारं पञ्चमैर्युक्तमन्तस्थैश्च संयुतम् ।
उरःसंस्थं विजानीयात् कण्ठ्यमाहुरसयुतम्" ॥१॥

अथास्यप्रयत्न —स्पृष्टकरण स्पर्शानाम्, ईषत्स्पृष्टकरणमन्तस्थानाम्, ईषद्विवृतकरणमूष्मणाम्, विवृतकरण स्वराणाम् । तत्र क ख ग घ ङ च छ ज झ ञ ट ठ ड ट ण त थ द ध न प फ ब भ म एते स्पर्शा । य र ल वा ईषत्स्पृष्टा । श ष स हा एत ऊष्माण । स्वरा विवृता, तत्राकारस्तावत् त्रिविध, उदात्तानुदात्तस्वरितभेदात्, प्रत्येकं सानुनासिकनिरनुनासिकभेदात् षोढा, एते ह्रस्वस्य भेदाः । एव दीर्घप्लुतयोरपि तथा चाष्टादश भेदा अवर्णस्य ज्ञातव्या । एवमिवर्णादीनामपि तावन्तो भेदा विज्ञेयाः । सन्ध्यक्षराणां ह्रस्वा न सन्तीति तेषा द्वादश भेदा सन्ति । वर्ग्या पञ्च पञ्च परस्परं स्वसञ्ज्ञकाः । यवलाना सानुनासिक–निरनुनासिकभेदौ मिथः स्वौ ।

**अप्रयोगीत्** । १ । १ । ३७ ।

इह शास्त्रे उपदिश्यमानो वर्णस्तत्समुदायो वा कार्यार्थं गृहीत· सन् लौकिकप्रयोगे न दृश्यते स एति—अपगच्छतीति इत्सञ्ज्ञक. स्यात् ।

**गुणोऽरेदोत्** । ३ । ३ । २ ।

अर् एन् ओत् इत्येते प्रत्येक गुणसञ्ज्ञकाः स्यु· ।

**वृद्धिरारैदौत्** । ३ । ३ । १ ।

आ आर् ऐ औ इत्येते प्रत्येक वृद्धिसञ्ज्ञकाः स्युः ।

एवं स्यादयस्त्यादयश्च विभक्तिसञ्ज्ञकाः, विभक्त्यन्ताः पदसञ्ज्ञकाः,

पुरो वर्णानुच्चारणमवसानं विरामः। स्यमौजस पुंस्त्रियो, नपुंसके जस्शसादेश शिश्च घुट्संज्ञकाः, संबोधनार्थ सि विना घुटः शेषघुट्-संज्ञका। अन्त्याद् वर्णात् पूर्वो वर्ण उपधा। अननुस्वारादिपरो ह्रस्वो लघुसंज्ञकः। दीर्घो गुरुसंज्ञकः, अनुस्वार-विसर्ग-संयोगपरो ह्रस्वोऽपि गुरुः। स्वरानन्तरितव्यञ्जनसमुदायः संयोगः। शत्रुवद् आदेशः। मित्रवद् आगमः। लुक् लुप् लोपश्च अदर्शनम्। अन्त्यस्वरात् परस्य अन्त्यस्वरस्य च टिसंज्ञा, इत्यादयोऽनुक्ता उक्ताश्च सञ्ज्ञा वेदितव्याः।

इति संज्ञाप्रकरणम्।

---

## अथ स्वरसन्धिः।

दधि+अत्र इति स्थिते

**इवर्णादेरस्वे स्वरे यवरलम्। १। २। २१।**

इवर्णोवर्णऋवर्णऌवर्णानामस्वे स्वरे यथासंख्यं यवरला इत्येते आदेशाः स्युः, संहितायां विषये। यदुक्तम्—

"संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥ १॥"

दध्य्+अत्र इति जाते

**अर्दीर्घाद् विरामैकव्यञ्जने । १ । ३ । ३२ ।**

दीर्घवर्जितात् स्वरात् परस्य रकार-हकार-स्वरवर्जितस्य वर्णस्य द्वे रूपे वा स्यातां विरामे असंयुक्तव्यञ्जने च परे । इति धकारस्य वा द्वित्वे दध्ध्य्+अत्र इति जाते

**तृतीयस्तृतीयचतुर्थे । १ । ३ । ४९ ।**

धुट स्थाने तृतीये चतुर्थे च परे तृतीय स्यात् । इति प्रथम-धकारस्य दत्वे दद्ध्य्+अत्र इति जाते स्वरहीनं परेण संयोज्यं दद्ध्यत्र इति सिद्धम् । नहि+अत्र इति स्थिते 'इवर्णादीनामस्वे स्वरे' इत्यादिना यत्वे नह्य्+अत्र इति जाते 'अदीर्घाद्' इत्यादौ रकार-हकार-स्वरवर्जनाद् नह् इत्यस्य न द्वित्वं किन्तु तत्र—

**र्हाद्र्हस्वरस्यानु नवा । १ । ३ । ३१ ।**

स्वरात् पराभ्यां रेफ हकाराभ्यां परस्य रेफ-हकार-स्वर-वर्जितस्य वर्णस्य द्वे रूपे वा स्याताम् । इति यकारस्य द्वित्वे नह्य्यत्र इति सिद्धम् । एवं गौरी+अत्र-गौर्य्यत्र जलालाबुन्यायेन रेफस्योर्ध्वगमनम्, उक्तं च शास्त्रान्तरेऽपि

**"तुम्बिका-तृण-काष्ठं च तैलं जलसमागमे ।**
**ऊर्ध्वस्थानं समायान्ति रेफाणामीदृशी गतिः" ॥१॥**

पक्षे दध्यत्र नह्यत्र गौर्यत्र । एवं मधु+अत्र-मद्ध्वत्र, मध्वत्र । पितृ+अर्थ-पित्रथ । ऌ+अनुबन्ध-लनुबन्ध । ॡ+आकृतिः-लाकृतिः इत्यादीनामपि यथासूत्रप्राप्ति सिद्धिर्ज्ञातव्या ।

**एदैतोऽयाय् । १ । २ । २३ ।**

एकारैकारयोः स्थाने स्वरे परे यथासंख्यमयाय् इत्येतौ स्याताम्। ने+अनम्–नयनम्, ए+अनम्–अयनम्, नै+अक–नायकः, रै+अकः–रायकः।

**ओदौतोऽवाव् । १ । २ । २४ ।**

ओकारौकारयोः स्थाने यथासंख्यमवावौ स्यातां स्वरे परे। लो+अनम्–लवनम्, पो+अनम्–पवनम्, लो+अक–लावक, पौ+अक–पावकः। गोशब्दस्य यूतिशब्दे परेऽध्वपरिमाणे चौकारस्यावादेश, गव्यूतिः क्रोशद्वयम्।

**स्वरे वा । १ । ३ । २४ ।**

अवर्णात् परयोः पदान्तस्थयोर्यकारवकारयोः स्वरे परे वा लुक् स्याद् न च सन्धिः। ते आगताः इति स्थिते 'एदैतोऽयाय्' इति अयादेशे तय् आगताः, अनेन वा लुकि त आगताः, तयागताः। पटो इह इति स्थिते 'ओदौतो' इत्यादिना अवादेशे पटव्+इह इति जाते वा लुकि पट इह पटविह। एवं तस्मै इदम्–तस्मा इदं तस्मायिदम्, तौ इह–ता इह–ताविह।

**गोर्नाम्न्यवोऽक्षे । १ । २ । २८ ।**

पदान्तस्थस्य गोरोकारस्याक्षशब्दे परे सञ्ज्ञायामव इत्यकारान्त आदेशः स्यात्। गो+अक्षः अनेनावादेशे कृते 'समानानाम्' इत्यादिना दीर्घे कृते गवाक्षः वातायनः।

**स्वरे वाऽनक्षे । १ । २ । २९ ।**

अक्षशब्दवर्जिते स्वरे परे गोरोकारस्यावादेशो वा स्यात् । गो+अजिनम्-गवाजिनम्, गो+अग्रम्-गवाग्रम, 'वाऽत्यसन्धि' इत्यनेन वा प्रकृतिभावे च गोअग्रम्, पक्षे 'एदोत पदान्तेऽस्य लुक' इति लुकि गोऽग्रम् । गो+इगितम्-गवेङ्गितम् ।

**इन्द्रे च । १ । २ । ३० ।**

इन्द्रशब्दे परे पदान्तस्थस्य गोरोकारस्य नित्यमवादेश स्यात् । गवेन्द्र ।

**अवर्णस्येवर्णादिनैदोदरल् । १ । २ । ६ ।**

अवर्णस्य इवर्ण-उवर्ण-ऋवर्ण-लृवर्णै सह यथासख्यमेद् ओत् अर् अल इत्येते आदेशा स्यु. । तव+इदम्-तवेदम, मम +उदकम्-ममोदकम्, गङ्गा+उदय -गगोदयः, तव+ऋद्धि -तवर्द्धि, मम+ऋद्धि -ममर्द्धि, तव+लृकार.-तवल्कार, मम+लृकार - ममल्कार ।

**समानानां तेन दीर्घः । १ । २ । १ ।**

समानाना तेन परेण समानेन सह दीर्घ स्यात् । दण्ड+ अग्रम्-दण्डाग्रम्, दधि+इदम-दधीदम्, मधु+उदकम्-मधूदकम्, पितृ+ऋकार.-पितॄकार. ।

**एदौतौ सन्ध्यक्षरैः । १ । २ । १२ ।**

अवर्णस्य एकारैकाराभ्यां तथौकारौकाराभ्यां सह यथासंख्यं ऐ औ इत्येतौ स्यातान्। तव+एषा–तवैषा, तव+ऐश्वर्यम्–तवैश्वर्यम्, तव+ओदनः–तवौदनः, रमा+ओदन –रमौदन , तव+औन्नत्यम्–तवौन्नत्यम् , खट्वा+औन्नत्यम्–खट्वौन्नत्यम् ।

**स्वरैस्वैर्यक्षौहिण्याम्** । १ । २ । १९ ।

स्वैर स्वैरिन् अक्षौहिणी इत्येतेषु अवर्णस्य परेण स्वरेण सह ऐ औ इत्येतौ स्याताम् । स्व+ईर –स्वैरः, स्व+ईरिणी–स्वैरिणी अक्ष+ऊहिणी–अक्षौहिणी सेना ।

**एदोतः पदान्तेऽस्य लुक्** । १ । २ । २७ ।

पदान्ते स्थिताभ्यामेकारौकाराभ्यां परस्याकारस्य लुक् स्यात् । ते+अत्र–तेऽत्र, पटो+अत्र–पटोऽत्र । 'शकन्ध्वादिषु टेर्लोपो वाच्यः' शक+अन्धु शकन्धुः, कर्क+अन्धु –कर्कन्धुः, कुल+अटा–कुलटा, हल+ईषा- हलीषा, मनस्+ईषा–मनीषा, सीमन्+अन्तः–सीमन्तः, आकृतिगणोऽयमिति एतादृशा प्रयोगा अन्येऽपि मार्तण्ड इत्यादयः शकन्ध्वादिगणे ज्ञातव्या ।

**ओमाङि** । १ । २ । १८ ।

अवर्णस्य लोप स्यादोमि आङादेशे च परे । अद्य+ओम्–अद्योम् , आ+ऊढा–ओढा–अद्योढा ।

**ऋत्यारुपसर्गस्य** । १ । २ । ९ ।

ऋकारादौ धातौ परे ऋता सहोपसर्गस्थस्यावर्णस्यार् स्यात्। प्र+ऋच्छति–प्रार्च्छति, उप+ऋच्छति–उपार्च्छति। नामावयवे ऋकारादौ धातौ परे वाऽऽर् ज्ञेय । प्र+ऋषभीयति–प्रार्षभीयति, प्रर्षभीयति ।

**ऋते तृतीयासमासे । १ । २ । ८ ।**

अवर्णस्य ऋते परे तृतीयासमासे ऋकारेण सहार् स्यात् । शीतेन+ऋत –शीतार्त । तृतीयासमासे इति किम् ? परमश्चासौ ऋतश्च परमर्त ।

**ऌतः ॠऌ ऋऌभ्यां वा । १ । २ । ३ ।**

ऌत ऋऌभ्या सह यथासंख्यं ॠऌ इत्येतावादेशौ वा स्याताम् । ऌ+ऋकार –ॠकार , ऌ+ऌकार –ॡकार. ।

**ऋतो वा तौ च । १ । २ । ४ ।**

ऋत ऋऌभ्या सह यथासंख्य ॠऌ इत्येतौ विलक्षणावादेशौ वा स्याताम् । पितृ+ऋषभः–पितॄषभ.। होतृ+ऌकार.–होत्ॡकारः। तौ च ऋत. ऋऌभ्या सह ऋकारऌकारावपि होतृ+ऋकार –होतृकारः, होतृ+ऌकार.–होत्ऌकार , पक्षे पूर्ववत् पितृऋषभ इत्यादय ।

**ॠस्तयोः । १ । २ । ५ ।**

तयो ऌकारऋकारयो. ऋकार–ऌकाराभ्या सह ॠ इति दीर्घादेशः स्यात्। ऌ+ऋषभः–ॠषभः। होतृ+ऌकारः–होतॄकारः। ऋकारे ऌकारे च परे समानस्य ह्रस्वोऽपि वा भवति ।

**वौष्ठौत्वोः समासे । १ । २ । १७ ।**

ओष्ठौत्वोः परयो. समासेऽवर्णस्य लुग् वा स्यात् । बिम्ब+ओष्ठ·—बिम्बोष्ठ , पक्षे बिम्बौष्ठ । स्थूल+ओतुः—स्थूलोतुः, पक्षे स्थूलौतुः ।

इति सन्धिप्रकरणम् ।

---

## अथ प्रकृतिभावः ।

---

**अदोमुमी । १ । २ । ३५ ।**

अदस्शब्दसम्बन्धिनौ मुमी इत्येतावसन्धी स्यातां स्वरे परे । अमुमुईचा, अमी अश्वाः। अदस इति किम् ? अमी+अत्र—अम्यत्र, अत्र अमिशब्दो रोगिप्रतिपादक ।

**ईदूदेद्द्विवचनम् । १ । २ । ३४ ।**

ईत् ऊत् एत् इत्येवमन्तं द्विवचनान्त स्वरे परेऽसन्धि स्यात् । मुनी अत्र, भानू एतौ, पचेते इमौ । मणी वेत्यादौ तु इवार्थकस्य वस्य प्रयोग , न इवशब्दस्य ।

**चादिः स्वरोऽनाङ् । १ । २ । ३६ ।**

आङ्वर्जश्चादिरव्ययः स्वरः स्वरे परेऽसन्धिः स्यात् । अ

अपेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, आ एव किल मन्यसे, आ एवं नु तत् । अनाङिति किम् ? आ ईषद् उष्णम्—ओष्णम्, आ आगच्छ—आगच्छ, आ उदकान्ताद्—ओदकान्तात् । ईषदर्थे क्रियायोगे मर्यादायामभिविधौ आ इत्यव्ययं ङित् कथ्यते, अन्यत्र तु अङित् बोध्यम् ।

**ओदन्तः । १ । २ । ३७ ।**

ओकारान्तश्चादि स्वरे परेऽसन्धि स्यात् । अहो अत्र, उताहो अत्र ।

**प्लुतोऽनितौ । १ । २ । ३२ ।**

यत्र स्वाभाविकोच्चारणापेक्षयाऽधिकोच्चारण तद् दूरं आमन्त्रणमभिमुखीकरणम् दूरादामन्त्रणार्थे वर्तमानस्य वाक्यस्य हे. प्लुतसंज्ञा ज्ञेया । इतिवर्जे स्वरे परे प्लुतोऽसन्धि स्यात् । भो देवदत्त ३ एहि, देवदत्त ३ अत्र न्वसि । अनिताविति किम्। सुश्लोक ३ इति—सुश्लोकेति ।

**इति प्रकृतिभावः समाप्तः ।**

---

## अथ व्यञ्जनसन्धिः ।

**धुटस्तृतीयः । २ । १ । ७६ ।**

पदान्ते वर्तमानस्य धुट. स्थाने तृतीय' स्यात् । वाक्+ईशः वागीशः, षट्+अत्र—षडत्र ।

**तृतीयस्य पञ्चमे । १ । ३ । १ ।**

पदान्ते वर्तमानस्य तृतीयस्य स्थाने पञ्चमे परे आसन्नो वाऽनु-नासिकः स्यात्। षड्+मम षण्मम । प्रत्यये पञ्चमे नित्यं षण्णाम्, वाङमयम् ।

**प्रथमादधुटि शश्छः । १ । ३ । ४ ।**

पदान्ते वर्तमानात प्रथमात् परस्य शकारस्याधुटि परे छो वा स्यात । वाक्+शूरः—वाक्छूरः, तत+श्लोकेन—तच्छ्लोकेन ।

**ततो हश्चतुर्थ' । १ । ३ । ३ ।**

पदान्ते वर्तमानात् तृतीयात् परस्य हकारस्य स्थाने पूर्ववर्णसवग-श्चतुर्थो वा स्यात् । वाग्घीन', वाग्हीन' । तद्द् हितं, तदधितम् ।

**तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ । १ । ३ । ६० ।**

तवर्गस्य स्थाने शकारेण चवर्गेण च योगे चवर्गः स्यात्, तथा षकारेण टवर्गेण च योगे टवर्गः स्यात । तत्+शेते—तच्छेते, भवान्+शेते—भवाञ्शेते, तत्+चित्रम्—तच्चित्रम्, पेष्+ता—पेष्टा, तत्+टीकते—तट्टीकते ।

**सस्य शषौ । १ । ३ । ६१ ।**

सकारस्य स्थाने शकारेण चवर्गेण च योगे शकारः स्यात् । तथा षकारेण टवर्गेण च योगे शकार. स्यात्। कस्+शेते–कश्शेते, कस्+चरति–कश्चरति, सर्पिष्+सु–सर्पिष्षु, कस्+टीकते–कष्टीकते।

**न शात् । १ । ३ । ६२ ।**

शकारात् परस्य तवर्गस्य चवर्गो न स्यात् । प्रश्नः, अश्नाति, विश्नः ।

**षि तवर्गस्य । १ । ३ । ६४ ।**

पदान्ते वर्तमानस्य तवर्गस्य स्थाने टवर्गो न स्यात् षकारे परे । भवान् षष्ठः ।

**लि लौ । १ । ३ । ६५ ।**

पदान्ते वर्तमानस्य तवर्गस्य स्थाने आसन्नो लकार. स्यात् । तद्+लुनाति–तल्लुनाति, भवान्+लिखति–भवाँल्लिखति ।

**पदान्ताट्टवर्गादनाम्नगरीनवतेः । १ । ३ । ६३ ।**

पदान्ते वर्तमानात् टवर्गात् परस्य नाम्नगरीनवतिवर्जितस्य तवर्गस्य सकारस्य च स्थाने टवर्ग-षकारौ न स्याताम्। षड्नयनम्, षट् सन्ति। पदान्तादिति किम्? ईड्टे। अनाम्नगरीनवतेरिति किम्? षण्णाम्, षण्णगरी, षण्णवतिः ।

**न शि ञ्च् । १ । २ । १९ ।**

पदान्ते वर्तमानस्य नकारस्य शकारे परे ञ्चू इत्यादेशो वा स्यात् । भवान्+शूरः–भवाञ्चूशूरः इति जाते 'प्रथमादधुटि' इत्यादिना छत्वे भवाञ्च्छूरः इति सिद्धम् ।

ङ्नः सः त्सोऽश्च । १ । ३ । १८ ।

पदान्ते वर्तमानाद् ङकाराद् नकाराच्च परस्य सकारस्य स्थाने त्स इत्यादेशः स्यात् । श्चावयवश्चेत् सकारो न स्यात् । षड्+सीदन्ति–षड्त्सीदन्ति, भवान्+साधुः–भवान्त्साधुः । अश्चेति किम् ? षट् श्चोतन्ति ।

नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे । १ । ३ । ८ ।

पदान्तस्थस्य प्रशान्वर्जशब्दसम्बन्धिनो नस्य चटतेषु सद्वितीयेषु अधुट्परेषु शषसा यथासंख्यं स्युः, अनुस्वारानुनासिकौ च पूर्वस्य । भवान्+चारु–भवांश्चारु, भवाँश्चारुः । भवान्+छेकः–भवांश्छेकः, भवाँश्छेकः । भवान्+टकः–भवांष्टक, भवाँष्टकः । भवान्+ठकारः–भवांष्ठकार, भवाँष्ठकारः । भवान्+तनुः–भवांस्तनुः, भवाँस्तनुः । भवान्+थुडति–भवांस्थुडति, भवाँस्थुडति । प्रशान्वर्जनं किम् । प्रशान्+चरः–प्रशाञ्चरः । अधुडिति किम् ? भवान् त्सरुकः ।

पुमोऽशिट्यघोषेऽख्यागि रः । १ । ३ । ९ ।

पुंस्शब्दस्य संयोगलुक्यनुकरणं पुम् इति । पुमो मस्य अघुट् परो यस्मात् तादृशो य शिट्ख्यागवर्जितोऽघोष तस्मिन् परे रादेशः स्याद् । पूर्वस्य चानुस्वारानुनासिकौ क्रमेण ।

पुंसः । २ । ३ । ३

पुसो रेफकारस्य कखे पफे च परे स् स्याद् । पुम्+कोकिलः— पुंस्कोकिल पुँस्कोकिल ।

नॄनः पेषु वा । १ । ३ । १० ।

नॄनो नकारस्य पे परे रकार स्याद् । पूर्वस्य चानुस्वारानुनासिकौ क्रमेण । नॄन्+पाहि—नॄं)(पाहि नॄँ)(पाहि नॄं पाहि नॄँः पाहि नॄन्पाहि ।

ह्रस्वाद् गणनो द्वे । १ । ३ । २७ ।

ह्रस्वात् परेषां पदान्ते वर्तमानानां गणनां स्वरे परे द्वे रूपे स्याताम् । कुङ्+आस्ते—कुङ्ङास्ते, सुगण्+इह—सुगण्णिह, पचन्+आस्ते—पचन्नास्ते ।

[illegible]ः । १ । ३ । २९ ।

स्वरात् परस्य पदान्तेऽपदान्ते च वर्तमानस्य छकारस्य द्वे रूपे स्याताम् । तव+छत्रम्—तवच्छत्रमिति जाते ।

अघोषे प्रथमोऽशिटः । १ । ३ । ५० ।

2

अघोषे परे शिड्वर्जस्य धुट प्रथम स्यादू । अनेन प्रथम-छकारस्य चत्वे कृते तवच्छत्रमिति सिद्धम्, एव इच्छति गच्छती स्यादयो ज्ञेयाः ।

**अनाङ्माङो दीर्घाद्‌ वा च्छः । १ । ३ । २८ ।**

आङ्माङ्वर्जदीर्घात् परस्य छकारस्य द्वे रूपे वा स्याताम् । कन्या+छत्रम्—कन्याच्छत्रम्, पक्षे एवम् । अनाङ्माडिति किम् । आच्छाया, माच्छिदत् इत्यादौ नित्यमेव ।

**तौ मुमो व्यञ्जने स्वौ । १ । ३ । १४ ।**

मोर्मु इत्यागमस्य मकारस्य पदान्तस्थस्य च मकारस्य व्यञ्जने परे परव्यञ्जनस्यैव स्वसंज्ञावनुस्वारानुनासिकौ क्रमेण स्याताम् । चंक्रम्यते, चङ्क्रम्यते, त्वंकरोषि, त्वङ् करोषि, त्वं पचसि, त्वम्पचसि, संयन्ता, सय्यँन्ता, संवत्सरः, सव्वँत्सर , त्वं छासि, त्वञ्छासि ।

**म्नां धुड्वर्गेऽन्त्योऽपदान्ते । १ । ३ । ३९ ।**

अपदान्ते वर्तमानानां मकारनकाराणां धुट्संज्ञके वर्गे परे तस्यैव स्वोऽन्त्यः स्याद् । गम्+ता—गन्ता; शन्+किता—शङ्किता ।

**शिड्हेऽनुस्वारः । १ । ३ । ४ ।**

अपदान्तस्थाना मकारनकाराणां शिटि हे च परेऽनुस्वारः स्याद् कम्+सः—कंसः, यशान्+सि—यशांसि ।

**मनयवलपरे हे । १ । ३ । १५ ।**

मनयवलपरे हकारे पदान्तस्थस्य मकारस्यानुस्वारानुनासिकौ स्वौ क्रमेण स्याताम् । किंह्मलयति, किम्ह्मळयति, किंह्नुते, किन्ह्नुते, किंह्यलयति, किँह्वलयति, किंह्लादयति, किल्ँह्लादयति ।

**स्सटि समः । १ । ३ । १२ ।**

समित्येतस्य स्सटि परे सकारोऽन्तादेश स्याद्, अनुस्वारानुनासिकौ च पूर्वस्य । सम्+स्कर्ता—संस्स्कर्ता, सँस्स्कर्ता ।

**लुक् । १ । ३ । १३ ।**

समित्येतस्य मकारस्य लुक् स्याद्, पृथग्योगाद् नानुस्वारानुनासिकौ स्त । सस्कर्ता ।

**ङ्णोः कटावन्तौ शिटि नवा । १ । ३ । १७ ।**

ङ्कारणकारयोः शिटि परे कटावन्तौ वा स्याताम् । प्राङ्शेते—प्राङ्क्शेते, प्राङ्क्छेते, सुगण् षष्ठ, सुगण्ट्षष्ठ ।

**इति व्यञ्जनसन्धिः**

---

# अथ विसर्गसन्धिः



**चटते सद्वितीये । १ । ३ । ७ ।**

पदान्ते वर्तमानस्य रकारस्य सद्वितीयेषु चटतेषु परेषु यथासंख्यं शषसा इत्येते आदेशा स्युः । कर्+चरति–कश्चरति, कर्+टीकते–कष्टीकते, कर् तरति–कस्तरति ।

**शिट्यघोषात् । १ । ३ । ५५ ।**

अघोषात् परे शिटि परे पदान्ते वर्तमानस्य रेफस्य विसर्ग एव भवति । कर्+त्सरुकः–कःत्सरुक, वासर्+क्षौमम्–वासः क्षौमम्, सर्पिर्+प्सातिर्–सर्पि प्साति ।

**व्यत्यये लुग् वा । १ । ३ । ५६ ।**

शिट् परोऽघोष इति व्यत्ययस्तस्मिन् परे पदान्ते वर्तमानस्य रेफस्य लुग् वा स्याद् । कर्+ष्ठीवति–कष्ठीवति, पक्षे कष्ष्ठीवति, कः ष्ठीवति ।

**शषसे शषसं वा । १ । ३ । ६ ।**

पदान्ते वर्तमानस्य रेफस्य शषसेषु परेषु यथासंख्यं शषसा वा स्युः । कर्+शेते–कश्शेते, कःशेते, कर्+षण्ढ–कष्षण्ढः, कः षण्ढः; कर्+साधुः–कस्साधुः, कः साधुः पक्षे ' रः पदान्ते विसर्गस्तयोः ' इत्यनेन विसर्ग. ।

**रः कखपफयोः)(क≍पौ । १ । ३ । ५ ।**

पदान्ते रेफस्य)(क≍पौ यथासंख्यं वा स्यातां कख–पफयोः परयो. । कर्+करोति–क)(करोति, पक्षे विसर्ग· कः करोति; एवं कर्+खनति–क)(खनति, क खनति, कर्+पचति–क≍ पचति, क. पचति, कर्+फलति–क≍फलति, क. फलति । कस्+साधुः अत्र ' सोरुः ' इत्यनेन रुत्वे कर्+साधुरिति जाते

**रः पदान्ते विसर्गस्तयोः । १ । ३ । ५३ ।**

पदान्ते वर्तमानस्य रेफस्य विसर्ग स्याद्, विरामेऽघोषे च परे । क साधु. । वाचस्पत्यादय संज्ञाशब्दा· निपातनात् सिद्धा भवन्ति वाचस्पति, बृहस्पति दिवस्कर, तत् शब्दस्य करे परे चौरार्थे वाच्ये तस्कर इत्यादयः ।

**अह्नः । २ । १ । ७४ ।**

अहन्शब्दस्य पदान्ते रुरित्ययमादेश स्याद् । स च परे सर्वत्रासन्–पूर्वत्र च स्यादिविधौ । दीर्घाणि अहानि यस्मिन् स दीर्घाहो निदाघ. ।

**रो लुप्यरि । २ । १ । ७५ ।**

अहन् शब्दस्य लुपि सत्यामरेफे परे पदान्ते र् इत्यन्तादेशः स्याद् । अहर्गण., अहरधीते । अरीति किम् । अहोरूपम्, अहोरात्रम्, अहोरथन्तरमित्यादौ रेफादेशाभावाद् रुत्वे उत्वे च कृते ' अवर्णस्य ' इत्यादिनौत्वे कृते रूपाणि सिध्यन्ति ।

**अतोऽति रो रुः । १ । ३ । २० ।**

पदान्ते वर्तमानादकारात् परस्य रोरकारे परे उ इत्ययमादेशः स्याद् । कर्+अर्थ इति स्थिते कउ अर्थ इति जाते 'अवर्णस्ये-त्यादिनौत्वे कृते को अर्थ. इति जाते 'एदोतः पदान्तेऽस्य लुक्' इत्यनेनाकारस्य लुकि कोऽर्थः इति सिद्धमेवं देवोऽर्च्य. इत्यादयः ।

**रो रे लुक् दीर्घश्चादिदुतः । १ । ३ । ४१ ।**

रेफस्य रेफे परेऽनु लुक् स्याद् । पूर्वस्य चाकारस्येकारस्यो-कारस्य च दीर्घ स्याद् । पुनर्+रमते—पुना रमते, अग्निर्+रथेन—अग्नीरथेन, पटुर्+राजा पटूराजा ।

**ढस्तड्ढे । १ । ३ । २४ ।**

ढकारस्य तन्निमित्ते ढकारे परेऽनु लुक् स्याद्, पूर्वस्य च दीर्घः । लिढ्+ढम्—लीढम् ।

**घोषवति । १ । ३ । २१ ।**

पदान्ते वर्तमानस्याकारात् परस्य गे घोषवति परे उ इत्या-देशः स्याद् । कर्+गत—को गतः, देवर्+याति—देवो याति ।

**अवर्णभोभगोऽघो लुगसन्धिः । १ । ३ । २२ ।**

अवर्णाद् भोभगोऽघोभ्यश्च परस्य रोर्लुक् स्याद् घोषवति परे । देवार्+यान्ति—देवा यान्ति, भोर्+याहि—भोयाहि, भगोर्+याहि—भगोयाहि । अघोर्+हससि—अघोहससि ।

## रोर्यः । १ । ३ । २६ ।

अवर्णाद् भोभगोऽघोभ्यश्च परस्य पदान्ते वर्तमानस्य रोः स्वरे परे य इत्यादेश स्याद् । तस्य च ' स्वरे वा ' इत्यनेन वा लुक् । देवार्+अत्र–देवायत्र, देवा अत्र । कर्+इह–कयिह, क इह । भोर्+अत्र–भोयत्र, भो अत्र । ओघोर्+अत्र–अघोयत्र, अघोअत्र । भगोर्+अत्र–भगोयत्र, भगोअत्र । अत्र लुकि सत्या सन्धिर्न भवतीति ।

## वाहर्पत्यादयः । १ । ३ । ५८ ।

अहर्पत्यादय· शब्दा निपातनात् साधवो भवन्ति वा । अहर्पतिः, अह पति, अहᳲपति, गीर्पति, गी पति, गीᳲपतिः, धूर्पति, धू पति, धूᳲपति इत्यादय· ।

## एतदश्च व्यञ्जनेऽनग्नञ्समासे । १ । ३ । ४६ ।

एतदस्तदश्च परस्य सेर्लुक् स्याद व्यञ्जने परे । अकि प्रत्यये नञ्समासे च न स्याद् । स+चरति–स चरति, एष+गच्छति–एष गच्छति । अनगिति किम् । एपको याति । अनञ्समासे किम् । अनेषो याति ।

## तदः सेः स्वरे पादार्था । १ । ३ । ४५ ।

तद परस्य सेर्लुक् स्यात् स्वरे परं । सा चेत् पादार्था–पादपूरणी स्याद् । सैष दाशरथी रामः सैष राजा युधिष्ठिर· ।

सैष कर्णो महात्यागी सैष भीमो महाबलः । १ । बाहुलकादपि किञ्चिज्ज्ञातव्यम्, तदुक्तम्—

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥१॥

अनुक्तं सिद्धहेमव्याकरणादवसेयम् ।

इति विसर्गसन्धिः

---

## अथ विभक्तिर्निगद्यते

---

**स्त्यादिर्विभक्तिः । १ । १ । १९ ।**

अत्र सृ इति त्यक्तानुबन्धस्य सेर्ग्रहणम्, तीति त्यक्तानुबन्धस्य तिव् इत्यस्य ग्रहणम्, स्यादय सुप्पर्यन्तास्तिवादयः स्यामहिपर्यन्ताश्च विभक्तिसंज्ञा स्युः ।

**तदन्तं पदम् । १ । १ । २० ।**

स्याद्यन्तं त्याद्यन्तं च नाम पदसंज्ञं स्याद् ।

**अधातुविभक्तिवाक्यमर्थवन्नाम ।**

नाम्नोऽर्थो द्विविधः—वाच्यो द्योत्यश्च । तत्र वाच्योऽर्थः स्वार्थद्रव्यलिङ्गसंख्याशक्तिभेदात् पञ्चप्रकारः यमाश्रित्य शब्दोऽर्थ-

कथने प्रवर्तते स स्वार्थस्त्वतलाद्यभिन्यङ्ग्य. जात्यादिरूपः । द्रव्यं तदाश्रयीभूतं घटादिरूपम् । लिङ्गं पुंस्त्वादि । संख्या एकत्वादिका । शक्ति कर्तृत्वादिरूपा । द्योत्योऽर्थ समुच्चयादिरूपः । तद्वच्छब्दरूपं धातुविभक्तिवाक्यवर्जितं नामसंज्ञं स्याद् । नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति—

| एकवचनम्, | द्विवचनम्, | बहुवचनम्, | |
|---|---|---|---|
| सि | औ | जस् | प्रथमा |
| अम् | औ | शस् | द्वितीया |
| टा | भ्याम् | भिस् | तृतीया |
| ङे | भ्याम | भ्यस् | चतुर्थी |
| ङसि | ,, | ,, | पञ्चमी |
| ङस् | ओस् | आम् | षष्ठी |
| ङि | ओस् | सुप् | सप्तमी |
| सि | औ | जस् | संबोधनम् |

तत्राकारान्तपुंलिङ्गो जिनशब्द । जिन सि । इति स्थिते इ इत्यस्य इत्संज्ञायां सत्याम् ।

सो रुः । २ । १ । ७२ ।

पदान्ते वर्तमानस्य सकारस्य रुरित्यादेश स्याद् । उकारः 'रोर्य' इत्यत्र विशेषणार्थ. । तत 'र: पदान्ते विसर्गस्तयोः'

इत्यनेन विसर्गे सति जिनः इति सिद्धम् । द्वित्वविवक्षायां जिन औ —जिनौ । बहुत्वविवक्षायां जिन जस् इति स्थिते, जकारो जसीति विशेषणार्थः । जिन अस्

**लुगस्यादेत्यपदे । २ । १ । ११३ ।**

अपदादावकारे एकारे च परेऽकारस्य लुक् स्याद् । इति अकारस्य लुच प्राप्तौ ।

**अत आः स्यादौ जस्भ्याम्ये । १ । ४ । १ ।**

स्यादौ जसि भ्यामि यकारे च परेऽकारस्याकार स्यात् । इत्यनेन बाधनादकारस्य आकारे कृते दीर्घविसर्गौ जिना. । द्वितीयैकवचने जिन अम् इति स्थिते—

**समानादमोऽतः । १ । ४ । ४६ ।**

समानात् परस्यामोऽकारस्य लुक् स्याद् । जिनम्, जिनौ । बहुत्वविवक्षायां जिन शस् इति स्थिते—

**शसोऽता सश्च नः पुंसि । १ । ४ । ४९ ।**

शस् संबन्धिनोऽकारेण सह पूर्वसमानस्यात्रो दीर्घादेशः स्याद्, तत्संनियोगे च पुंलिङ्गविषये शसः सकारस्य नकारादेश· स्याद् । जिनान् । तृतीयैकवचने जिन टा इति स्थिते—

**टाङसोरिनस्यौ । १ । ४ । ५ ।**

अकारात् परयोः स्याद्योः टाङसोर्यथासंख्यमिनस्यौ स्याताम् ।

' अवर्णस्येवर्णादिनेतिसूत्रेण एत्वे कृते जिनेन । जिन भ्याम् इति स्थिते ' अत आः स्यादौ ' इत्यादिना दीर्घेकृते जिनाभ्याम् । बहुत्वविवक्षाया जिन भिस् इति स्थिते ।

**भिस ऐस् । १ । ४ । २ ।**

अकारात् परस्य भिस ऐसादेश स्याद् । ' ऐदौत् सन्ध्यक्षरैः ' इति जिनैः । चतुर्थ्येकवचने जिन ङे इति स्थिते—

**ङेङस्योर्यातौ । १ । ४ । ६ ।**

अकारात् परयोः स्यादिसंबन्धिनोर्ङेङस्यो स्थाने यथासंख्यं य आत् इत्यादेशौ स्त । ' अत आ ' इत्यादिसुत्रेण दीर्घे जिनाय । जिनाभ्याम् । बहुत्वविवक्षाया जिन भ्यस् इति स्थिते—

**एद् बहुस्भोसि । १ । ४ । ४ ।**

बह्वर्थविषये सकारादौ भकारादौ ओसि च परेऽकारस्यैकारः स्याद् । जिनेभ्य । पञ्चम्येकवचने जिन ङसि इति स्थिते 'ङेङस्योर्यातौ' इत्यनेन आति कृते दीर्घे च जिनात् । जिनाभ्याम् । जिनेभ्य । षष्ठ्येकवचने जिन ङस् इति स्थिते 'टाङस्योरिनस्यौ' इत्यनेन स्यादेशे जिनस्य । जिन ओस् इति स्थिते 'एद्बहुस्भोसि' इत्यनेन एकार ' एदैतोऽयाय् ' इत्ययादेशे जिनयो । षष्ठीबहुवचने जिन आम् इति स्थिते ।

**ह्रस्वापश्च । १ । ४ । ३२ ।**

ह्रस्वान्तादाबन्तात् स्त्रीदूदन्ताच्च परस्यामः स्थाने नामादेशः स्याद् । जिन नाम् इति जाते—

**दीर्घो नाम्यतिसृचतसृषूः । १ । ४ । ४७ ।**

तिसृचतसृषकारान्तरेफान्तवर्जितस्य शब्दसंबन्धिनः समानस्य दीर्घादेशः स्याद् नामि परे । जिनानाम् । सप्तम्येकवचने जिन ङि इति स्थिते ' अवर्णस्येवर्णादिनेति ' सूत्रेण एत्वे जिने । जिनयोः । बहुत्वविवक्षाया जिन सु इति स्थिते ' एद् बहुस्भोसि ' इत्यनेनैत्वे कृते ।

**नाम्यन्तस्थाकवर्गात् पदान्तः कृतस्य-**
**सः शिड्नान्तरेऽपि । २ । ३ । १५ ।**

नाम्यन्तादन्तस्थात् कवर्गाच्च परस्य पदमध्ये स्थितस्य विहितस्य कृतसंबन्धिनो वा सकारस्य षकारादेश स्याद्, शिटा नकारेण च व्यवधानेऽपि । जिनेषु । संबोधनविवक्षायामेकवचने जिन सि इति स्थिते ।

**अदेतः स्यमोर्लुक् । १ । ४ । ४४ ।**

आमंत्रणार्थे वर्तमानादकारान्तादेकारान्ताच्च परयोः स्यमोः लुक् स्याद् । हे जिन । हे जिनौ । हे जिनाः । एवम् अजित संभवादीनामपि रूपाणि वेदितव्यानि । अकारान्तसर्वादीना तु विशेषः—सर्वः । सर्वौ । सर्व जस् इति स्थिते

**जस इ । १ । ४ । ९ ।**

सर्वादेरकारान्तसंबन्धिनो जस इः स्याद् । 'प्रत्ययस्य' इति सर्वादेशे सर्वे । सर्व सर्वौ सर्वान् । सर्व टा इति स्थिते टाप्रत्ययस्येनादेशे कृते अवर्णस्येत्यादिना एत्वे कृते ।

**रषृवर्णाद् नो णः एकपदेऽनन्त्यस्या-**
**लचटतवर्गशसान्तरे । २ । ३ । ६३ ।**

रेफषकारऋवर्णेभ्यः परस्य रषृवर्णैः सहैकपदे स्थितस्यानन्त्यस्य नकारस्य णकारादेशः स्याद् । न चेद् निमित्तनिमित्तिनोरन्तरे लकारचटतवर्गाः शसौ च सन्ति । सर्वेण । सर्वाभ्याम् । सर्वैः । सर्व ङे इति स्थिते—

**सर्वादेः स्मैस्मातौ । १ । ४ । ७ ।**

अकारान्तसर्वादेः सम्बन्धिनोर्ङेङस्योः स्थाने यथासंख्यं स्मैस्मातौ । स्त सर्वस्मै सर्वाभ्यां सर्वेभ्यः । सर्वस्मात् सर्वाभ्यां सर्वेभ्यः । सर्वस्य सर्वयोः । सर्व आम् इति स्थिते ।

**अवर्णस्यामः साम् । १ । ४ । १५ ।**

अवर्णान्तस्य सर्वादेरामः स्थाने सामादेशः स्याद् । शेषं पूर्ववत् सर्वेषाम् । सर्व ङि इति स्थिते ।

**ङेः स्मिन् । १ । ४ । ८ ।**

सर्वादेरकारान्तसम्बन्धिनो ङेः स्थाने स्मिन् इत्यादेशः । स्यात् ।

सर्वस्मिन् सर्वयोः सर्वेषु । हे सर्व हे सर्वौ हे सर्वे । सर्व विश्व उभ उभयट् अन्य अन्यतर इतर डतर डतम त्वद् नेम, समसिमौ सर्वार्थौ, पूर्वपरापरदक्षिणोत्तरावराधरा एते सप्त व्यवस्थार्थाः, स्वशब्द आत्मात्मीयार्थः, अन्तरः अपूर्बहिर्योगार्थः उपसंव्यानार्थश्च, त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् एते सर्वादयोऽसञ्ज्ञाया सर्वादिकार्यभाजो भवन्ति । उभशब्दो नित्यं द्विवचनार्थः उभौ उभौ उभाभ्यां उभाभ्यां उभाभ्यां उभयोः उभयोः । नास्य सर्वादिनिमित्तकं विभक्तिकार्यं, गणपाठस्तु हेत्वर्थप्रयोगे सर्वविभक्त्यर्थः, उभौ हेतू, उभाभ्यां हेतुभ्याम्, उभयो हेत्वोः । उभयट् इत्यत्र टकारो ङीप्रत्यार्थः उभयीदृष्टि । उभयट्शब्दस्य द्विवचनं नास्ति, केषाचिद् मते द्विवचनमपि तन्मते सर्वशब्दवद् रूपाणि । उभयः उभये । उभयम् उभयान । उभयेन उभयैः । उभयस्मै उभयेभ्यः उभयस्माद् उभयस्य । उभयेषाम् । उभयस्मिन् उभयेषु । अन्यः अन्यौ अन्ये । अन्यम् अन्यौ अन्यान् इत्यादयः । तरोत्तरपदोऽन्यतरशब्दोऽव्युत्पन्नः, अन्यतरः अन्यतरौ अन्यतरे इत्यादय । डतरडतमौ प्रत्ययौ ततस्तदन्ताः कतरकतमादयः शब्दा ग्राह्याः एतौ च स्वार्थिकौ प्रत्ययाविति प्रकृतिग्रहणेनैव तद्ग्रहणसिद्धेः तयोरस्मिन् प्रकरणे ग्रहणमन्येषां स्वार्थिकप्रत्ययान्तानाम् निषेधार्थं पृथक्त्वेन कृतम् । कतरः कतरौ कतरे । कतरम् कतरौ कतरान्, कतरेण, कतरस्मै कतरस्माद् कतरेषाम् कतरस्मिन् । एवं कतमः । पूर्वः पूर्वौ ।

**नवभ्यः पूर्वेभ्य इस्मात्स्मिन् वा । १ । ४ । १६ ।**

पूर्वादिभ्यो नवभ्य परे ये इ स्मात् स्मिन् आदेशा उक्तास्ते वा स्यु । पूर्वे पूर्वा । पूर्वस्मात पूर्वात् । पूर्वस्मिन् पूर्वे । एव परादीनाम् । शेपं सर्ववत्

**तीयं ङित्कार्ये वा । १ । ४ । १४ ।**

तीयप्रत्ययान्तं ङित्कार्ये सर्वादिर्वा स्याद् । द्वितीयस्मै द्वितीयाय । द्वितीयस्माद् द्वितीयाद् । द्वितीयस्मिन् द्वितीये । शेषं रामवद् ।

**नेमार्धप्रथमचरमतयायाल्पकतिपयस्य वा । १ । ४ । १० ।**

नेमादीनि नामानि तयायौ प्रत्ययौ तेषा जस इर्वा स्याद् । नेमे नेमा शेषं सर्ववत् । अर्धे अर्धा । प्रथमे प्रथमा । चरमे चरमाः । द्वितये द्वितया । द्वये द्वया । अल्पे अल्पा । कतिपये कतिपया । शेष जिनवत् । अकारान्तपुलिङ्गो मासशब्द. । मासः मासौ मासा । मासं मासौ ।

**मासनिशासनस्य शसादौ लुग् वा । २ । १ । १०० ।**

एषां शसादौ स्यादौ परे लुगन्तादेशो वा स्याद् । मासः मासान् । मासा मासेन । माभ्या मासाभ्याम् । माभि. मासै । मासे मासाय । माभ्यां मासाभ्याम् । माभ्यः मासेभ्य । मासः मासात् । माभ्या मासाभ्याम् । माभ्यः मासेभ्यः । मास मासस्य । मासोः

मासयोः । मासां मासानाम् । मासि मासे । मासोः मासयोः । मास्सु मासेषु । आसूना आसनेन । आकारान्तपुंलिङ्ग सोमपा-शब्दः—सोमपा सोमपौ सोमपाः । सोमपाम् सोमपौ ।

लुगातोऽनापः । २ । १ । १०७ ।

आब्वर्जितस्याकारस्यङीस्याद्युट्स्वरे परे लुकस्याद् । सोमपः । सोमपा सोमपाभ्याम् सोमपाभिः सोमपे सोमपाभ्या सोमपाभ्यः । सोमपः सोमपाभ्या सोमपाभ्यः सोमपः सोमपो. सोमपाम् सोमपि सोमपोः सोमपासु हे सोमपाः हे सोमपौ हे सोमपा । एवं विश्वपाः शंखध्मा हाहा इत्यादय । इकारान्तपुंलिङ्गो मुनिशब्दः—मुनि मुनि औ इति स्थिते

इदुतोऽस्त्रेरीदूत् । १ । ४ । २१ ।

स्त्रीवर्जितस्येदन्तस्योदन्तस्य च औता सह यथासंख्यमीदूता-वादेशौ स्याताम् । मुनी । मुनि जस् इति स्थिते ।

जस्येदोत् । १ । ४ । २२ ।

इदन्तस्योदन्तस्य च जसि परे यथासंख्यमेदोतौ स्याताम् । अयादेशे मुनयः । मुनिम् । मुनी । मुनीन् । मुनि टा इति स्थिते—

टः पुंसि ना १ । ४ । २४ ।

इदन्तादुदन्ताच्च परस्य टाप्रत्ययस्य स्थाने ना इत्यादेशः स्याद् । मुनिना । मुनिभ्याम मुनिभिः । मुनि ङे इति स्थिते ।

ङित्यदिति । १ । ४ । २३ ।

अदिति ङिति स्यादौ परे इदन्तस्योदन्तस्य च यथासङ्ख्यमेदोतौ स्याताम् । मुनये । मुनिभ्याम् । मुनिभ्य ।

**एदोद्भ्यां ङसिङसो रः । १ । ४ । ३५ ।**

एदोद्भ्या परयोर्ङसिङसो स्थाने र इत्यादेश स्यात् । मुने । मुनिभ्याम् । मुनिभ्य । मुने । मुन्यो । मुनीनाम् । मुनि+ङि इति स्थिते ।

**ङिर्डौ । १ । ४ । २५ ।**

इदुदन्तात् परस्य ङिप्रत्ययस्य डौ इत्यादेश स्यात् ।

**डित्यन्त्यस्वरादेः । २ । १ । ११४ ।**

डिति परेऽन्त्यस्वरादेर्लुक् स्यात् । मुनौ । मुन्यो । मुनिषु । सम्बोधने मुनि+सि इति स्थिते ।

**ह्रस्वस्य गुणः । १ । ४ । ४१ ।**

आमन्त्रणे वर्तमानस्य ह्रस्वस्य सिना सह गुण स्यात् । हे मुने । हे मुनी । हे मुनय । एवं रवि–नेमि–कवि–प्रभृतय । एवमुकारान्ता कुन्थु–साधु–भिक्षु–भानु–विष्णु–वायु–प्रभृतयोऽप्येतैरेव सूत्रै साधनीया । कुन्थु । कुन्थू । कुन्थव । कुन्थुम् । कुन्थू । कुन्थून् । कुन्थुना । कुन्थुभ्याम् । कुन्थुभि । कुन्थवे । कुन्थुभ्याम् । कुन्थुभ्यः । कुन्थो । कुन्थुभ्याम् । कुन्थुभ्यः । कुन्थो । कुन्थ्वो । कुन्थूनाम् । कुन्थौ । कुन्थ्वो । कुन्थुषु ।

हे कुन्थो । हे कुन्थू । हे कुन्थव॰ । सखिशब्दस्य विशेष — सखि+सि इति स्थिते ।

**ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डा । १ । ४ । ८४ ।**

ऋकारान्तादुशनस. पुरुदंशस इकारान्तसखिशब्दाच्च परस्य शेषस्य सेर्डादेश॰ स्यात् । डित्त्वादन्त्यस्वरादेर्लोपे सखा । शेषस्येति विशेषणाद् हे सखे । सखि+औ इति स्थिते ।

**सख्युरितोऽशावैत् । १ । ४ । ८३ ।**

इदन्तस्य सखिशब्दस्य तत्सम्बन्धिनि वाऽन्यसम्बन्धिनि शिवर्जिते शेषे घुटि परे एकारान्तादेश. स्यात् । आयादेशे सखायौ । सखाय॰ । सखायम् । सखायौ । सखीन् । सखि+टा इति स्थिते ।

**न नाङिदेत् । १ । ४ । २७ ।**

केवलसखिपतिभ्या परस्य टाप्रत्ययस्य नादेश, ङिति परे एकारश्चोक्तः स न स्यात् । सख्या । सखिभ्याम् । सखिभिः । सख्ये । सखिभ्याम् । सखिभ्य । सखि+ङसि इति स्थिते ङकारस्येत्सञ्ज्ञायां सत्याम् ' इवर्णादे ' इत्यादिना यत्वे सख्य्+अस् इति जाते ।

**खितिखीतीय उर् । १ । ४ । ३६ ।**

खितिखीतीसम्बन्धिन इवर्णस्य स्थाने यो यकारस्तस्मात् परयो ङसिङसो स्थाने उरादेशः स्यात् । सख्युः । सखिभ्याम् ।

सखिभ्य. । सख्यु· । सख्यो । सखीनाम् । सखि+ङि इति स्थिते ।

केवलसखिपतेरौ । १ । ४ । २६ ।

इदुदन्ताभ्या केवलसखिपतिभ्यां परस्य ङेरौ इत्यादेशः स्यात् । सख्यौ । सख्यो । सखिषु । हे सखे । हे सखायौ । हे सखाय । एवं पतिः पती पतय । पतिम् पती पतीन् । पत्या पतिभ्याम् पतिभि । पत्ये पतिभ्याम् पतिभ्य । पत्युः पतिभ्याम् पतिभ्य. । पत्यु पत्यो पतीनाम् । पत्यौ पत्योः पतिषु । केवलेति विशेषणात् समासे तु मुनिवद्—भूपति भूपती भूपतय । भूपतिम् भूपती भूपतीन् । भूपतिना भूपतिभ्याम् भूपतिभि । भूपतये भूपतिभ्याम् भूपतिभ्य· । भूपते· भूपतिभ्याम् भूपतिभ्य. । भूपतेः भूपत्योः भूपतीनाम् । भूपतौ भूपत्यो भूपतिषु । एवं सुसखा सुसखायौ सुसखायः । सुसखायम् सुसखायौ सुसखीन् । सुसखिना सुसखिभ्याम् सुसखिभि इत्यादय । नित्यद्विवचनान्तो द्विशब्द — द्वि+औ इति स्थिते ।

आ द्वेरः । २ । १ । ४१ ।

द्विशब्दमभिव्याप्य त्यदादीनामन्त्यस्य तत्सम्बन्धिनि स्यादौ परे तसादौ च तद्धिते परेऽकारादेश स्यात् । द्व+औ द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयो. । द्वयो । त्रिशब्दो नित्यं बहुवचनान्त । त्रय । त्रीन् । त्रिभि । त्रिभ्य । त्रिभ्य· । त्रि+आम् इति स्थिते ।

**त्रेस्त्रयः । १ । ४ । ३४ ।**

आम्सम्बन्धिनः त्रिशब्दस्य त्रयादेशः स्यात् । त्रयाणाम् । त्रिषु । कतिशब्दो नित्यं बहुवचनान्तः त्रिषु लिङ्गेषु सदृशश्च । कति+जस् इति स्थिते ।

**डत्यतु संख्यावत् । १ । १ । ३९ ।**

डतिप्रत्ययान्तमत्वन्तं च नाम संख्यावत् स्यात् ।

**डतिष्णः संख्याया लुप् । १ । ४ । ५४ ।**

डतिप्रत्ययान्तात् षकारान्ताद् नकारान्ताच्च संख्यावाचिनः परस्य जस्शसोर्लुप् स्यात् । कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । लुक् इत्यनेन सिद्धे लुब्विधानं स्थानिवद्भावबाधनार्थम् । ईकारान्तपुंलिङ्गः सुश्रीशब्दः । सुश्री सुश्री+औ इति स्थिते ।

**धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये । २ । १ । ५० ।**

धातोरिवर्णोवर्णयोः स्वरादौ प्रत्यये परे यथासंख्यमियुवौ स्याताम् । सुश्रियौ । सुश्रियः । सुश्रियम् । सुश्रियौ । सुश्रियः । सुश्रिया । सुश्रीभ्याम् । सुश्रीभिः 'वेयुवोऽस्त्रियाः' इत्यनेन सुश्रियै सुश्रिये । सुश्रीभ्याम् । सुश्रीभ्यः । सुश्रियाः सुश्रियः । सुश्रीभ्याम् । सुश्रीभ्यः । सुश्रियाः सुश्रियः । सुश्रियोः । सुश्रियाम् सुश्रीणाम् । सुश्रियां सुश्रियि । सुश्रियोः । सुश्रीषु । हे सुश्रीः

सुश्रियौ सुश्रिय । क्रीभिरित्यादीनां नित्यस्त्रीत्वाभावाद् दै दास् दास् दाम् इत्यादय आदेशा ङितां प्रत्ययस्थाने न भवन्तीति यवक्रिये । यवक्रिय । यवक्रियः । यवक्रियाम् । यवक्रियि । शेष सुश्रीवत् । एवं स्वयम्भू स्वयंभुवौ स्वयंभुव. । स्वयभुवम् स्वयं-भुवौ स्वयंभुव. । स्वयभुवा स्वयभूभ्यां स्वयंभूभि· । स्वयंभुवे स्वयं-भूभ्या स्वयँभूभ्य । स्वयभुवः स्वयभूभ्या स्वयंभूभ्य· । स्वयंभुवः स्वयंभुवोः स्वयभुवाम् । स्वयभुवि स्वयंभुवोः स्वयंभूषु ।

**आमो नाम् वा । १ । ४ । ३१ ।**

इयुवस्सम्बन्धिनौ यौ नित्यस्त्रीदूतौ ताभ्यां परस्य तत्सम्बन्धिनो वाऽन्यसम्बन्धिन आमो नाम् वा स्यात् । सुश्रीणा सुश्रियाम् । सेनानीशब्दस्य विशेष.—सेनानीः ।

**क्विब्वृत्तेरसुधियस्तौ । २ । १ । ५८ ।**

क्विप्प्रत्ययान्तेनैव या समासवृत्तिस्तस्या सुधीशब्दादन्यस्याः सम्बन्धिनो धातोरिवर्णोवर्णयोः स्वरादौ स्यादौ परे यथासंख्यं य् व् इत्येतौ आदेशौ स्याताम् । सेनान्यौ सेनान्य । सेनान्यम् सेनान्यौ सेनान्य । सेनान्या सेनानीभ्याम् सेनानीभि. । सेनान्ये सेनानीभ्याम् सेनानीभ्य. । सेनान्य. सेनानीभ्यां सेनानीभ्यः । सेनान्य सेनान्यो· सेनान्याम् । सेनानी+ङि इति स्थिते ।

**निय आम् । १ । ४ । ५१ ।**

निय. सम्बन्धिनो ङेराम् स्यात् । सेनान्याम् सेनान्योः सेना-

नीषु । हे सेनानी सेनान्यौ सेनान्य । एवं ग्रामणीः । यवलूः यवल्वौ यवल्वः । यवल्वम् यवल्वौ यवल्व । यवल्वा यवलूभ्यां यवलूभिः । यवल्वे यवलूभ्या यवलूभ्य । यवल्व यवलूभ्याम् यवलूभ्य । यवल्व यवल्वोः यवल्वाम् । यवल्वि यवल्वो यव-लूषु । हे यवलू यवल्वौ यवल्व. ।

### दृन्पुनर्वर्षाकारैर्भुव । २ । १ । ५९ ।

दृनादिभिः सह या क्विब्वृत्ति. तत्सम्बन्धिन एव भुवो धातोरु-वर्णस्य स्वरादौ स्यादौ परे व् आदेशः स्यात् । दृन्भूः दृन्भ्वौ दृन्भ्वः । दृन्भ्वम् दृन्भ्वौ दृन्भ्वः । दृन्भ्वा दृन्भूभ्याम् दृन्भूभिः । दृन्भ्वे दृन्भूभ्य म् दृन्भूभ्यः । दृन्भ्वः दृन्भूभ्याम् दृन्भूभ्यः । दृन्भ्वः दृन्भ्वोः दृन्भ्वाम् । दृन्भ्वि दृन्भ्वोः दृन्भूषु । हे दृन्भूः दृन्भ्वौ दृन्भ्वः । 'क्विब्वृत्तेः—' इत्यादिना सिद्धे पृथग्योगारम्भ भुव एभि-रेवेति नियमार्थस्तेन स्वयम्भुवावित्यादावुवादेश एव । ईकारान्तो वातप्रमीशब्दः—वातप्रमीः वातप्रम्यौ वातप्रम्य । वातप्रमीम् वातप्रम्यौ वातप्रमीन् । वातप्रम्या वातप्रमीभ्याम् वातप्रमीभिः । वातप्रम्ये वातप्रमीभ्या वातप्रमीभ्य. । वातप्रम्यः वातप्रमीभ्यां वातप्रमीभ्यः । वातप्रम्यः वातप्रम्यो वातप्रम्याम् । वातप्रमी वातप्रम्यो वातप्रमीषु । हे वातप्रमी वातप्रम्यौ वातप्रम्यः । ऊकारान्तो हूहूशब्दः ।, हूहूः हूह्वौ हूह्व. । हूहूम् हूह्वौ हूहून् । हूह्वा हूहूभ्यां हूहूभिः । हूह्वे हूहूभ्यां हूहूभ्य. । हूह्वः

हूहूभ्या हूहूभ्य । हूह्व हूह्वोः हूह्वाम् । हूह्वि हूह्वो. हूहूषु । हे हूहू हूह्वौ हूह्व । ऋकारान्त॰ पितृशब्द । पितृ+सि इति स्थिते 'ऋदुशनस्पुरुदंशो–' इत्यादिना सेर्डा, डित्त्वादन्त्यस्वरादिलोपे पिता । पितृ+औ इति स्थिते ।

अर्डौ च । १ । ४ । ३९ ।

ऋकारान्तस्य डौ घुटि च परे अर् आदेश स्यात् । पितरौ •पितर॰ । पितरम् पितरौ पितॄन् । पित्रा पितृभ्या पितृभि॰ । पित्रे पितृभ्या पितृभ्य । पितृ+ङसि इति स्थिते ।

ऋतो डुर् । १ । ४ । ३७ ।

ऋकारात् परयोर्ङसिङसो॰ स्थाने डुरित्यादेश॰ स्यात् । पितुः पितृभ्या पितृभ्य । पितु पित्रो पितॄणाम् । पितरि पित्रोः पितृषु । आमन्त्रणे ' ह्रस्वस्य गुण ' इति गुणे हे पित पितरौ पितर । एवं जामातृ–भ्रातृ–प्रभृतय. । ना नरौ नरः । नरम् नरौ नॄन् । न्रा नृभ्या नृभि । न्रे नृभ्यां नृभ्य । नु नृभ्या नृभ्य. । नु न्रो । नृ+आम् इति स्थिते नामादेशे ।

नुर्वा । १ । ४ । ४८ ।

नृशब्दस्य नामि परे दीर्घो वा स्यात् । नृणां नॄणाम् । नरि न्रोः नृषु । हे नः नरौ नरः । कर्तृ+सि कर्ता । कर्तृ+औ इति स्थिते ।

## तृ-स्वसृ-नप्तृ-नेष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्त्रो घुट्यार् । १ । ४ । ३८ ।

तृ इति तृच्-तृनोर्ग्रहणम्, तदन्तस्य स्वस्रादेश्च ऋतः स्थाने घुटि परे आर् आदेशः स्यात् । कर्तारौ कर्तारः । कर्तारम् कर्तारौ कर्तॄन् । कर्त्रा कर्तृभ्यां कर्तृभिः । कर्त्रे कर्तृभ्यां कर्तृभ्यः । कर्तुः कर्तृभ्यां कर्तृभ्यः । कर्तुः कर्त्रोः कर्तॄणाम् । कर्तरि कर्त्रोः कर्तृषु । हे कर्तः कर्तारौ कर्तारः । एवं नप्ता नप्तारौ नप्तारः । नेष्टा नेष्टारौ नेष्टारः । क्षत्ता क्षत्तारौ क्षत्तारः । होता होतारौ होतारः । पोता पोतारौ पोतारः । प्रशास्ता प्रशास्तारौ प्रशास्तारः । इत्यादयः । क्रोष्टु+सि इति स्थिते ।

## क्रुशस्तुनस्तृच् पुंसि । १ । ४ । ९१ ।

क्रुशः सम्बन्धिनस्तुनः शेषे घुटि परे तृचादेशः स्यात् । क्रोष्टा क्रोष्टारौ क्रोष्टारः । क्रोष्टारं क्रोष्टारौ क्रोष्टून् । क्रोष्टु+टा इति स्थिते ।

## टादौ स्वरे वा । १ । ४ । ९२ ।

टादौ स्वरादौ परे क्रुशस्तुनस्तृच् वा स्यात् । क्रोष्ट्रा क्रोष्टुना । क्रोष्टुभ्यां क्रोष्टुभिः । क्रोष्ट्रे क्रोष्टवे । क्रोष्टुभ्यां क्रोष्टुभ्यः । क्रोष्टुः क्रोष्टोः । क्रोष्टुभ्यां क्रोष्टुभ्यः । क्रोष्टुः क्रोष्टोः । क्रोष्ट्वोः । क्रोष्टु+आम् इति स्थिते नित्यानित्ययोर्नित्यविधेर्बलीयस्त्वात् प्रथममेवामो नामि कृते क्रोष्टूनाम् । क्रोष्टरि क्रोष्टौ क्रोष्ट्वोः क्रोष्टुषु । सम्बोध-

नेसौ शेषघुटोऽभावात् तचोऽभावाद् हे क्रोष्टो क्रोष्टारौ क्रोष्टारः। एकारान्त. अतिहेशब्द·—अतिहेः अतिहयौ अतिहय.। अतिहयम् अतिहयौ अतिहय.। अतिहया अतिहेभ्याम् अतिहेभिः। अतिहये अतिहेभ्याम् अतिहेभ्यः। अतिहेः अतिहेभ्याम् अतिहेभ्य·। अतिहेः अतिहयोः अतिहयाम्। अतिहयि अतिहयोः अतिहेषु। सम्बोधने अतिहे+सि इति स्थिते। 'अदेतः' इत्यादिना सेर्लुकि हे अतिहे अतिहयौ अतिहयः। ऐकारान्तः सुरैशब्दः। सुरै+सि इति स्थिते।

## आ रायो व्यञ्जने। २। १। ५।

रैशब्दस्य तत्सम्बन्धिनि व्यञ्जनादौ स्यादौ परे आकारः स्यात्। सुरा सुरायौ सुराय। सुरायम् सुरायौ सुराय.। सुराया सुराभ्याम् सुराभिः। सुराये सुराभ्याम् सुराभ्य.। सुरायः सुराभ्याम् सुराभ्यः। सुरायः सुरायो सुरायाम्। सुरायि सुरायोः सुरासु। हे सुरा· सुरायौ सुराय·। एवम् अतिरै–प्रभृतयः। ओकारान्तपुंलिङ्गो गोशब्द·। गो+सि इति स्थिते।

## ओत औः। १। ४। ७४।

ओकारस्य घुटि परे औकारादेशः स्यात्। गौ गावौ गाव। गो+अम् इति स्थिते।

## आ अम्शसोऽता। १। ४। ७५।

ओकारस्य अमः शसश्चाकारेण सह आः स्यात्। गाम् गावौ

गाः। गवा गोभ्या गोभिः। गवे गोभ्या गोभ्य·। गो· गोभ्यां गोभ्य.। गोः गवो. गवाम्। गवि गवो· गोषु। हे गौ गावौ गावः। एवं सुद्यो—प्रभृतय.। औकारान्तो ग्लौशब्द्। ग्लौ ग्लावौ ग्लावः। ग्लावं ग्लावौ ग्लावः। ग्लावा ग्लौभ्या ग्लौभि·। ग्लावे ग्लौभ्यां ग्लौभ्यः। ग्लाव ग्लौभ्यां ग्लौभ्य। ग्लाव ग्लावो ग्लावाम्। ग्लावि ग्लावोः ग्लौषु। हे ग्लौ. हे ग्लावौ हे ग्लावः।

**इति स्वरान्तपुंलिङ्गप्रक्रिया समाप्ता।**

---

## अथ स्वरान्ताः स्त्रीलिङ्गाः

---

आबन्त सुभद्राशब्दः—सुभद्रा+सि इति स्थिते।

**दीर्घङ्याब्व्यञ्जनात् सेः। १। ४। ४५।**

दीर्घाभ्या ङ्य.बन्ताभ्या व्यञ्जनाच्च परस्य सेर्लुक स्यात्। सुभद्रा। सुभद्रा+औ इति स्थिते।

**औता। १। ४। २०।**

आबन्तस्य सम्बन्धिना औकारेण सह आपः स्थाने एकारादेशः स्यात्। सुभद्रे। सुभद्राः। सुभद्राम् सुभद्रे सुभद्राः। सुभद्रा+टा इति स्थिते।

**टौस्येत्। १। ४। १९।**

आबन्तस्य एकार स्यात्, टा ओस् इत्येतयो· परयो । सुभ-द्रया सुभद्राभ्या सुभद्राभि । सुभद्रा+ङे इति स्थिते ।

**आपो ङितां यै यास् यास् याम् । १ । ४ । १७ ।**

आबन्तस्य ङिता ङेङसिङसङीना स्थाने यथासख्यं यै यास् यास् याम् इत्येते आदेशा भवन्ति । सुभद्रायै सुभद्राभ्या सुभद्राभ्य । सुभद्राया सुभद्राभ्या सुभद्राभ्य. । सुभद्राया सुभद्रयो· सुभद्रा-णाम् । सुभद्राया सुभद्रयो सुभद्रासु । सम्बोधने सुभद्रा+सि इति स्थिते ।

**एदापः । १ । ४ । ४२ ।**

आमन्त्र्यार्थे वर्तमानस्याबन्तस्य सिना सहैकारादेश स्यात् । हे सुभद्रे हे सुभद्रे हे सुभद्रा । एवं चन्दना–रमा–सुरसा–यशा–शाला–माला–हेला–दोलाऽऽदीनां रूपाणि ज्ञेयानि ।

**नित्यदिद्द्विस्वराम्बार्थस्य ह्रस्वः । १ । ४ । ४३ ।**

येभ्य· शब्देभ्य परेषा ङितां स्थाने दै–दासादय आदेशा नित्यं स्युस्ते नित्यदित, तेषा द्विस्वराणामम्बार्थानामाबन्तानां चामन्त्रणार्थे सिना सह ह्रस्व स्यात् । हे अम्ब । हे अक्क । हे अल्ल । शेषं सुभद्रावत् । अम्बाडा–अम्बाला–अम्बिकादीना द्विस्व-राभावाद् ह्रस्वाभवनेन सुभद्रावत् सर्वाणि रूपाणि । आबन्ताना सर्वादीनां ङित्प्रत्यये विशेष । सर्वा+ङे इति स्थिते । यै इत्यादेशे कृते ।

**सर्वादेर्डस्पूर्वाः । १ । ४ । १८ ।**

सर्वादेराबन्तस्य परेषां ङितां स्थाने ये यै–यास्–यास्–याम् आदेशाः कथितास्ते डस्पूर्वा स्यु. । डित्त्वादन्त्यस्वरादिलोपे सर्वस्यै । सर्वस्याः । सर्वस्या. । सर्वासाम् । सर्वस्याम् । शेष सुभद्रावत् । एवं विश्वादीनामपि स्त्रिया रूपाणि बोध्यानि । उभयशब्दस्य टित्त्वाद् ङीप्रत्यये एकवचने बहुवचने च नदीवद् रूपाणि । तीयप्रत्ययान्तानां द्वितीयादीनां ङित्कार्ये सर्वादिवद् विकल्पेन भवनाद् द्वितीयस्यै द्वितीयायै । द्वितीयस्या. द्वितीयाया' । द्वितीयस्या. द्वितीयाया. । द्वितीयस्याम् द्वितीयायाम् । शेषं सुभद्रावद् ।

आकारान्तो जराशब्दः । जरा । जरा+औ इति स्थिते ।

**जराया जरस् वा । २ । १ । ३ ।**

स्वरादौ स्यादौ परे जराया जरसादेशो वा स्यात् । जरसौ जरे । जरसः जराः । जरसं जराम् जरसौ जरे जरस. जराः । जरसा जरया जराभ्यां जराभि. । जरसे जरायै जराभ्यां जराभ्य' । जरसः जरायाः जराभ्या जराभ्य' । जरसः जरायाः जरसोः जरयोः जरसां जराणाम् । जरसि जरायां जरसोः जरयोः जरासु । हे जरे हे जरसौ जरे हे जरसः जराः । जरामतिक्रान्तः अतिजरः । अत्रापि 'एकदेशविकृतमनन्यवद्' इति न्यायाद् जर इत्यस्य जरसादेशो भवति । अतिजरः अतिजरसौ अतिजरौ अतिजरसः अतिजराः । अतिजरसम् अतिजरम् अतिजरसौ अतिजरौ अतिजरसः

अतिजरान् । अतिजरसा अतिजरेण अतिजराभ्याम् अतिजरसैः अतिजरे. । अतिजरसे अतिजराय अतिजराभ्याम् अतिजरेभ्य । अतिजरस अतिजराद अतिजराभ्याम् अतिजरेभ्य· । अतिजरस अतिजरस्य अतिजरसो अतिजरयो अतिजरसाम् अतिजराणाम् । अतिजरसि अतिजरे अतिजरसो· अतिजरयो अतिजरेषु । हे· अतिजर हे अतिजरसौ अतिजरौ हे अतिजरसः अतिजरा । केचित्तु टाप्रत्ययस्य इनादेशे ङसेश्चादादेशे सति पश्चाद् जरसादेशमिच्छन्ति, तन्मते अतिजरसिना । अतिजरसाद् । इति विशेष । अतिजरशब्दस्य स्त्रियामपि अतिजरा । तस्य न जरसादेश इति सुभद्रावद् रूपाणि । इकारान्तस्त्रीलिङ्गो बुद्धिशब्द· । घुटि परे मुनिवद्—बुद्धि बुद्धी बुद्धय. । बुद्धि बुद्धी बुद्धी. । बुद्ध्या बुद्धिभ्यां बुद्धिभि । बुद्धि+ङे इति स्थिते ।

## स्त्रिया ङितां वा दै दास् दास् दाम् । १ । ४ । २८ ।

स्त्रीलिङ्गे वर्तमानादिदुदन्तात् परेषां ङितां स्थाने दै दास् दास् दाम् इत्येते आदेशा वा स्यु । दकारो नित्यदिदिति विशेषणार्थः । बुद्ध्यै बुद्धये बुद्धिभ्यां बुद्धिभ्य. । बुद्ध्या बुद्धे· बुद्धिभ्या बुद्धिभ्य । बुद्ध्या बुद्धे बुद्ध्यो· बुद्धीनाम् । बुद्ध्या बुद्धौ बुद्ध्यो. बुद्धिषु । हे बुद्धे हे बुद्धी हे बुद्धयः । एवं धृति—मति—कीर्ति—कान्ति—प्रभृतीनामपि रूपाणि । धेनु—तनु—रज्जु—प्रभृतीनामपि तैस्तैरेव सूत्रैः बुद्धिवद्रूपाणि सिद्ध्यन्ति । धेनु धेनू धेनव. । धेनुं धेनू धेनूः । धेन्वा

धेनुभ्यां धेनुभिः । धेन्वै धेनवे धेनुभ्यां धेनुभ्यः । धेन्वाः धेनोः धेनुभ्या धेनुभ्यः। धेन्वाः धेनोः धेन्वो धेनूनाम्। धेन्वा धेनौ धेन्वो धेनुषु । हे धेनो धेनू धेनवः । ङीप्रत्ययान्त ईकारान्तो नदीशब्दः । नदी+सि इति स्थिते ' दीर्घङ्याब्—' इत्यादिना सेर्लुचि नदी नद्यौ नद्यः । नदीं नद्यौ नदीः । नद्या नदीभ्या नदीभिः । नदी+ङे इति स्थिते ।

## स्त्रीदूतः । १ । ४ । २९ ।

नित्यस्त्रीलिङगे वर्तमानादीकारान्तादूकारान्ताच्च परेषां ङितां स्थाने यथासंख्यं दै दास् दास् दाम् इत्येत आदेशा नित्यं स्युः । नद्यै नदीभ्या नदीभ्यः । नद्याः नदीभ्यां नदीभ्यः । नद्याः नद्योः नदीनाम् । नद्यां नद्योः नदीषु । हे नदि हे नद्यौ हे नद्यः । एवं ब्राह्मी—कुमारी—सुन्दरी—उभयी—गौर्यादीनामपि ।

## स्त्रियाम् । १ । ४ । ९३ ।

क्रुशः परस्य तुनः स्त्रियां तृजादेशः स्यात् । निर्निमित्त एव । तत ऋकारान्तत्वाद ङीप्रत्यये क्रोष्ट्री । तस्य नदीवद्रूपाणि । ईकारान्तो लक्ष्मीशब्दः । तस्य ङीप्रत्ययान्तत्वाभावान्न सेर्लुक् । लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः । हे लक्ष्मीः हे लक्ष्म्यौ हे लक्ष्म्यः । एवम् अवी—तरी—तन्त्री—ह्री—धी—श्रीणां सेर्लुग् न भवति । अवीः। तरीः । तन्त्रीः । ह्रीः । धीः । श्रीः । शेषं नदीवत् । ह्री—धी—

श्रीणां तु विशेषोऽग्रे वक्ष्यते । ईकारान्तो ङीप्रत्ययान्तः स्त्रीशब्दः स्त्री । स्त्री+औ इति स्थिते ।

स्त्रियाः । २ । १ । ५४ ।

स्त्रीशब्दस्य स्वरादौ स्यादौ परे इयादेशः स्यात् । स्त्रियौ । स्त्रियः ।

वाऽम्शसि । २ । १ । ५५ ।

स्त्रीशब्दस्यामि शसि च परे इयादेशो वा स्यात् । स्त्रियं स्त्रीम् । स्त्रियौ । स्त्रियः स्त्रीः । स्त्रिया स्त्रीभ्यां स्त्रीभिः । ङितां दै–दासाद्यादेशे सति इयादेशे च स्त्रियै स्त्रीभ्यां स्त्रीभ्यः । स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः । स्त्रियाः स्त्रियोः स्त्रीणाम् । स्त्रियां स्त्रियोः स्त्रीषु । हे स्त्रि हे स्त्रियौ हे स्त्रियः । ईकारान्तश्रीशब्दः । जनो या श्रयते सा श्रीः । स्वरादौ परे 'धातोरिवर्णो–' इत्यादिना इयादेशे श्रियौ श्रियः । श्रियं श्रियौ श्रियः । श्रिया श्रीभ्यां श्रीभिः । श्री+ङे इति स्थिते ।

वेयुवोऽस्त्रियाः । १ । ४ । ३० ।

इयुवस्थानिनौ यौ नित्यस्त्रीलिङ्गे वर्तमानावीकारोकारौ तदन्तात् परेषां ङितां स्थाने दै दास् दास् दाम् इत्यादेशा वा स्युः । स्त्रीशब्दं वर्जयित्वा । श्रियै श्रिये श्रीभ्यां श्रीभ्यः । श्रियाः श्रियः श्रीभ्यां श्रीभ्यः । श्रियाः श्रियः श्रियोः श्रीणां श्रियाम् ।

श्रियां श्रियि श्रियोः श्रीषु । हे श्रीः हे श्रियौ हे श्रियः । एवं ह्री—धीप्रभृतय । ऊकारान्तो भ्रूशब्द । भ्रूः । भ्रू+औ इति स्थिते

भ्रू—श्नोः । २ । १ । ६३ ।

भ्रू—श्नोरुवर्णस्य स्वरादौ स्यादौ परे उवादेशः स्यात् । भ्रुवौ भ्रुवः । भ्रुवं भ्रुवौ भ्रुवः । भ्रुवा भ्रूभ्यां भ्रूभिः । भ्रुवै भ्रुवे भ्रूभ्यां भ्रूभ्यः । भ्रुवाः भ्रुवः भ्रूभ्यां भ्रूभ्यः । भ्रुवाः भ्रुवः भ्रुवोः भ्रुवां भ्रूणाम् भ्रुवां भ्रुवि भ्रुवोः भ्रूषु । हे भ्रूः भ्रुवौ भ्रुवः । एवं सुभ्रूः । हे सुभ्रु इति तूङन्तस्य । ऊङन्तो वधूशब्दः । वधूः वध्वौ वध्वः । वधूं वध्वौ वधूः । वध्वा वधूभ्यां वधूभिः । वध्वै वधूभ्यां वधूभ्यः । वध्वाः वधूभ्यां वधूभ्यः । वध्वाः वध्वोः वधूनाम् । वध्वां वध्वोः वधूषु । हे वधु हे वध्वौ हे वध्वः । एवं करभोरू—जम्बूप्रभृतीनां रूपाणि ज्ञेयानि । ऋकारान्तः स्वसृशब्दः । स्वसा स्वसारौ स्वसारः । स्वसारं स्वसारौ स्वसॄः स्त्रीत्वाद् नत्वाभावः । स्वस्रा स्वसृभ्यां स्वसृभिः । स्वस्रे स्वसृभ्यां स्वसृभ्यः । स्वसुः स्वसृभ्यां स्वसृभ्यः । स्वसुः स्वस्रोः स्वसॄणाम् । स्वसरि स्वस्रोः स्वसृषु । हे स्वसः हे स्वसारौ हे स्वसारः । मातृशब्दः—माता मातरौ मातरः । मातरं मातरौ मातॄः । शेषं पितृवत् । एवं ननान्दृ । रैशब्दस्य सुरैशब्दवद्रूपाणि । नौशब्दस्य ग्लौशब्दवद्—नौः नावौ नावः । नावं नावौ नावः । नावा नौभ्यां नौभिः । इत्यादयः ।

इति स्वरान्तस्त्रीलिङ्गप्रकरणम् ।

---

## अथ स्वरान्तनपुंसकलिङ्गाः ।

अकारान्तो नपुंमकलिङ्ग कुलशब्दः—कुल+सि इति स्थिते ।

**अतः स्यमोऽम् । १ । ४ । ५७ ।**

अकारान्तनपुसकसम्बन्धिनो स्यमोरमादेशः स्यात् । कुलम् । कुल+औ इति स्थिते

**औरीः । १ । ४ । ५६ ।**

नपुंसकसम्बन्धिन औप्रत्ययस्य स्थाने ईकारः स्यात् । कुले । कुल+जस् इति स्थिते

**नपुंसकस्य शिः । १ । ४ । ५५ ।**

नपुंसकसम्बन्धिनोर्जस्–शसो' शि' स्यात् । शकारः 'शिर्घुट्' इत्यत्र विशेषणार्थः । कुल+इ इति स्थिते ।

**स्वराच्छौ । १ । ४ । ६५ ।**

जस्–शसादेशे शौ परे स्वरान्ताद् नपुसकात् परो नोऽन्तादेशः स्यात् ।

**नि दीर्घः । १ । ४ । ८५ ।**

शेषे घुटि परे यो नकारस्तस्मिन् परे पूर्वस्य स्वरस्य दीर्घः स्यात् । कुलानि । कुलं कुले कुलानि । शेष देववत् । एवं धन-वन—मूल–फल–सर्व–विश्वादय ॥ अन्य+सि इति स्थिते

**पञ्चतोऽन्यादेरनेकतरस्य दः । १ । ४ । ५८ ।**

4

नपुंसकानामन्यान्यतरेतर-डतर-डतमाना पञ्चानां सम्बन्धिनोः स्यमोः स्थाने द् स्याद्, एकतरं वर्जयित्वा। अन्यद् अन्ये अन्यानि। अन्यद् अन्ये अन्यानि। अन्यतरद् अन्यतरे अन्यतराणि। अन्यतरद अन्यतरे अन्यतराणि। इतरद् इतरे इतराणि। इतरद् इतरे इतराणि। कतरद् कतरे कतराणि। कतरद् कतरे कतराणि। कतमद् कतमे कतमानि। कतमद् कतमे कतमानि। सम्बोधनेऽपि हे कतमद् इत्यादय। अत्र सिस्थानीयस्यामो लुग्विधानात् 'अदेतः स्यमोर्लुक्' इति द्लुग् न भवति। शेषं सर्ववत्॥ प्रथमं प्रथमे प्रथमानि। द्वितीयं द्वितीये द्वितीयानि। द्वयं द्वये द्वयानि। चरमं चरमे चरमाणि। एकतरम् एकतरे एकतराणि इत्यादयः॥

इकारान्तो नपुसकलिङ्गोऽस्थिशब्दः—अस्थि+सि इति स्थिते

## अनतो लुप्। १। ४। ५९।

अकारान्तभिन्नस्य नपुंसकस्य सम्बन्धिनोः स्यमोर्लुप् स्यात्। अस्थि। अस्थि+औ अत्र औ इत्यस्य 'औरीः' इत्यनेन ईकारादेशे।

## अनाम्स्वरे नोऽन्तः। १। ४। ६४।

नाम्यन्तस्य नपुंसकस्य आम्वर्जस्वरादौ स्यादौ परे नोऽन्तः स्यात्। अस्थिनी। अस्थि+जस् इति स्थिते 'जस्शसोः शिः' 'स्वराच्छौ' 'नि दीर्घः' इत्येतैः अस्थीनि। पुनरपि अस्थि अस्थिनी अस्थीनि। अस्थि+टा इति स्थिते

**दध्यस्थि-सक्थ्यक्ष्णोऽन्तस्यान् । १ । ४ । ६३ ।**

एषां नपुंसकनाम्यन्तानां तदन्तसम्बन्धिनि टादौ स्वरादौ परेऽन्तस्य अन् स्यात् । इत्यन्तस्यानादेशे

**अनोऽस्य । २ । १ । १०८ ।**

अनोऽकारस्य ङीप्रत्यये स्याद्यघुट्स्वरादौ च परे लुक् स्यात् । अस्थ्ना अस्थिभ्याम् अस्थिभिः । अस्थ्ने अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थ्नोः अस्थ्नाम् । अस्थन्+ङि इति स्थिते

**ईङौ वा । २ । १ । १०९ ।**

अनोऽकारस्य औप्रत्ययादेशे ईकारे ङौ च परे लुग् वा स्यात् । अस्थ्नि अस्थनि अस्थ्नोः अस्थिषु । सम्बोधने

**नामिनो लुग् वा । १ । ४ । ६१ ।**

नाम्यन्तस्य नपुंसकस्य स्यमोर्लुग् वा स्यात् । लुच स्थानिवद्भावेन 'ह्रस्वस्य गुणः' हे अस्थे । लुगभावपक्षे लुग्भवनात् तस्य च स्थानिवद्भावाभवनाद् हे अस्थि अस्थिनी अस्थीनि ॥ एवं दधि दधिनी दधीनि । दधि दधिनी दधीनि । दध्ना दधिभ्यां दधिभिः । दध्ने दधिभ्यां दधिभ्यः । दध्न दधिभ्यां दधिभ्यः । दध्नः दध्नो दध्नाम् । दध्नि दधनि दध्नोः दधिषु । हे दधे हे दधि हे दधिनी हे दधीनि । एवं सक्थ्यक्ष्णोरपि ॥

ईकारान्तो नपुंसकलिङ्गो ग्रामणीशब्दः—

## क्लीबे वा । २ । ४ । ९७ ।

स्वरान्तस्य नपुंसकस्य ह्रस्वः स्यात् । ग्रामणि+सि । सेर्लुपि ग्रामणि ग्रामणिनी ग्रामणीनि । ग्रामणि ग्रामणिनी ग्रामणीनि । ग्रामणी+टा इति स्थिते

## वाऽन्यतः पुमांष्टादौ स्वरे । १ । ४ । ६२ ।

यो नाम्यन्तशब्दोऽन्यतो विशेषवशाद् नपुंसको जातः स टादौ स्वरे परे पुवद् वा स्यात् । अन्यतो नपुसकस्य 'उक्तपुंस्क' इति पारिभाषिकं नाम तत्स्वरूपम्—एक एव हि य शब्द, त्रिषु लिङ्गेषु वर्तते । एकमेवार्थमाख्याति, उक्तपुंस्कं तदुच्यते ॥ १ ॥ ग्रामणीशब्दो यथा पुंलिङ्गे वर्तमानो ग्रामकर्मकनीधात्वर्थं क्रियारूपं स्वार्थमभिधत्ते तमेव स्वार्थरूपमर्थं नपुंसके वर्तमानोऽपीति स उक्तपुंस्कः । न च पीलुशब्द, पुंस्त्वे वृक्षत्वजातिरूपस्वार्थाभिधानात् क्लीबे फलत्वजातिरूपस्वार्थाभिधानाच्च । पुंवद्भावपक्षे यत्वमन्यत्र नोऽन्तत्वम् । ग्रामण्या ग्रामणिना ग्रामणिभ्यां ग्रामणिभिः । ग्रामण्ये ग्रामणिने ग्रामणिभ्यां ग्रामणिभ्य । ग्रामण्यः ग्रामणिन. ग्रामणिभ्यां ग्रामणिभ्यः । ग्रामण्यः ग्रामणिनः ग्रामण्योः ग्रामणिनोः ग्रामण्यां ग्रामणीनाम् । 'निय आम्' ग्रामण्यां ग्रामणिनि ग्रामण्योः ग्रामणिनो. ग्रामणिषु । हे ग्रामणि हे ग्रामणे हे ग्रामणिनी हे ग्रामणीनि ॥ यवक्रीशब्दः-यवक्रि यवक्रिणी यवक्रीणि । पुनरपि तदेव । यवक्रिया यवक्रिणा पुंवत्पक्षे 'संयोगाद्' इतीयादेश. । यवक्रिभ्यां

यवक्रिभि· । यवक्रिये यवक्रिणे यवक्रिभ्यां यवक्रिभ्य. । यवक्रियः यवक्रिण यवक्रिभ्यां यवक्रिभ्यः । यवक्रियः यवक्रिण· यवक्रियोः यवक्रिणो. यवक्रियां यवक्रीणाम् । यवक्रियि यवक्रिणि यवक्रियोः यवक्रिणो यवक्रिषु । हे यवक्रे यवक्रि यवक्रिणी यवक्रीणि ॥ प्रधि-शब्द·—प्रधि प्रधिनी प्रधीनि । पुनरपि तदेव । प्रध्या प्रधिना पुंव-द्भावे ' क्विब्वृत्तेः—' इत्यादिना यत्वं ङ्यादिपरे च दै—दासादयः । प्रधिभ्या प्रधिभिः । प्रध्यै प्रधिने प्रधिभ्या प्रधिभ्य । प्रध्याः प्रधिनः प्रधिभ्यां प्रधिभ्य । प्रध्याः प्रधिन प्रध्यो प्रधिनो. प्रधीनामि-त्येकमेव । प्रध्या प्रधिनि प्रध्यां· प्रधिनो प्रधिषु ॥ सुधीशब्दस्य तु ' क्विब्वृत्ते —' इत्यादौ वर्जनाद् यत्वाभावेन इयादेशे ' वेयुवोऽ-स्त्रिया ' इत्यनेन विकल्पेन दै—दासादिभवनेन प्रधीशब्दाद् विशेष.। सुधियै सुधिये सुधिने । सुधिया· सुधिय सुधिनः । सुधियाः सुधियः सुधिनः । ' आमो नाम् वा ' सुधियां सुधीनाम् । सु-धिया सुधियि सुधिनि । शेषं प्रधिशब्दवत् ॥ आकारान्तः सोमपा-शब्द , तस्यापि ' क्लीबे ' इति ह्रस्वे सोमपं सोमपे सोमपानि । सोमपं सोमपे सोमपानि । शेषं कुलवत् । वारिशब्दः—वारि वारिणी वारीणि । वारि वारिणी वारीणि । वारिणा वारिभ्या वारिभिः । वारिणे वारिभ्यां वारिभ्य· । वारिण वारिभ्या वारिभ्यः । वारिणः वारिणो वारीणाम् । वारिणि वारिणो· वारिषु । हे वारे वारि वा-रिणी वारीणि ॥ उकारान्त. पीलुशब्द·—पीलु पीलुनी पीलूनि । पुन-रपि तदेव । पीलुना पीलुभ्यां पीलुभिः । पीलुने पीलुभ्यां पीलुभ्यः

पीलुनः पीलुभ्यां पीलुभ्यः। पीलुनः पीलुनोः पीलूनाम्। पीलुनि पीलुनोः पीलुषु। हे पीलो पीलु पीलुनी पीलूनि॥ उकारान्त सुलुशब्द— सुलु सुलुनी सुलूनि। सुलु सुलुनी सुलूनि। विकल्पेन पुंवद्भवनाद्— सुल्वा सुलुना सुलुभ्या सुलुभिः। सुल्वे सुलुने सुलुभ्या सुलुभ्य। सुल्वः सुलुनः सुलुभ्यां सुलुभ्यः। सुल्वः सुलुन सुल्वो सुलुनोः सुल्वां सुलूनाम्। सुल्वि सुलुनि सुल्वो सुलुनो सुलुषु। सम्बोधने पीलुवत्। एवं यवपु—वृक्षधु—प्रभृतीनाम्। मधुशब्दस्य तु पीलुवत्॥ शोभना रा यस्य तत् सुरि। सुरैशब्दस्य ह्रस्वत्वे सुरि सुरिणी सुरीणि। पुनरपि तदेव। विकल्पेन पुंवद्भावे सुराया सुरिणा। सुराये सुरिणे। सुरायः सुरिणः। सुराय सुरिणः। सुराया सुरीणाम्। सुरायि सुरिणि। सुरायोः सुरिणोः। शेषं वारिवत्॥ ऋकारान्तो नपुंसकलिङ्गः कर्तृशब्दः—कर्तृ कर्तृणी कर्तॄणि। कर्तृ कर्तृणी कर्तॄणि। कर्त्रा कर्तृणा कर्तृभ्यां कर्तृभिः। कर्त्रे कर्तृणे कर्तृभ्यां कर्तृभ्यः। कर्तुः कर्तृण. कर्तृभ्या कर्तृभ्यः। कर्तुः कर्तृण कर्त्रोः कर्तृणोः कर्तॄणाम्। कर्तरि कर्तृणि कर्त्रोः कर्तृणोः कर्तृषु। हे कर्तः हे कर्तृ हे कर्तृणी हे कर्तॄणि॥ शोभना द्यौर्यस्मिन् तदिति क्लीबे ह्रस्वत्वे सुद्यु सुद्युनी सुद्यूनि। पुनरप्येवम्। पुंवद्भावे सुद्यवा सुद्युना। सुद्यवे सुद्युने। सुद्योः सुद्युनः। सुद्योः सुद्युनः सुद्यवो सुद्युनो सुद्यवां सुद्यूनाम्। सुद्यवि सुद्युनि सुद्यवोः सुद्युनोः। शेषं पीलुवत्।

**इति नपुंसकलिङ्गप्रक्रिया समाप्ता।**

---

# अथ व्यञ्जनान्ताः पुंलिङ्गाः ।

हकारान्तोऽनडुह्शब्द —अनडुह्+सि इति स्थिते

**वाः शेषे । १ । ४ । ८२ ।**

आमन्त्र्यविहितात् सेरन्यः शेषः । शेषे घुटि परेऽनडुह उकारस्य चतुर उकारस्य च वा· आदेश स्यात् । अनड्वाह्+सि इति स्थिते

**अनडुहः सौ । १ । ४ । ७२ ।**

घुडन्तस्यानडुहो घुट प्राक् सौ परे नोऽन्त स्यात् । अनड्वान्ह्+सि इति जाते

**पदस्य । २ । १ । ८९ ।**

पदान्ते वर्तमानस्य सयोगस्य लुगन्तादेश स्यात् । 'दीर्घङ्याब्–' इत्यादिना सेर्लुकि च अनड्वान् । अनड्वाहौ अनड्वाहः। अनड्वाहम् अनड्वाहौ अनडुहः । अनडुहा । अनडुह्+भ्याम् इति स्थिते

**स्रंस्–ध्वंस्–क्वस्सनडुहो दः । २ । १ । ६८ ।**

स्रंस–ध्वसो · न्तस्य क्वस्प्रत्ययान्तस्यानडुहश्च पदान्ते वर्तमानस्य दः स्यात् । अनडुद्भ्याम् अनडुद्भिः । अनडुहे अनडुद्भ्याम्

अनडुद्भ्यः । अनडुहः अनडुद्भ्याम् अनडुद्भ्यः । अनडुहः अनडुहोः अनडुहाम् । अनडुहि अनडुहोः अनडुत्सु । सम्बोधने

**उतोऽनडुच्चतुरो वः । १ । ४ । ८१ ।**

आमन्त्र्यार्थे वर्तमानयोरनडुच्चतुरोरुतो वः स्यात् । हे अनड्वन् । हे अनड्वाहौ हे अनड्वाहः ॥ हकारान्तो गोदुह्शब्दः— गोदुह्+सि इति स्थिते । सेर्लुकि पदान्तत्वाद्

**भ्वादेर्दादेर्घः । २ । १ । ८३ ।**

भ्वादेर्धातोर्यो दादिरवयवस्तस्य हकारस्य धुटि प्रत्यये परे पदान्ते च घादेशः स्यात् । गोदुघ्+इति जाते

**गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादे-**
**श्चतुर्थः स्ध्वोश्च प्रत्यये । २ । १ । ७७ ।**

गडदबादेश्चतुर्थान्तस्यैकस्वरस्य धातुरूपशब्दावयवस्यादेः स्थाने चतुर्थः स्यात् सादौ ध्वादौ प्रत्यये पदान्ते च । गोधुघ् इति जाते

**धुटस्तृतीयः । २ । १ । ७६ ।**

पदान्ते धुटस्तृतीयः स्यात् । गोधुग् । अत्र

**विरामे वा । १ । ३ । ५१ ।**

विरामस्थस्याशिटो धुटः प्रथमो वा स्यात् । गोधुक् गोधुग् गोदुहौ गोदुहः । गोदुहं गोदुहौ गोदुहः । गोदुहा गोधुग्भ्यां गोधुग्भिः । गोदुहे गोधुग्भ्यां गोधुग्भ्यः । गोदुहः गोधुग्भ्यां गोधु-

भ्य: । गोदुह गोदुहो: गोदुहाम् । गोदुहि गोदुहो गोधु२क्षु, खुषु । हे गोधुक् गोधुग् गोदुहौ गोदुहः ॥ हकारान्तो मधुलिह्शब्दः—

हो धुट्-पदान्ते । २ । १ । ८२ ।

धुटि प्रत्यये पदान्ते च हकारस्य ढादेशः स्यात् । मधुलिट् मधुलिड् मधुलिहौ मधुलिह: । मधुलिहं मधुलिहौ मधुलिहः । मधुलिहा मधुलिड्भ्या मधुलिड्भि । मधुलिहे मधुलिड्भ्या मधुलिड्भ्य । मधुलिह. मधुलिड्भ्या मधुलिड्भ्यः । मधुलिह: मधुलिहो: मधुलिहाम् । मधुलिहि मधुलिहो: मधुलिट्सु मधुलिठ्सु । हे मधुलिट् मधुलिड् हे मधुलिहौ हे मधुलिह ॥ तत्त्वमुह्शब्दः—

तत्त्वमुह्+सि इति स्थिते

मुह-द्रुह-ष्णुह-ष्णिहो वा । २ । १ । ८४ ।

एषां हकारस्य धुटि प्रत्यये पदान्ते च घादेशो वा स्यात् । पक्षे ढत्वम् । तत्त्वमुक्, तत्त्वमुग्, तत्त्वमुट्, तत्त्वमुड् तत्त्वमुहौ तत्त्वमुह: । तत्त्वमुहं तत्त्वमुहौ तत्त्वमुह: । तत्त्वमुहा तत्त्वमुग्भ्या, तत्त्वमुड्भ्यां तत्त्वमुग्भि:, तत्त्वमुड्भि: । तत्त्वमुहे तत्त्वमुग्भ्या तत्त्वमुड्भ्या तत्त्व-मुग्भ्यः तत्त्वमुड्भ्यः । तत्त्वमुहः तत्त्वमुग्भ्या, तत्त्वमुड्भ्यां तत्त्वमुग्भ्यः तत्त्वमुड्भ्यः । तत्त्वमुह तत्त्वमुहोः नत्त्वमुहाम् । तत्त्वमुहि तत्त्वमुहोः तत्त्वमुक्षु, मुख्षु, मुट्सु, मुठ्सु । हे तत्त्वमुक्, मुग्, मुट्, मुड् तत्त्वमुहौ तत्त्वमुहः ॥ मित्रद्रुह्शब्दस्य तु मित्रध्रुक् मित्रध्रुग् मित्रध्रुट् मित्रध्रुड्

मित्रद्रुहौ मित्रद्रुह. । मित्रद्रुहं मित्रद्रुहौ मित्रद्रुहः । मित्रद्रुहा मित्रध्रुग्भ्या, मित्रध्रुड्भ्या मित्रध्रुग्भि, मित्रध्रुड्भिः । मित्रद्रुहे मित्रध्रुग्भ्यां, मित्रध्रुड्भ्या मित्रध्रुग्भ्य., मित्रध्रुड्भ्यः । मित्रद्रुह. मित्रध्रुग्भ्यां, मित्रध्रुड्भ्यां मित्रध्रुग्भ्य, मित्रध्रुड्भ्य· । मित्रद्रुह मित्रद्रुहो· मित्रद्रुहाम् । मित्रद्रुहि मित्रद्रुहो मित्रध्रुक्षु, ध्रुख्षु ध्रुट्सु, ध्रुठ्सु । हे मित्रध्रुक्, ध्रुग्, ध्रुट्, ध्रुड् मित्रद्रुहौ 'मित्रद्रुह· । एवं तत्त्वस्नुह्—चेलस्निहादीनां यथायोग रूपाणि वक्तव्यानि ॥ रेफान्तश्च-तुर्शब्दो नित्यं बहुवचनान्तः—चतुर्+जस् इति स्थिते ' वाः शेषे ' इति वाऽऽदेशे रुत्वे विसर्गे च चत्वार. । चतुर । चतुर्भिः । चतुर्भ्यः । चतुर्भ्य । चतुर्णाम् । चतुर्षु । अत्र रो विसर्गे प्राप्ते

अरो· सुपि रः । १ । ३ । ८७ ।

रोरन्यस्य रकारस्य सुपि परे र् एव स्याद् । इति न विसर्ग. ॥ प्रियाश्चत्वारो यस्येति विग्रहे प्रियचतुर्शब्दस्य सौ परे वादेशे सेर्लुकि विसर्गे च प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । प्रियचत्वारं प्रियचत्वारौ प्रियचतुर· । अत्र शेपघुटोऽभावाद् न वाऽऽदेशः । प्रियचतुरा प्रियचतुर्भ्यां प्रियचतुर्भिः । प्रियचतुरे प्रियचतुर्भ्यां प्रियचतुर्भ्यः । प्रियचतुरः प्रियचतुर्भ्यां प्रिय-चतुर्भ्यः । प्रियचतुरः प्रियचतुरोः प्रियचतुराम् । अत्र चतुरो गौण-त्वात् तत्सम्बन्धिन आमोऽभावाद् न नामादेशः । प्रियाणां च तेषां चतुर्णां चेति कर्मधारये तत्पुरुषे वा चतुरः प्राधान्यात् प्रियचतुर्णा-

मिति भवत्येव। प्रियचतुरि प्रियचतुरो प्रियचतुर्षु। सम्बोधने सौ परे 'उतोऽनडुच्चतुरो व' इति वादेशे हे प्रियचत्वः प्रियचत्वारौ हे प्रियचत्वारः ॥ नकारान्तो राजन्शब्दः—राजन्+सि इति स्थिते। 'नि दीर्घः' इति दीर्घे सेर्लुकि

## नाम्नो नोऽनह्नः । २ । १ । ९१ ।

पदान्ते वर्तमानस्य नाम्नो नकारस्य लुक् स्यात्, स चेदह्न शब्दस्य न स्यात्। राजा राजानौ राजानः। राजानं राजानौ। राजन्+शस् इति स्थिते अनोऽकारस्य लुकि 'तवर्गस्य—'इत्यादिना नो ञत्वे ज्ञ्ञोः संयोगे ज्ञत्वे राज्ञः। राज्ञा राजभ्यां राजभिः। राज्ञे राजभ्यां राजभ्यः। राज्ञः राजभ्यां राजभ्यः। राज्ञः राज्ञोः राज्ञाम्। 'ईङौ वा' राज्ञि राजनि राज्ञोः राजसु।

## नामन्त्र्ये । २ । १ । ९२ ।

आमन्त्र्यार्थे वर्तमानस्य नाम्नो नस्य लुग् न स्यात्। हे राजन् हे राजानौ हे राजानः ॥ नकारान्तो यज्वन्शब्दः— यज्वा यज्वानौ यज्वानः। यज्वानं यज्वानौ।

## न वमन्तसंयोगात् । २ । १ । १११ ।

वकारान्ताद् मकारान्ताच्च संयोगात् परस्यानोऽस्य लुग् न स्यात्। यज्वनः। यज्वना यज्वभ्यां यज्वभिः। यज्वने यज्वभ्यां

यज्वभ्यः। यज्वनः यज्वभ्यां यज्वभ्यः। यज्वन· यज्वनोः यज्वनाम्। यज्वनि यज्वनोः यज्वसु । हे यज्वन् हे यज्वानौ हे यज्वानः ॥ एवम् आत्मा आत्मानौ आत्मानः । आत्मानम् आत्मानौ आत्मन । आत्मना आत्मभ्याम् आत्मभिः। आत्मने आत्मभ्याम् आत्मभ्य। आत्मन आत्मभ्याम् आत्मभ्यः। आत्मनः आत्मनो· आत्मनाम्। आत्मनि आत्मनोः आत्मसु । हे आत्मन् आत्मानौ आत्मान ॥ एवं सुधर्मा सुधर्माणौ सुधर्माण. । सुधर्माणं सुधर्माणौ सुधर्मणः । इत्यादय·॥ श्वन्–युवन्–मघवन्–शब्दाना घुटि राजन्वत्। श्वा श्वानौ श्वानः । श्वानं श्वानौ । एवं युवा युवानौ इत्यादय. । श्वन्+शस्

श्वन्–युवन्–मघोनो ङीस्याद्यघुट्स्वरे व उः । २।१।१०६ ।

एषां सस्वरस्य वकारस्य ङीप्रत्ययेऽघुट्स्वरादौ च स्यादौ परे उः स्यात् । शुनः । शुना श्वभ्यां श्वभिः । शुने श्वभ्या श्वभ्य. । शुनः श्वभ्यां श्वभ्यः । शुनः शुनोः शुनाम्। शुनि शुनोः श्वसु। हे श्वन् श्वानौ हे श्वानः । एवं यून· । यूना युवभ्या युवभि । मघोन· । मघोना मघवभ्या मघवभिरित्यादयः । मघवच्छब्दस्य तु भवच्छब्दवद्रूपाणि मघवान् मघवन्तौ मघवन्तः । मघवन्त मघवन्तौ मघवतः । मघवता मघवद्भ्यां मघवद्भिः । मघवते मघवद्भ्या मघवद्भ्य. । मघवतः मघवद्भ्या मघवद्भ्यः । मघवतः मघवतोः मघवताम् । मघवति मघवतोः मघवत्सु । हे मघवन् हे मघवन्तौ हे मघवन्तः । वैदिकस्य अर्वन्शब्दस्य तु नञ्रहितस्य तृ इत्यन्तादेशः

स्यात्, सिभिन्नविभक्तौ परायाम्। अर्वा अर्वन्तौ अर्वन्तः। अर्वन्तम् अर्वन्तौ अर्वतः। अर्वता अर्वद्भ्याम् अर्वद्भिः। अर्वते अर्वद्भ्याम् अर्वद्भ्य। अर्वतः अर्वद्भ्याम् अर्वद्भ्य। अर्वतः अर्वतो अर्वताम्। अर्वति अर्वतो अर्वत्सु। अनञिति किम्। अनर्वा अनर्वाणौ अनर्वाणः इत्यादय॥ नकारान्त पथिन्शब्द —पथिन्+सि इति स्थिते

**पथिन्मथिन्नृभुक्षः सौ। १। ४। ७६।**

पथ्यादीनां नान्तानां सौ परेऽन्तस्य आकार स्यात्। पथि+आ+सि।

**एः। १। ४। ७७।**

पथ्यादीना नान्तानामिकारस्य सौ परे आकार स्यात्। पथा+आ+सिअत्र 'समानानाम्' इत्यादिना दीर्घे।

**थो न्थ्। १। ४। ७८।**

पथिन्—मथिन थकारस्य घुटि परे न्थ् इत्यादेश स्यात्। सेर्विसर्गे पन्था। पन्थानौ पन्थान। पन्थानं पन्थानौ। पथिन्+शस् इति स्थिते

**इन् ङी—स्वरे लुक्। १। ४। ७९।**

नान्ताना पथ्यादीनामिनो ङीप्रत्ययेऽघुट्स्वरादौ स्यादौ च परे लुक् स्यात्। पथ। पथा पथिभ्या पथिभिः। पथे पथिभ्यां

पथिभ्य: । पथ. पथिभ्यां पथिभ्य । पथ: पथो: पथाम् । पथि पथो: पथिषु । हे पन्था हे पन्थानौ हे पन्थान· ।। एवं मन्था मन्थानौ मन्थान: । मन्थानं मन्थानौ मथ: । ऋभुक्षा: ऋभुक्षाणौ ऋभु-क्षाण· । ऋभुक्षाणम् ऋभुक्षाणौ ऋभुक्ष: । ऋभुक्षा ऋभुक्षिभ्याम् ऋभुक्षिभि. । ऋभुक्षे ऋभुक्षिभ्याम् ऋभुक्षिभ्य: इत्यादय: ।। इन्नन्तो दण्डिन्शब्द:– दण्डिन्+सि

### इन्हन्पूषार्यम्ण: शि–स्यो: । १ । ४ । ८७ ।

इन्नन्तस्य हनादीनां च स्वरस्य शौ शेषे सौ च परे दीर्घ स्यात् । ' नि दीर्घ. ' इति सिद्धे नियमार्थोऽय योग., तेनैषामन्य-स्मिन् स्यादौ परे दीर्घो न भवति । दण्डी दण्डिनौ दण्डिन । दण्डिनं दण्डिनौ दण्डिन: । दण्डिना दण्डिभ्यां दण्डिभि: । दण्डिने दण्डिभ्यां दण्डिभ्य: । दण्डिन· दण्डिभ्यां दण्डिभ्य । दण्डिन दण्डिनो दण्डिनाम् । दण्डिनि दण्डिनो: दण्डि । हे दण्डिन् हे दण्डिनौ हे दण्डिन· । एवं ब्रह्महा ब्रह्महणौ ब्रह्महण । ब्रह्महणं ब्रह्महणौ ।

### हनो ह्नो घ्न: । २ । १ । ११२ ।

हन्तेर्ह्न इति रूपस्य घ्नादेश: स्यात् । ब्रह्मघ्न· । ब्रह्मघ्ना ब्रह्महभ्यां ब्रह्महभि: । ब्रह्मघ्ने ब्रह्महभ्यां ब्रह्महभ्य: । ब्रह्मघ्न: ब्रह्म-हभ्यां ब्रह्महभ्य: । ब्रह्मघ्न: ब्रह्मघ्नो: ब्रह्मघ्नाम् । सप्तम्येकवचने

'ईडौ वा' इति अकारस्य वा लोपभवनाद् ब्रह्मघ्नि ब्रह्महणि ब्रह्मघ्नोः ब्रह्महसु । हे ब्रह्महन् हे ब्रह्महणौ हे ब्रह्महण । एवं वृत्रहन्-कर्महनादीनामपि ॥ पूषा पूषणौ पूषण । पूषणं पूषणौ 'अनोऽस्य' इत्यकारलोपे पूष्णः । पूष्णा पूषभ्यां पूषभि । पूष्णे पूषभ्या पूषभ्यः । पूष्ण पूषभ्या पूषभ्य । पूष्ण. पूष्णोः पूष्णाम् ॥ पूषणि पूष्णि पूष्णो पूषसु । हे पूषन् हे पूषणौ हे पूषणः ॥ एवम् अर्यमा अयमणौ अर्यमणः । अर्यमणंम् अर्यमणौ अर्यम्णः इत्यादयः ॥ संख्यावाची नकारान्तः पञ्चन्शब्दो नित्य बहुवचनान्त —'डतिष्ण' इत्यादिना जस्शसोर्लुकि पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः । पञ्चन्+आम्

**संख्यानां ष्र्णाम् । १ । ४ । ३३ ।**

रकार—षकार—नकारान्तानां संख्यावाचिना सम्बन्धिन आमः स्थाने नामादेश स्यात् । 'दीर्घो नाम्य—' इत्यादिना दीर्घे 'नाम्नो' इत्यादिना नो लुकि पञ्चानाम् । पञ्चसु । एवं सप्तन्-नवन्-दशन् इत्यादय । अष्टन्शब्दस्य भेद.— अष्टन्+जस्

**वाऽष्टन आः स्यादौ । १ । ४ । ५२ ।**

अष्टन्शब्दस्य तदन्तसम्बन्धिनि स्यादौ परे आकारोऽन्तादेशो वा स्यात् ।

**अष्ट और्जस्—शसोः । १ । ४ । ५३ ।**

अष्ट इत्यष्टन्शब्दस्य कृतात्त्वस्य रूपम् । अष्टाशब्दस्य जस्—शसोः स्थाने औकारादेशः स्यात् । अष्टौ । आत्त्वाभावपक्षे जस्शसोर्लुकि अष्ट । अष्टौ, अष्ट । अष्टाभिः, अष्ट । अष्टाभ्यः, अष्टभ्यः । अष्टाभ्यः, अष्टभ्यः । अष्टानाम् । अष्टासु, ष्टसु । प्रिया अष्ट यस्येति विग्रहे तु प्रियाष्टाः, पियाष्टा प्रियाष्टौ, प्रयाष्टानौ प्रियाष्टः, प्रियाष्टूणः । अष्टन आत्त्वेऽपि अष्टाशब्दसम्बन्धिनोर्जस्शसोरभावेन न औकारादेश, इति जसि दीर्घविसर्गौ । शसि 'लुगातोऽनापः' इत्याकारलोप. । आत्ताभावपक्षे राजनवत्कार्यम् । प्रियाष्टा प्रियाष्टूणा, प्रियाष्टाभ्या प्रियाष्टभ्याम्, प्रियाष्टाभिः प्रियाष्टभिः । प्रियाष्टे प्रियाष्टूणे, प्रियाष्टाभ्यां प्रियाष्टभ्याम्, प्रियाष्टाभ्यः प्रियाष्टभ्य । प्रियाष्टः प्रियाष्टूण:, प्रियाष्टाभ्या प्रियाष्टभ्याम्, प्रियाष्टाभ्यः प्रियाष्टभ्यः । प्रियाष्ट. प्रियाष्टूणः, प्रियाष्टोः प्रियाष्टूणोः प्रियाष्टा प्रियाष्टूणाम्, अत्राष्टनो गौणत्वात् संख्यावाचिनः सम्बन्धिन आमोऽभावाद् न नामादेशः । प्रियाष्टि प्रियाष्टूणि, प्रियाष्टोः प्रियाष्टूणोः प्रियाष्टासु प्रियाष्टसु । हे प्रियाष्टन् हे प्रियाष्टाः, हे प्रियाष्टौ हे प्रियाष्टानौ, हे प्रियाष्टाः हे प्रियाष्टानः ॥

मकारान्तः सर्वादि. इदम्शब्द —इदम्+सि इति स्थिते

**अयमियं पुंस्त्रियोः सौ । २ । १ । ३८ ।**

त्यदादिसम्बन्धिनि सौ परे इदमः स्थाने पुंसि स्त्रिया च क्रमेणायमियमौ स्याताम् । अयं पुमान् । इदम्+औ इति स्थिते

‘ आ द्वेरः ’ इत्यन्त्यस्यात्त्वे ‘ लुगस्या—’ इत्यादिना पूर्वस्याकारस्य लुकि

**दो मः स्यादौ । २ । १ । ३९ ।**

त्यदादिसम्बन्धिनि स्यादौ परे इदमो दकारस्य मकार स्यात् । ‘ ऐदौत् सन्ध्यक्षरैः ’ इमौ । ‘ जस इ ’ इमे । इम इमौ इमान् । इदम्+टा इति स्थिते

**टौस्यनः । २ । १ । ३७ ।**

त्यदादिसम्बन्धिनि टायामोसि च परेऽक्वर्जितस्येदम स्थाने अनादेश. स्यात् । अनेन ।

**अनक् । २ । १ । ३६ ।**

त्यदादिसम्बन्धिनि व्यञ्जनादौ स्यादौ परेऽक्वर्जितस्येदमो अः स्यात् । अभेदनिर्देशः सर्वादेशार्थ. । ‘ आद्यन्तवदेकस्मिन् ’ इति न्यायेन ‘ अत आ —’ इत्यादिना आकारे आभ्याम् । एभिः इत्यत्र

**इदमदसोऽक्येव । १ । ४ । ३ ।**

एतयोरक्येव सति भिस ऐ स्याद् नान्यथा इति नियमाद् नसादेश । इदम्+ङे इति स्थिते अन्त्यस्यात्त्वे सर्वादित्वात् स्मै आदेशे इदमोऽकारादेशे च अस्मै आभ्याम् एभ्यः । अस्माद् आभ्याम् एभ्य· । अस्य अनयो· एषाम् । अस्मिन् अनयोः

एषु । त्यदादीनां सम्बोधनं नेच्छन्ति । अन्वादेशे तु द्वितीयाया टायामोसि चेदम एनादेशो वक्तव्यः । एनम् एनौ एनान् । एनेन । एनयोः । मकारान्त. किम्शब्दः—

**किमः कस्तसादौ च । २ । १ । ४० ।**

त्यदादिसम्बन्धिनि स्यादौ तसादौ च परे किम स्थाने क इत्यादेशः स्यात् । कः कौ के । कं कौ कान् । केन काभ्या कैः । कस्मै काभ्या केभ्यः । कस्मात काभ्यां केभ्यः । कस्य कयो. केषाम् । कस्मिन् कयो· केषु । मकारान्तः प्रशाम्शब्द –

**मो नो म्वोश्च । २ । १ । ६७ ।**

धातोर्मकारस्य नकारादेशः स्यात् पदान्ते म्वोश्च परयो. । प्रशान् प्रशामौ प्रशाम । प्रशामं प्रशामौ प्रशाम. । प्रशामा प्रशान्भ्याम् प्रशान्भि· असत्त्वान्न नलोपः । प्रशामे प्रशान्भ्यां प्रशान्भ्यः । प्रशाम प्रशान्भ्या प्रशान्भ्यः । प्रशाम प्रशामोः प्रशामाम् । प्रशामि प्रशामोः प्रशान्सु । धकारान्तः तत्त्वबुधशब्दः—'गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थ· स्ध्वोश्च प्रत्यये' 'धुटस्तृतीयः' 'विरामे वा' तत्त्वभुद् तत्त्वभुत् तत्त्वबुधौ तत्त्वबुध· । तत्त्वबुधं तत्त्वबुधौ तत्त्वबुधः । तत्त्वबुधा तत्त्वभुद्भ्यां तत्त्वभुद्भिः। तत्त्वबुधे तत्त्वभुद्भ्यां तत्त्वभुद्भ्य· । तत्त्वबुधः तत्त्वभुद्भ्यां तत्त्वभुद्भ्यः । तत्त्वबुधः तत्त्वबुधोः तत्त्वबुधाम् । तत्त्वबुधि तत्त्वबुधोः तत्त्वभुत्सु । हे तत्त्वभुद् हे तत्त्वभुत् हे तत्त्वबुधौ हे तत्त्वबुधः ।

जकारान्तः सम्राज्शब्दः—क्विबन्ते राजतौ परे समो मकारस्य मकार एव नानुस्वारो भवति । सम्राज्+सि इति स्थिते सेर्लुकि

**यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः ष ।२।१।८७।**

यजादीना धातूना चजो· शकारस्य च धुटि प्रत्यये परे पदान्ते च षः स्यात् । 'धुटस्तृतीयः' 'विरामे वा' सम्राड् सम्राट् सम्राजौ सम्राजः । सम्राजं सम्राजौ सम्राजः । सम्राजा सम्राड्भ्या सम्राड्भिः । सम्राजे सम्राड्भ्या सम्राड्भ्यः । सम्राजः सम्राड्भ्या सम्राड्भ्यः । सम्राजः सम्राजो· सम्राजाम् । सम्राजः सम्राजो सम्राट्सु सम्राड्त्सु । एवं मूलवृश्च्शब्दस्य मूलवृट् मूलवृड् मूलवृश्चौ मूलवृश्चः । मूलवृड्भ्यामित्यादयः । जकारान्तो युज्शब्दः— युज्+सि इति स्थिते

**युञ्जोऽसमासे । १ । ४ । ७१ ।**

'युजृम्पी योगे' इत्यस्यासमासे धुडन्तस्य धुटः प्राग् धुटि परे नोन्तः स्यात् । युन्ज्+सि इति स्थिते सेर्लुकि जश्च लुकि

**युजञ्च्–क्रुञ्चो नो ङः । २ । १ । ७१ ।**

युजञ्च्–क्रुञ्चा नकारस्य पदान्ते ङकारः स्यात् ।युङ् युञ्जौ युञ्जः । युञ्जं युञ्जौ युजः । युजा ।

**चजः कगम् । २ । १ । ८६ ।**

चकारजकारयोर्धुटि प्रत्यये पदान्ते च कगौ स्याताम् । युग्भ्यां युग्भिः । युजे युग्भ्यां युग्भ्यः । युजः युग्भ्यां युग्भ्यः ।

युजः युजोः युजाम् । युजि युजोः युक्षु । समासे तु युज्शब्दस्य धर्मयुक् धर्मयुजौ धर्मयुजः इत्यादयः । दकारान्तो द्विपाद्शब्दः— द्विपाद् द्विपात् द्विपादौ द्विपादः । द्विपादं द्विपादौ ।

**यस्वरे पादः पदणिक्यघुटि । २ । १ । १०२ ।**

णि—क्य—घुट्—वर्जे यकारादौ स्वरादौ च परे पाद पदादेशः स्यात् । द्विपदः । द्विपदा द्विपाद्भ्यां द्विपाद्भिः । द्विपदे द्विपाद्भ्यां द्विपाद्भ्यः । द्विपदः द्विपाद्भ्या द्विपाद्भ्यः । द्विपदः द्विपदो द्विपदाम् । द्विपदि द्विपदोः द्विपात्सु । एवं सुपाद्—त्रिपाद् । दकारान्तः सर्वादिस्तद्शब्दः । सौ परेऽन्त्यस्य 'आ द्वेः' इत्यकारे

**तः सौ सः । २ । १ । ४२ ।**

आ द्वेस्त्यदादीनां शब्दाना तत्सम्बन्धिनि सौ परे तकारस्य सकार स्यात् । सः तौ ते । त तौ तान् । तेन ताभ्यां तैः । तस्मै ताभ्यां तेभ्यः । तस्मात् ताभ्या तेभ्यः । तस्य तयोः तेषाम् । तस्मिन् तयोः तेषु । एवं त्यद्शब्दस्य स्यः त्यौ त्ये । त्यम् त्यौ त्यान् । त्येन त्याभ्यां त्यैः । त्यस्म त्याभ्यां त्येभ्यः । त्यस्माद् त्याभ्यां त्येभ्यः । त्यस्य त्ययोः त्येषाम् । त्यस्मिन् त्ययोः त्येषु । यद्शब्दस्य— यः यौ ये । यं यौ यान् । येन याभ्यां यैः । यस्मै याभ्यां येभ्यः । यस्माद् याभ्यां येभ्यः । यस्य ययोः येषाम् । यस्मिन् ययोः येषु । दकारान्तस्य एतद्शब्दस्याप्येवम् एषः एतौ एते । एतम् एतौ एतान् । एतेन एताभ्यां

एतैः । एतस्मै एताभ्याम् एतेभ्यः । एतस्माद् एताभ्याम् एतेभ्यः । एतस्य एतयोः एतेषाम् । एतस्मिन् एतयोः एतेषु । अन्वादेशे तु

**त्यदामेनदेतदो द्वितीया-टौस्यवृत्त्यन्ते । २ । १ । ३२ ।**

किञ्चित् कार्यं कर्तुमुपात्तस्य कार्यान्तरं कर्तुं पुनरुपादानमन्वादेशः । त्यदादिसम्बन्धिन एतदोऽन्वादेशे वाच्ये द्वितीयायां टायामोसि च परे एनदित्यादेशः स्यात् । एनम् एनौ एनान् । एनेन । एनयोः । एनयोः । उद्दिष्टमेतदध्ययनमथो एनदनुजानीत । सुशीलावेतौ एनौ गुरवो मानयन्ति । छकारान्तस्तत्त्वप्राच्छ्शब्दः—'अनुनासिके च्छ्वो. शूट्' इति च्छः शकारे 'यजसृज-' इत्यादिना शस्य षत्वे 'धुटस्तृतीय ' इति तृतीये ' विरामे वा ' इति वा प्रथमे तत्त्वप्राट् तत्त्वप्राड् तत्त्वप्राच्छौ तत्त्वप्राच्छः । तत्त्वप्राच्छं तत्त्वप्राच्छौ तत्त्वप्राच्छः । तत्त्वप्राच्छा तत्त्वप्राड्भ्यां तत्त्वप्राड्भिः । तत्त्वप्राच्छे तत्त्वप्राड्भ्यां तत्त्वप्राड्भ्य । तत्त्वप्राच्छः तत्त्वप्राड्भ्यां तत्त्वप्राड्भ्यः । तत्त्वप्राच्छः तत्त्वप्राच्छो. तत्त्वप्राच्छाम् । तत्त्वप्राच्छि तत्त्वप्राच्छोः तत्त्वप्राड्त्सु तत्त्वप्राट्सु । हे तत्त्वप्राट्ड् तत्त्वप्राच्छौ हे तत्त्वप्राच्छः । थकारान्तोऽग्निमथ्शब्द.—'धुटस्तृतीयः' ' विरामे वा ' अग्निमद् अग्निमत् अग्निमथौ अग्निमथः । अग्निमथम् अग्निमथौ अग्निमथ । अग्निमथा अग्निमद्भ्याम् अग्निमद्भिः । अग्निमथे अग्निमद्भ्याम् अग्निमद्भ्यः । अग्निमथः अग्निमद्भ्याम् अग्निमद्भ्यः । अग्निमथः अग्निमथोः अग्निमथाम् ।

अग्निमथि अग्निमथोः अग्निमत्सु । हे अग्निमद् अग्निमथौ अग्निमथः । एवं वारिमथादयः । चकारान्त' प्रत्यञ्च्शब्दः—

**अञ्चोऽनर्चायाम् । ४ । २ । ४६ ।**

अनर्चायामञ्चतेर्नो लुक् स्यात् । प्रत्यच्+सि इति स्थिते

**अचः । १ । ४ । ६९ ।**

अञ्चतेर्धातोर्धुडन्तस्य तदतत्सम्बन्धिनि घुटि परे घुट. प्राग् नोऽन्तः स्यात् । शेषं क्रुञ्चूवत् । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चं प्रत्यञ्चौ ।

**अच्च् प्राग् दीर्घश्च । २ । १ । १०४ ।**

लुप्तनकारस्याञ्चतेः णिक्यघुट्वर्जिते यकारादौ स्वरादौ प्रत्यये परेऽचः च् स्यात् । पूर्वस्य च स्वरस्य दीर्घः । प्रतीचः । प्रतीचा प्रत्यग्भ्यां प्रत्यग्भिः । प्रतीचे प्रत्यग्भ्यां प्रत्यग्भ्यः। प्रतीचः प्रत्यग्भ्यां प्रत्यग्भ्यः । प्रतीचः प्रतीचोः प्रतीचाम् । प्रतीचि प्रतीचोः प्रत्यक्षु । हे प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । पूजार्थे तु प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चं प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चा प्रत्यङ्भ्यां प्रत्यङ्भिः । प्रत्यञ्चे प्रत्यङ्भ्यां प्रत्यङ्भ्यः । प्रत्यञ्चः. प्रत्यङ्भ्यां प्रत्यङ्भ्यः । प्रत्यञ्चः प्रत्यञ्चोः प्रत्यञ्चाम् । प्रत्यञ्चि प्रत्यञ्चोः प्रत्यङ्षु प्रत्यङ्क्षु 'ङ्णो कटावन्तौ शिटि नवा' इति विकल्पेन कन्ते कृते रूपद्वयम् । हे प्रत्यङ प्रत्यञ्चौ प्रत्यञ्चः । तिरस्पूर्वपदस्याञ्चतेस्तु—

**तिरसस्तिर्यति । ३ । २ । १२४ ।**

अकारादौ क्लीबन्तेऽञ्चतौ परे तिरस्शब्दस्य तिरि इत्यादेशः स्यात । तिर्यङ् तिर्यञ्चौ तिर्यञ्चः । तिर्यञ्चं तिर्यञ्चौ । शसादौ स्वरे तु अचश्चत्वे अकारादेरञ्चतेरभावेन तिर्यादेशाभावाद् तिरश्च.। तिरश्चा तिर्यग्भ्या तिर्यग्भि । तिरश्चे तिर्यग्भ्या तिर्यग्भ्यः । तिरश्च तिर्यग्भ्या तिर्यग्भ्यः । तिरश्च तिरश्चोः तिरश्चाम् । तिरश्चि तिरश्चोः तिर्यक्षु । सम्बोधनं प्रथमावत् । अस्यापि अर्चायां तु सर्वत्र तिर्यादेशेन प्रत्यञ्चवद्रूपाणि । अमुम् अञ्चतीति विग्रहे अदस्+अच् इति स्थिते

**सर्वादिविष्वग्देवाड् डद्रिः क्व्यञ्चौ । ३ । २ । १२२ ।**

सर्वादिविष्वग्देवशब्देभ्य परो डद्रि स्यात क्विबन्तेऽञ्चतावुत्तरपदे परे । डित्त्वादन्त्यस्वरादेर्लोपे अदद्रि+अच् इति स्थिते यत्वे अदद्र्यच्+सि इति स्थिते

**वाऽद्रौ । २ । १ । ४६ ।**

अदसोऽद्रावन्ते सति दकारस्य मकारो वा स्यात् । अत्र द्वौ दकाराविति रूपचतुष्टयम् ।

**मादुवर्णोऽनु । २ । १ । ४७ ।**

अदसः सम्बन्धिनो मकारात परस्य वर्णमात्रस्यासन्न उवर्णः स्यात् । अनु कार्यान्तरात् पश्चाद् । शेषं प्रत्यच्वत् साधनीयम् ।

अमुमुयङ् अदमुयङ् अमुद्र्यङ् अदद्र्यङ् । अत्र—' परतः केचिदि-च्छन्ति केचिदिच्छन्ति पूर्वतः । उभयोः केचिदिच्छन्ति केचिदि-च्छन्ति नोभयो. ' ॥ १ ॥ अमुमुयञ्चौ अमुमुयञ्चः । अमुमु-यञ्चम् अमुमुयञ्चौ 'अच्च् प्राग् दीर्घश्च' इति अमुमुईचा अमुमु-यग्भ्याम् अमुमुयग्भिः । अमुमुईचे अमुमुयग्भ्याम् अमुमुयग्भ्यः । अमुमुईचः अमुमुयग्भ्याम् अमुमुयग्भ्यः । अमुमुईचः अमुमुईचोः अमुमुईचाम् । अमुमुईचि अमुमुईचोः अमुमुयक्षु । अदमुयञ्चौ अदमुयञ्चः । अदमुयञ्चम् अदमुयञ्चौ अदमुईच । अदमुईचा अदमुयग्भ्याम् अदमुयग्भिः । अमुद्र्यञ्चौ अमुद्र्यञ्चः । अमुद्र्यञ्चम् अमुद्र्यञ्चौ अमुद्रीचः । अमुद्रीचा अमुद्र्यग्भ्याम् अमुद्र्यग्भि. । अदद्र्यञ्चौ अदद्र्यञ्चः । अदद्र्यञ्चम् अदद्र्यञ्चौ अदद्रीचः । अदद्रीचा अदद्र्यग्भ्याम् अदद्र्यग्भिः । अदद्र्यक्षु इत्यादीनि । उदच्शब्दस्य तु उदङ् उदञ्चौ उदञ्च । उदञ्चम् उदञ्चौ ।

### उदचः उदीच् । २ । १ । १०३ ।

उत्पूर्वादञ्चतेः णिक्यवुट्वर्जिते यकारादौ स्वरादौ च प्रत्यये परे उदीच् इत्यादेशः स्यात् । उदीचः उदीचा उदग्भ्याम् उदग्भिः । उदक्षु इत्यादीनि ।

### सह–समः सध्रि–समि । ३ । २ । १२३ ।

क्विबन्तेऽञ्चतौ परे सहस्य सध्रि समः समि इत्यादेशौ स्याताम् । सध्र्यङ् सध्र्यञ्चौ सध्र्यञ्चः । सध्र्यञ्चं सध्र्यञ्चौ सध्रीचः ।

सध्रीचा सध्र्यग्भ्यां सध्र्यग्भि. । सध्रीचे सध्र्यग्भ्यां सध्र्यग्भ्यः । सध्रीचः सध्रीचो· सध्रीचाम् । सध्रीचि सध्रीचोः सध्र्यक्षु । एवं सम्यङ् सम्यञ्चौ सम्यञ्च । सम्यञ्चं सम्यञ्चौ समीच· । समीचा सम्यग्भ्या सम्यग्भिरित्यादय. । तकारान्तो मरुच्छब्दः— मरुत् मरुद् मरुतौ मरुतः । मरुतं मरुतौ मरुतः । मरुता मरुद्भ्या मरुद्भिः । मरुते मरुद्भ्यां मरुद्भ्यः । मरुत· मरुद्भ्यां मरुद्भ्यः । मरुतः मरुतोः मरुताम् । मरुति मरुतो मरुत्सु । हे मरुत् मरुतौ मरुतः । एवं काष्ठचित् । तकारान्तो महच्छब्दः—

ऋदुदितः । १ । ४ । ७० ।

ऋदित उदितश्च धुडन्तस्य धुटः प्राग् घुटि परे नोऽन्तः स्यात् ।

न्स्महतोः । १ । ४ । ८६ ।

न्स् इत्यन्तस्य महच्छब्दस्य च सम्बन्धिन. स्वरस्य शेषे घुटि शौ च परे दीर्घः स्यात् । पदस्येति लुकि महान् महान्तौ महान्तः । महान्तं महान्तौ महतः । हे महन् महान्तौ महान्तः। शेषं मरुद्वत् । सकारान्त· कंस्शब्द — कन् कंसौ कंस । कंसं कंसौ कंस । कंसा कन्भ्यां कन्भिः । कंसे कन्भ्यां कन्भ्यः । कंसः कन्भ्यां कन्भ्य । कंसः कंसोः कंसाम् । कंसि कंसो. कन्त्सु कन्सु । हे कन् कंसौ कंसः । उदित् भवच्छब्दः—

अभ्वादेरत्वसः सौ । १ । ४ । ९० ।

अत्वन्तस्यासन्तस्य च भ्वादिवर्जितस्य स्वरस्य शेषे सौ परे दीर्घः स्यात् । भवान् भवन्तौ भवन्तः । भवन्तं भवन्तौ भवतः । भवता भवद्भ्यां भवद्भिः । भवते भवद्भ्यां भवद्भ्यः । भवतः भवद्भ्यां भवद्भ्य. । भवतः भवतोः भवताम् । भवति भवतोः भवत्सु । हे भवन् भवन्तौ भवन्तः । अभ्वादेरिति किम् । पिण्डं ग्रसतीति पिण्डग्रः इत्यत्र न दीर्घः । पिण्डग्रसं पिण्डग्रसौ पिण्डग्रसः । पिण्डग्रसा पिण्डग्रोभ्यां पिण्डग्रोभिरित्यादीनि । शतृप्रत्ययान्तस्य भवच्छब्दस्य तु अत्वन्तत्वाभावाद् न दीर्घः । 'ऋदुदितः' इति नोऽन्ते 'पदस्य' इति संयोगान्तलोपे भवन् भवन्तौ भवन्तः । भवन्तं भवन्तौ भवत. इत्यादीनि रूपाणि । एवं पठन् पठन्तौ पठन्तः । पठन्तं पठन्तौ पठतः । पठता पठद्भ्या पठद्भिः । पठते पठद्भ्यां पठद्भ्य. । पठतः पठद्भ्या पठद्भ्य. । पठतः पठतोः पठताम् । पठति पठतो· पठत्सु । हे पठन् पठन्तौ पठन्तः । एवं कुर्वत्—पचत्—गदत्—हरदादयः । ददादित्यादौ तु द्विरुक्तानां जक्षादीनां पञ्चानां च नित्यं नोऽन्तस्य प्रतिषेधाद् पुंलिङ्गे नोऽन्तो न भवति । ददद् ददतौ ददतः । जक्षद् जक्षतौ जक्षत· । जाग्रत् जाग्रतौ जाग्रतः । दरिद्रत् दरिद्रतौ दरिद्रतः । नपुंसके तु शौ वा भवतीति ददति, ददन्ति इत्यादीनि भवन्ति । शकारान्तो विश्शब्दः—'यजसृज—' इत्यादिना षत्वे 'धुटस्तृतीयः' इति तृतीये विट् विड् विशौ विशः । विड्भ्यां विड्त्सु विट्सु । षकारान्तो नित्यबहुवचनान्तः संख्यावाची षष्शब्दः—षट् । षड् । षड्भिः । षड्भ्यः । षड्भ्यः ।

षण्णाम् । षड्त्सु । षट्सु । षकारान्तो दोष्शब्दः—

**णषमसत् परे स्यादिविधौ च । २ । १ । ६० ।**

इतः परकार्ये कर्तव्ये पूर्वस्मिंश्च स्यादिविधौ च विधातव्ये णकारषकारावसदिव स्याताम् । अत्र षत्वस्य रुत्वरूपे परकार्येऽसत्त्वात् ' सो रु ' इति रुत्वे विसर्गे च दोः दोषौ दोष । दोषं दोषौ दोषः । दोष्+टा इति स्थिते

**दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतो—
दत्पन्नस्हृदसन्यूषन्नुदन्दोषन्यकन्शकन् वा ।२।१। १०१।**

दन्तादीना शसादौ स्यादौ परे दत् इत्यादय आदेशा वा स्युः। दोषन्+टा अनोऽकारस्य लुकि णत्वे च दोष्णा पक्षे दोषा, दोषभ्या दोर्भ्याम्, दोषभि दोर्भि. । दोष्णे दोषे, दोषभ्यां दोर्भ्याम्, दोषभ्यः दोर्भ्य । दोष्णः दोषः, दोषभ्यां दोर्भ्याम्, दोषभ्यः दोर्भ्य· । दोष्णः दोषः, दोष्णो· दोषोः, दोष्णां दोषाम् । दोष्णि दोषणि दोषि, दोष्णो· दोषोः, दोषसु दोःषु दोष्षु । अत्र नाम्यन्तस्येत्यादिना सुप· षत्वम्, ' शषसे शषसं वा ' इति रो विकल्पेन षत्वे पक्षे विसर्गे रूपद्वयम् । आदेशाभावे एकमिति रूपत्रयम् । सजुष्शब्दः—

**सजुषः । २ । १ । ७३ ।**

सजुषः पदान्ते रुः स्यात् । षत्वस्य कृत्त्वाभावेन ' रो रुः ' इत्यप्राप्तौ योगारम्भः ।

**पदान्ते । २ । १ । ६४ ।**

पदान्ते वर्तमानयोर्भ्वादे रकारवकारयोः परयोस्तस्यैव भ्वादेर्नामिनो दीर्घः स्यात् । सजूः सजुषौ सजुषः । सजुषं सजुषौ सजुषः । सजुषा सजूर्भ्यां सजूर्भिः । सजुषे सजूर्भ्यां सजूर्भ्यः । सजुषः सजुषो. सजुषाम् । सजुषि सजुषोः सजु ःषु सजुष्षु । सकारान्तः पुंस्शब्द ः—

**पुंसोः पुमन्स् । १ । ४ । ७३ ।**

पुंस् इत्युदितस्तदतत्सम्बन्धिनि घुटि परे पुमन्स् इत्यादेशः स्यात् । 'न्स्महतो' इति दीर्घे पुमान् पुमांसौ पुंमांसः । पुमांसं पुमांसौ पुंसः । पुंसा पुम्भ्यां पुम्भिः । पुंसे पुम्भ्या पुम्भ्यः । पुसः पुम्भ्यां पुम्भ्यः । पुंसः पुंसोः पुंसाम् । पुंसि पुंसोः पुंसु । हे पुमन् पुमांसौ पुमांसः । सकारान्तो विद्वस्शब्दः—उदित्त्वाद् नोन्ते विद्वान् विद्वांसौ विद्वांसः । विद्वांसं विद्वांसौ । विद्वस्+शस् इति स्थिते

**क्वसुष् मतौ च । २ । १ । १०५ ।**

णिक्यघुट्वर्जिते यकारादौ स्वरादौ मतौ च प्रत्यये परे क्वसोः उष् स्यात् । विदुषः । विदुषा 'स्रंस्-ध्वंस्-' इत्यादिना दत्वे विद्वद्भ्यां विद्वद्भिः । विदुषे विद्वद्भ्यां विद्वद्भ्यः । विदुषः विद्वद्भ्यां विद्वद्भ्यः । विदुषः विदुषोः विदुषाम् । विदुषि विदुषोः विद्वत्सु । हे विद्वन् विद्वांसौ विद्वांसः । एवं तस्थिवान् तस्थिवांसौ तस्थिवांसः । तस्थिवांसं तस्थिवांसौ तस्थुषः अत्र निमि-

त्ताभावे नैमित्तिकस्याप्यभावः' इति न्यायाद् क्वसुनिवृत्तौ तन्निमित्तस्येटोऽपि निवृत्तिः। तस्थुषा तस्थिवद्भ्यां तस्थिवद्भिरित्यादीनि। शुश्रुवस्शब्दस्य शसादौ स्वरे उषादेशे सति 'धातोरिवर्णो—' इत्यादिना उवादेश इति विशेष। शुश्रुवान् शुश्रुवांसौ शुश्रुवांसः। शुश्रुवांसं शुश्रुवांसौ शुश्रुवुष। शुश्रुवुषा शुश्रुवद्भ्या शुश्रुवद्भिः शुश्रुवुषे शुश्रुवद्भ्यां शुश्रुवद्भ्य.। शुश्रुवुष. शुश्रुवद्भ्या शुश्रुवद्भ्य.। शुश्रुवुष· शुश्रुवुषो· शुश्रुवुषाम्। शुश्रुवुषि शुश्रुवुषोः शुश्रुवत्सु। एवं पेचिवान् पेचिवांसौ पेचिवांसः। पेचिवांसं पेचिवांसौ पेचुष। पेचुषा पेचिवद्भ्या पेचिवद्भिः। पेचुषे पेचिवद्भ्यां पेचिवद्भ्यः। पेचुष पेचिवद्भ्यां पेचिवद्भ्यः। पेचुष· पेचुषोः पेचुषाम्। पेचुषि पेचुषो. पेचिवत्सु। जग्मिवान् जग्मिवांसौ जग्मिवास। जग्मिवांस जग्मिवांसौ जग्मुष। जग्मुषा जग्मिवद्भ्या जग्मिवद्भि। जग्मुषे जग्मिवद्भ्यां जग्मिवद्भ्य। जग्मुष जग्मिवद्भ्यां जग्मिवद्भ्यः। जग्मुष· जग्मुषो· जग्मुषाम्। जग्मुषि जग्मुषोः जग्मिवत्सु। हे जग्मिवन् जग्मिवांसौ जग्मिवासः। सकारान्तश्चन्द्रमस्शब्दः—अभ्वादेरिति दीर्घे चन्द्रमाः चन्द्रमसौ चन्द्रमस·। चन्द्रमसं चन्द्रमसौ चन्द्रमस। चन्द्रमसा चन्द्रमोभ्या चन्द्रमोभि। चन्द्रमसे चन्द्रमोभ्यां चन्द्रमोभ्यः। चन्द्रमसः चन्द्रमोभ्या चन्द्रमोभ्यः। चन्द्रमस· चन्द्रमसोः चन्द्रमसाम्। चन्द्रमसि चन्द्रमसो· चन्द्रमस्सु चन्द्रमःसु। हे चन्द्रमः चन्द्रमसौ चन्द्रमसः। एवं सुवचस्–दुर्वचस्–सुवयसादयः।

उशनसः सौ विशेषः 'ऋदुशन —' इत्यादिना सेर्डा डित्त्वादन्त्यस्त्र-रादेर्लोपे उशना उशनसौ उशनसः । सम्बोधने

**वोशनसो नश्चामन्त्र्ये सौ । १ । ४ । ८० ।**

आमन्त्र्यार्थे वर्तमानस्योशनसः सौ परे नकारो वा स्यात्, लुक् च वा स्यात् । हे उशनन् लुकि हे उशन उभयाभावे हे उशनः उशनसौ उशनसः । शेषं चन्द्रमस्वद् । पुरुदंशस्—अनेहस्शब्दयोः उशनस्शब्दवत् । सम्बोधनैकवचने चन्द्रमस्शब्दवत् । पुरुदंशा पुरुदंशसौ पुरुदंशसः । हे पुरुदंशः हे पुरुदंशसौ हे पुरुदंशसः । अनेहा अनेहसौ अनेहसः । हे अनेहः हे अनेहसौ हे अनेहसः इत्यादीनि । सन्तोऽदस्शब्दः—अदस्+सि इति स्थिते

**अदसो दः सेस्तु डौ । २ । १ । ४३ ।**

त्यदादिसम्बन्धिनि सौ परेऽदसो दकारस्य सकारः स्यात्, सेस्तु डौ स्यात् । असौ । सर्वत्र स्यादावत्त्वे कृते अद+औ इति स्थिते

**मोऽवर्णस्य । २ । १ । ४५ ।**

अवर्णान्तस्य त्यदादेरदसो दकारस्य मकारः स्यात् । 'मादुवर्णोऽनु' इति एकमात्रिकस्य स्थाने आसन्न एकमात्रिको द्विमात्रिकस्य स्थाने च द्विमात्रिक उकारः । अमू । अद+जस् इति स्थिते जस इत्वे एकारादेशे च

**बहुष्वेरीः । २ । १ । ४९ ।**

बहुष्वर्थेषु वर्तमानाददसो मकारात् परस्यैकारस्य ईकारः स्यात्। अमी। अमुम् अमू अमून्। अद्+टा इति स्थिते इनादेशे प्राप्ते

**प्रागिनात्। २। १। ४८।**

अदसो मकारात् परस्य वर्णमात्रस्य स्थाने इनादेशात् प्राग् उ इत्यादेशः स्यात्। पश्चाद् 'टः पुंसि ना' इति नादेशे अमुना अमूभ्याम् अमीभि। अमुष्मै अमूभ्याम् अमीभ्यः। अमुष्मात् अमूभ्याम् अमीभ्यः। अमुष्य अमुयोः अमीषाम्। अमुष्मिन् अमुयो. अमीषु। अक्प्रत्ययान्तस्य तु सौ

**असुको वाऽकि। २। १। ४४।**

त्यदादीनामदसः सौ परे असुक इति वा निपात्यते। असुकः अमकौ अमुकौ अमुके। अमुकम् अमुकौ अमुकान्। अमुकेन अमुकाभ्याम् अमुकैरित्यादीनि सर्ववद्रूपाणि।

**इति व्यञ्जनान्तपुंलिङ्गप्रकरणं समाप्तम्।**



# अथ व्यञ्जनान्तस्त्रीलिङ्गप्रकरणम् ।

हकारान्तः स्त्रीलिङ्ग उपानच्छब्दः—

**नहाहोर्धतौ । २ । १ । ८५ ।**

नहेर्ब्रूस्थानीयस्याहरूपादेशस्य च धातोः सम्बन्धिनो हकारस्य झुटि प्रत्यये पदान्ते च यथासंख्यं धकार—तकारादेशौ स्याताम् । उपानद् उपानत् उपानहौ उपानहः । उपानहम् उपानहौ उपानहः । उपानहा उपानद्भ्याम् उपानद्भिः । उपानहे उपानद्भ्याम् उपानद्भ्यः । उपानहः उपानद्भ्याम् उपानद्भ्यः । उपानहः उपानहोः उपानहाम् । उपानहि उपानहोः उपानत्सु । सम्बोधनं प्रथमावत् । वकारान्तो दिव्शब्दः—

**दिव औः सौ । २ । १ । ११७ ।**

दिवोऽन्तस्य स्थाने सौ परे औरित्यादेशः स्यात् । यत्वे द्यौः दिवौ दिवः । दिव दिवौ दिवः । दिवा ।

**उः पदान्तेऽनूत् । २ । १ । ११८ ।**

पदान्ते वर्तमानस्य दिवोऽन्त्यस्य उ इत्यादेशः स्यात्, स चोकारो दीर्घो न स्यात् । द्युभ्यां द्युभिः । दिवे द्युभ्यां द्युभ्यः । दिवः द्युभ्या द्युभ्यः । दिवः दिवोः दिवाम् । दिवि दिवोः द्युषु । हे द्यौः दिवौ दिवः । एवं सुदिव्—प्रियदिव्—प्रभृतयः । रेफान्तो नित्यं बहुवचनान्तः स्त्रीलिङ्गश्चतुर्शब्दः—

## त्रि-चतुरस्तिसृ-चतसृ स्यादौ । २ । १ । १ ।

स्त्रिया वर्तमानयोः त्रि-चतुरोः स्थाने तिसृ चतसृ इत्यादेशौ स्याताम्। तत्रस्थः ऋकारः ऋद्वद् भवतीति न अरादेश.। चतस्रः। चतस्र । चतसृभि । चतसृभ्य । चतसृभ्य । चतसृणाम्। चतसृषु । एवं त्रिशब्दस्यापि तिस्रः । तिस्र । तिसृभिः । तिसृभ्यः। तिसृणाम् । तिसृषु । स्त्रियामिति त्रिचतुरो विशेषणत्वेन प्रियास्त्रयोः यस्या इत्यत्र समुदायस्य स्त्रीत्वेऽपि त्रिशब्दस्य पुंस्त्वाद् नादेशः, तत्र प्रियत्रि प्रियत्री प्रियत्रय. । प्रियत्रि प्रियत्री प्रियत्रीः । प्रियत्र्या प्रियत्रिभ्यां प्रियत्रिभिः । प्रियत्र्यै प्रियत्रये प्रियत्रिभ्या प्रियत्रिभ्यः । प्रियत्र्याः प्रियत्रेः प्रियत्रिभ्या प्रियत्रिभ्यः । प्रियत्र्याः प्रियत्रेः प्रियत्र्यो प्रियत्रीणाम् । प्रियत्र्या प्रियत्रौ प्रियत्र्योः प्रियत्रिषु इति मतिवद्रूपाणि । यदा च प्रियास्तिस्रो यस्येति विग्रहावस्थाया समुदायस्य पुंस्त्वेऽपि त्रिशब्दस्य स्त्रीत्वाद्भवत्येवादेशः । प्रियतिसा प्रियतिस्रौ प्रियतिस्र । प्रियतिस्रं प्रियतिस्रौ प्रियतिस्र । प्रियतिस्रा प्रियतिसृभ्यां प्रियतिसृभिः । प्रियतिस्रे प्रियतिसृभ्यां प्रियतिसृभ्य । प्रियतिस्रः प्रियतिसृभ्यां प्रियतिसृभ्य । प्रियतिस्र प्रियतिस्रो प्रियतिसृणाम्। प्रियतिस्रि प्रियतिस्रोः प्रियतिसृषु । प्रियास्तिस्रो यस्य त दिति क्लीबे तु-प्रियतिसृ प्रियत्रि, प्रियतिसृणी प्रियतिसॄणि। द्वितीयायामप्येवम्। सम्बोधने प्रियतिसः प्रियत्रि, प्रियतिसृणी प्रियतिसॄणि।

टादौ स्वरे विकल्पेन पुंवद्भावभवनाद् प्रियतिसृणा उभयत्रापि सदृशम् । प्रियतिसृभ्यां प्रियतिसृभिः । प्रियतिस्रे प्रियतिसृणे प्रियतिसृभ्यां प्रियतिसृभ्यः । प्रियतिस्रः प्रियतिसृणः प्रियतिसृभ्या प्रियतिसृभ्यः। प्रियतिस्रः प्रियतिसृणः प्रियतिस्रोः प्रियतिसृणोः प्रियतिसृणाम् । प्रियतिस्रि प्रियतिसृणि प्रियतिस्रोः प्रियतिसृणोः प्रियतिसृषु । एवं प्रियचतुर्शब्दस्यापि । गॄ कॄ पॄ इत्यादीनां धातूनां क्विपि इर् उरादेशे गिर् किर् पुर् इत्यादिशब्दाना म्वादिधातुत्वात् ' पदान्ते ' इति दीर्घे गीः गिरौ गिर. । गिरं गिरौ गिरः । गिरा गीर्भ्यां गीर्भिः । गिरे गीर्भ्यां गीर्भ्यः । गिरः गीर्भ्यां गीर्भ्यः । गिरः गिरोः गिराम् । गिरि गिरोः गीर्षु । एवं की. किरौ किरः। पूः पुरौ पुरः । धूः धुरौ धुरः इत्यादीनि । धकारान्तः समिध शब्दः— तृतीये वा प्रथमे च समित् समिद्, समिधौ समिधः । समिधं समिधौ समिधः । समिधा समिद्भ्यां समिद्भिः । समिधे समिद्भ्यां समिद्भ्यः । समिधः समिद्भ्यां समिद्भ्यः । समिधः समिधोः समिधाम् । समिधि समिधो· समित्सु । हे समित् समिधौ समिधः। भकारान्तः ककुभ्शब्दः— ककुप् ककुब् ककुभौ ककुभः । ककुभं ककुभौ ककुभः । ककुभा ककुब्भ्यां ककुब्भिः । ककुभे ककुब्भ्यां ककुब्भ्य. । ककुभः ककुब्भ्यां ककुब्भ्यः । ककुभः ककुभोः ककुभाम् । ककुभि ककुभोः ककुप्सु । हे ककुप् ककुब ककुभौ ककुभः । दकारान्ताः त्यद्-तद्-यद्-एतद्शब्दाः, तेषाम् ' आ द्वेरः ' इत्यत्वे ' ङ्गास्येत्यादिना अकारलोपे । ' आत् ' इति स्त्रियामापि

'दीर्घङ्याब्'इति सेर्लुकि स्या त्ये त्याः। त्यां त्ये त्याः। त्यया त्याभ्यां त्याभिः। त्यस्यै त्याभ्यां त्याभ्यः। त्यस्याः त्याभ्यां त्याभ्यः। त्यस्याः त्ययोः त्यासाम्। त्यस्यां त्ययोः त्यासु। एवं सा ते ता. । या ये याः। एषा एते एताः। एताम् एते एताः। अन्वादेशे एनाम् एने एनाः। एनया। एनयोः। एतया एताभ्यां एताभिः। शेषं त्यद्वत्। किम्शब्दस्य तु कादेशे का के काः। कां के काः। शेषं सर्वावत्। मकारान्त इदम्शब्दः—' अयमियं पुंस्त्रियोः सौ ' इति इयमादेशे इयं इमे इमाः। इमाम् इमे इमाः। अन्वादेशे एनाम् एने एनाः। अनया एनया आभ्याम् आभिः। अस्यै आभ्याम् आभ्यः। अस्या· आभ्याम् आभ्यः। अस्याः अनयो· एनयोः आसाम्। अस्याम् अनयोः एनयो. आसु। चकारान्तस्त्वच्शब्दः—' चजः कगम ' इति कत्वे त्वक् त्वग् त्वचौ त्वचः। त्वचं त्वचौ त्वचः। त्वचा त्वग्भ्या त्वग्भिः। त्वचे त्वग्भ्यां त्वग्भ्यः। इत्यादीनि। एवं ऋच्। सृज्शब्दस्य सृट् सृड् सृजौ सृजः। सृजं सृजौ सृजः। सृजा सृड्भ्यां सृड्भिरित्यादीनि। पकारान्तो नित्यं बहुवचनान्तः अप्शब्द·—

अपः। १। ४। ८८।

अप्शब्दस्थस्य स्वरस्य दीर्घ· स्यात् शेषे घुटि परे। आपः। अपः। अद्भिः। अद्भ्यः। अद्भ्यः। अपाम्। अप्सु। शोभना

आपो यस्यासौ स्वाप् स्वापौ स्वापः । स्वापं स्वापौ स्वपः । स्वपा स्वद्भ्याम् । अत्र

अपोऽद् भे । २ । १ । ४ ।

अप्शब्दस्य तदन्तसम्बन्धिनि भादौ स्यादौ परे अद् इत्यादेशः स्यात् । स्वद्भिः । स्वपे स्वद्भ्यां स्वद्भ्यः । स्वप स्वद्भ्यां स्वद्भ्य. । स्वपः स्वपोः स्वपाम् । स्वपि स्वपोः स्वप्सु । हे स्वप् स्वापौ स्वापः । शकारान्तो दिश्शब्दः— दिश्+सि इति स्थिते

ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहो गः । २ । १ । ६९ ।

एषामन्तस्य पदान्ते ग स्यात् । सेर्लुकि दिक् दिग् दिशौ दिशः । दिशं दिशौ दिशः । दिशा दिग्भ्यां दिग्भिः । दिशे दिग्भ्यां दिग्भ्यः । दिशः दिग्भ्यां दिग्भ्यः । दिश दिशोः दिशाम् । दिशि दिशो. दिक्षु । हे दिक् दिग् दिशौ दिश. । एवं दृक् दृग् दृशौ दृशः । ऋत्विक्,ग् ऋत्विजौ ऋत्विज. । स्पृक् स्पृग् स्पृशौ स्पृशः । स्रक् स्रग् स्रजौ स्रज. । दधृग् दधृक् दधृषौ दधृषः। उष्णिक्,ग् उष्णिहौ उष्णिहः इत्यादीनि । षकारान्तः त्विष्शब्दः— तृतीये वा प्रथमे च त्विट् त्विड् त्विषौ त्विषः । त्विषं त्विषौ त्विषः । त्विषा त्विड्भ्यां त्विड्भिः । त्विषे त्विड्भ्यां त्विड्भ्यः । त्विषः त्विड्भ्यां त्विड्भ्यः । त्विषः त्विषोः त्विषाम् । त्विषि त्विषोः त्विट्सु त्विड्त्सु । हे त्विट् त्विड् त्विषौ त्विषः । षका-

रान्त आशिष्शब्दः— षत्वस्यासिद्धत्वात् रुत्वे 'पदान्ते' इति दीर्घे च आशीः आशिषौ आशिषः। आशिषम् आशिषौ आशिषः। आशिषा आशीर्भ्याम् आशीर्भिः। आशिषे आशीर्भ्याम् आशीर्भ्यः। आशिषः आशीर्भ्याम् आशीर्भ्यः। आशिषः आशिषोः आशिषाम्। आशिषि आशिषोः आशीःषु आशिष्षु। सकारान्तः स्त्रीलिङ्ग अदस्शब्दः— सौ तु पुंलिङ्गवद् असौ द्विवचनादौ 'आ द्वेरः' 'लुगस्यादेत्यपदे' 'आत्' 'समानानां तेन दीर्घः' पश्चाद् विभक्तिकार्यम् अमू अमूः। अमूम् अमू अमूः। अमुया अमूभ्याम् अमूभिः। अमुष्यै अमूभ्याम् अमूभ्यः। अमुष्याः अमूभ्याम् अमूभ्यः। अमुष्याः अमुयोः अमूषाम्। अमुष्याम् अमुयोः अमूषु।

इति व्यञ्जनान्तस्त्रीलिङ्गप्रकरणं समाप्तम्।



# अथ व्यञ्जनान्ता नपुंसकलिङ्गाः ।

रकारान्तो वार्शब्दः— वाः वारी वारि 'जस्–शसोः शिः'। पुनरप्येवम् । वारा वार्भ्यां वार्भिः । वारे वार्भ्यां वार्भ्यः । वारः वार्भ्यां वार्भ्यः । वारः वारोः वाराम् । वारि वारोः वार्षु अत्र रुसम्बन्धिनो रेफस्याभावाद् विसर्गाभावः । हे वाः वारी वारि । नित्यबहुवचनान्तः चतुर्शब्दः— चत्वारि । चत्वारि । चतुर्भिः । चतुर्भ्यः । चतुर्भ्यः । चतुर्णाम् । चतुर्षु नकारान्तोऽहन्शब्दः— स्यमोर्लुपि 'रो लुप्यरि' इति अन्तस्य रकारादेशे तस्य च विसर्गे अहः । 'ईङौ वा' अह्नी अहनी, अहानि । पुनरप्येवम् । 'अनोऽस्य' इत्यकारलोपे अह्ना अहोभ्याम् अहोभिः । अह्ने अहोभ्याम् अहोभ्यः । अह्नः अहोभ्याम् अहोभ्यः । अह्नः अह्नोः अह्नाम् । अहनि अह्नि अह्नोः अहःसु अहस्सु । हे अहः हे अह्नी अहनी हे अहानि । नकारान्तो नामन्शब्दः— नाम नामनी, नाम्नी नामानि । नाम नाम्नी, नामनी नामानि । नाम्ना नामभ्यां नामभिः । नाम्ने नामभ्यां नामभ्यः । नाम्नः नामभ्यां नामभ्यः । नाम्नः नाम्नोः नाम्नाम् । नाम्नि, नामनि नाम्नोः नामसु । नाम्नो नकारस्य क्लीबे सम्बोधने वा लुग् इति हे नामन् हे नाम, हे नाम्नी हे नामनी, हे नामानि । ब्रह्मन्-चर्मन्-कर्मन्–प्रभृतीनां 'न वमन्तसंयोगात्' इति निषेधाद् नानोऽकारस्य लुगिति ब्रह्म ब्रह्मणी ब्रह्माणि ।

ब्रह्म ब्रह्मणी ब्रह्माणि । कर्म कर्मणी कर्माणि । इत्यादीनि । व्योमन्शब्दस्य तु नामन्वत् । स्यदादीनां तु स्यमोर्लुपि सेरमावाद् 'आ द्वेरः' इत्यत्वं न 'विरामे वा' त्यद् त्यत्, द्विवचनादौ अत्वे स्ये स्यानि पुनरप्येवम् । एवं तत् ते तानि । यद् ये यानि । एतद् एते एतानि । किं के कानि । इदम् इमे इमानि । इदम् इमे इमानि । शेषं पुंलिङ्गवत् । चकारान्तः प्रत्यच्शब्दः— प्रत्यक प्रत्यग्, 'अच्च् प्राग' इत्यादिनाऽचश्चत्वे पूर्वस्य च दीर्घे प्रतीची । शौ तु 'धुटां प्राग्' इति नोऽन्तादेशे 'तवर्गस्य' इत्यादिना नकारस्य ञकारे प्रत्यञ्चि । प्रत्यग् प्रतीची प्रत्यञ्चि । पूजायां तु प्रत्यङ् प्रत्यञ्ची प्रत्यञ्चि । शेषं पुंवत् । जगद् जगत्, जगती जगन्ति । पुनरप्येवम् । महत् महद् महती महान्ति । पयः पयसी पयांसि 'शिड्हे' इत्यादिनाऽनुस्वारः । वचः वचसी वचांसि । यशः यशसी यशांसि । तेजः तेजसी तेजांसि । तेजोभ्यां तेजोभिरित्यादीनि । सकारान्तोऽदस्शब्दः— अदः । द्विवचनादौ 'आ द्वेरः' इत्यत्वे 'मोऽवर्णस्य' इति दो मत्वे 'मादुवर्णोऽनु' इत्युवर्णे अमू । 'जस्–शसोः शिः' इति शौ कृते 'स्वराच्छौ' इति नान्तादेशे 'नि दीर्घः' इति दीर्घे 'मादुवर्णोऽनु' इत्युवर्णे अमूनि । पुनरप्येवम् । शेषं पुंलिङ्गवत् ।

इति व्यञ्जनान्तनपुंसकलिङ्गप्रकरणं समाप्तम् ।

---

# अथ युष्मदस्मदोः प्रक्रिया।

युष्मदस्मदोस्त्रिषु लिङ्गेषु समानानि रूपाणि, अलिङ्गत्वात्। युष्मद्+सि इति स्थिते

**त्वमहं सिना प्राक् चाकः। २। १। १२।**

युष्मदस्मदोस्तदतत्सम्बन्धिना सिना सह क्रमेण त्वम् अहम् इत्यादेशौ स्याताम्। तौ चाकः प्रसङ्गेऽकः प्रागेव स्याताम्। त्वम् अहम्। औप्रत्यये

**मन्तस्य युवावौ द्वयोः। २। १। १०।**

द्वित्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मकारावसानस्यावयवस्य तदतत्सम्बन्धिनि स्वरादौ स्यादौ परे युव् आव् इत्येतावादेशौ क्रमेण स्याताम्। युव+अद्+औ, आव+अद्+औ 'लुगस्य' इत्यादिना पूर्वस्याकारस्य लुकि युवद्+औ, आवद्+औ इति स्थिते

**अमौ मः। २। १। १६।**

युष्मदस्मद्भ्या परयोः तदतत्सम्बन्धिनोः अम् औ इत्येतयोः स्थाने म् इति व्यञ्जनमात्रादेशः स्यात्।

**युष्मदस्मदोः। २। १। ६।**

युष्मदस्मदोस्तदतत्सम्बन्धिनि व्यञ्जनादौ प्देर आकारोऽन्तादेशः स्यात्। दीर्घे युवाम्। आवाम्।

**यूयं वयं जसा । २ । १ । १३ ।**

युष्मदस्मदोस्तदतत्सम्बन्धिना जसा सह यूयं वयम् इत्यादेशौ क्रमेण स्याताम् । यूयम् । वयम् । अम्प्रत्यये परे

**त्व-मौ प्रत्ययोत्तरपदे चैकस्मिन् । २ । १ । ११ ।**

एकत्वविशिष्टार्थे वर्तमानयोर्युष्मदस्मदोर्मान्तावयवस्य तदतत्सम्बन्धिनि स्यादौ परे प्रत्ययोत्तरपदयोश्च परयोः क्रमात् त्व म इत्येतौ सस्वरावादेशौ स्याताम् । त्व+अद्+अम् । म+अद्+अम् इति स्थितेऽकारस्य लुकि अमो मादेशोऽन्तस्य चाऽऽत्वे त्वाम् माम् । युवाम् । आवाम् ।

**शसो नः । २ । १ । १७ ।**

युष्मदस्मद्भ्यां परस्य तदतत्सम्बन्धिनः शसः स्थाने न् इत्यादेशः स्यात् । 'युष्मदस्मदोः' इत्यात्वे युष्मान् । अस्मान् ।

**टाङ्योसि यः । २ । १ । ७ ।**

युष्मदस्मदोस्तदतत्सम्बन्धिषु टा ङि ओस् इत्येतेषु परेषु यकारोऽन्तादेशः स्यात् । दकारस्य यकारे शेषं पूर्ववत् त्वया मया । भ्यामि युवावादेशोऽन्तस्य आत्वे युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ।

**तुभ्यं मह्यं ङया । २ । १ । १४ ।**

युष्मदस्मदोः स्वान्यसम्बन्धिना चतुर्थ्येकवचनेन ङेप्रत्ययेन

सह तुभ्यं मह्यम् इत्यादेशौ क्रमेण स्याताम् । तुभ्यम् । मह्यम् । युवाभ्याम् । आवाभ्याम् ।

अभ्यम् भ्यसः । २ । १ । १८ ।

युष्मदस्मदोः परस्य स्वान्यसम्बन्धिनः चतुर्थीबहुवचनस्य भ्यसोऽभ्यम् आदेशः स्यात् ।

शेषे लुक् । २ । १ । ८ ।

यस्मिन् प्रत्यये परे युष्मदस्मदोरात्त्वयत्त्वादिकार्यमुक्तं ततोऽन्यः शेषः । तस्मिन् शेषे परे तयोरन्तस्य लुक् स्यात् । युष्मभ्यम् । अस्मभ्यम् ।

ङसेश्चात् । २ । १ । १९ ।

युष्मदस्मद्भ्यां परस्य स्वान्यसम्बन्धिनो ङसेस्तत्सहचरितपञ्चमीबहुवचनस्य भ्यसश्च स्थाने अद् इत्यादेशः स्यात् । अकारो व्यञ्जनादित्वनिवृत्त्यर्थः । त्व—मादेशे अकारलुकि शेषे च लुकि पुनः अकारलुकि त्वत् । मत् । युवाभ्याम् । आवाभ्याम् । युष्मत् । अस्मत ।

तव मम ङसा । २ । १ । १५ ।

युष्मदस्मदोस्तदतत्सम्बन्धिना ङसा सह क्रमेण तव ममादेशौ स्याताम् । अकः प्राग् । तव । मम । ओसि युवावादेशोऽन्त्यस्य च यत्वे युवयोः । आवयोः ।

## आम आकम् । २ । १ । २० ।

युष्मदस्मद्भ्यां परस्य स्वान्यसम्बन्धिन आमः स्थाने आकम् आदेशः स्यात् । 'शेषे लुक्' इति दलोपे युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु । अथानयोर्गौणत्वे रूपाणि निरूप्यन्ते— त्वां मां वाऽतिक्रान्तः इति विग्रहे युष्मदस्मदोरेकत्वे [illegible] वर्तमानत्वेन सर्वत्र स्यादौ त्व—मादेश-भवनात् समासे अतित्वद् अतिमद् इत्येवंरूपौ शब्दौ ज्ञातव्यौ, ततोऽग्रे स्यादयः । अतित्वच्छब्दस्य रूपाणि— अतित्वम् अतित्वाम् अतियूयम् । अतित्वाम् २ अतित्वान् । अतित्वया अतित्वाभ्याम् अतित्वाभिः । अतितुभ्यम् अतित्वाभ्याम् अतित्वभ्यम् । अति-त्वद् अतित्वाभ्याम् अतित्वत् । अतितव अतित्वयोः अतित्वाकम् अतित्वयि अतित्वयोः अतित्वासु । अतिमच्छब्दस्य—अत्यहम् अतिमाम् अतिवयम् । अतिमाम् अतिमाम् अतिमान् । अतिमया अतिमाभ्याम् अतिमाभिः । अतिमह्यम् अतिमाभ्याम् अतिमभ्यम् । अतिमद् अतिमाभ्याम् अतिमत् । अतिमम अतिमयोः अतिमा-कम् । अतिमयि अतिमयोः अतिमासु । युवामावां वाऽतिक्रान्त इति विग्रहे सर्वत्र युवावादेशभवनाद् अतियुवद्—अत्यावद्—शब्दौ बोधव्यौ । अतियुवद्शब्दस्य रूपाणि— अतित्वम् अतियुवाम् अतियूयम् । अतियुवाम् अतियुवाम् अतियुवान् । अतियुवया अतियुवाभ्याम् अतियुवाभिः । अतितुभ्यम् अतियुवाभ्याम् अति-युवभ्यम्। अतियुवद् अतियुवाभ्याम अतियुवद्। अतितव अतियुवयोः

अतियुवाकम् । अतियुवयि अतियुवयोः अतियुवासु । अत्यावच्छब्दरूपाणि– अत्यहम् अत्यावाम् अतिवयम् । अत्यावाम् अत्यावाम् अत्यावान् । अत्यावया अत्यावाभ्याम् अत्यावाभिः । अतिमह्यम् अत्यावाभ्याम् अत्यावभ्यम् । अत्यावद् अत्यावाभ्याम् अत्यावत् । अतिमम अत्यावयोः अत्यावाकम् । अत्यावयि अत्यावयोः अत्यावासु । युष्मानस्मान् वाऽतिक्रान्त इति विग्रहे युष्मदस्मदोर्बहुत्वे वर्तमानत्वात् समासे त्व-म-युवावादेशा न भवन्तीति अतियुष्मद्–अत्यस्मद्–शब्दौ, ततोऽग्रे विभक्तयः । अतियुष्मच्छब्दरूपाणि — अतित्वम् अतियुष्माम् अतियूयम् । अतियुष्माम् अतियुष्माम् अतियुष्मान् । अतियुष्मया अतियुष्माभ्याम् अतियुष्माभिः । अतितुभ्यम् अतियुष्माभ्याम् अतियुष्मभ्यम् । अतियुष्मद् अतियुष्माभ्याम् अतियुष्मत् । अतितव अतियुष्मयोः अतियुष्माकम् । अतियुष्मयि अतियुष्मयोः अतियुष्मासु । अत्यस्मच्छब्दस्य–अत्यहम् अत्यस्माम् अतिवयम् । अत्यस्माम् अत्यस्माम् अत्यस्मान् । अत्यस्मया अत्यस्माभ्याम् अत्यस्माभिः । अतिमह्यम् अत्यस्माभ्याम् अत्यस्मभ्यम् । अत्यस्मद् अत्यस्माभ्याम् अत्यस्मत् । अतिमम अत्यस्मयोः अत्यस्माकम् । अत्यस्मयि अत्यस्मयोः अत्यस्मासु । तथा चोक्तं पाणिनीये—

समस्यमाने द्व्येकत्व–वाचिनी युष्मदस्मदी ।
समासार्थोऽन्यसङ्ख्यश्चेद् युवावौ त्वन्मदावपि ॥१॥

सु-जस्-ङे-ङस्सु परत आदेशाः स्युः सदैवैते ।
त्वाहौ यूय-वयौ तुभ्यं मह्यं तव-ममावपि ॥ २ ॥
एते परत्वाद् बाधन्ते युवावौ विषये स्वके ।
त्वन्मदावपि बाधन्ते पूर्वविप्रतिषेधतः ॥ ३ ॥
द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।
तयोरद्व्येकतार्थत्वाद् न युवावौ त्वमावपि ॥ ४ ॥

अथ तयोरादेशा निरूप्यन्ते—

**पदाद्युग्विभक्त्यैकवाक्ये वस्–नसौ बहुत्वे । २ । १ । २१ ।**

द्वितीया चतुर्थी षष्ठी च युग्विभक्तिः, तया साकं पदात् परयोर्युष्मदस्मदोः स्थाने क्रमाद् वस्–नसावादेशौ स्याताम् । तच्चेत् पदं युष्मदस्मदौ चैकस्मिन् वाक्ये स्याताम् । धर्मो वः पापाद् रक्षतु; धर्मो युष्मान् पापाद् रक्षतु । धर्मो नः सदा सुगतिं नयतु । धर्मोऽस्मान् सदा सुगतिं नयतु । धर्मो वो धनं ददातु । धर्मो युष्मभ्यं धनं ददातु । एवं धर्मो नो ज्ञानं ददातु, अस्मभ्यं वा । स्वामी वो बलवान् धर्मः, युष्माकं वा । स्वामी नो वीतरागो देवः, अस्माकं वा । पदादिति किम् । युष्मान् रक्षतु । एकवाक्ये इति किम् । ओदनं पच युष्माकं भविष्यति ।

**द्वित्वे वाम्–नौ । २ । १ । २२ ।**

युग्विभक्तिद्विवचनेन सह पदात् परयोर्युष्मदस्मदोः स्थाने वाम्

नौ इत्येतावादेशौ वा स्याताम् । जिनोऽयं वां नौ पातु, युवाम् आवां वा । अक्षयसौख्यं वां नौ दद्याद्, युवाभ्याम् आवाभ्याम् वा । जिनोदिते धर्मे प्रसन्नं मनो वां नौ सदा भूयाद्, युवयोरावयोर्वा ।

ङे–ङसा ते–मे । २ । १ । २३ ।

पदात् परयोर्युष्मदस्मदोर्ङे–ङसा सह ते मे इत्यादेशौ वा स्याताम् । धर्मस्ते कल्याणं ददातु, तुभ्यं वा । धर्मो मे चारित्रं ददातु, मह्यं वा । जिनसेवा ते धनमस्ति, तव वा । शीलं मे धनमस्ति, मम वा ।

अमा त्वा–मा । २ । १ । २४ ।

पदात् परयोर्युष्मदस्मदोर्द्वितीयैकवचनेनामा सह त्वा-मा इत्यादेशौ स्याताम् । जिनस्त्वा नरकाद् रक्षतात्, त्वां वा, मा पालयद्, मां वा ।

नित्यमन्वादेशे । २ । १ । ३१ ।

उक्तस्यानुवचनमन्वादेशः, तद्विषये पदात् परयोर्युष्मदस्मदोर्यत् काय कथितं तन्नित्यं स्यात् । यूयं सुशीलास्तस्माद् गुरवो वो मानयन्ति । वयं विनीता अत उपाध्याया नो मानयन्ति ।

असदिवामन्त्र्यं पूर्वम् । २ । १ । २५ ।

युष्मदस्मद्भ्यां पूर्वमामन्त्र्यं पदमसदिव स्याद्, अतो वस्नसादयो न स्युः । भो आचार्या युष्मान् रक्षतु धर्मः ।

जस् विशेष्यं वाऽऽमन्त्र्ये । २ । १ । २६ ।

युष्मदस्मद्भ्यां पूर्वं विशेष्यं जस्प्रत्ययान्तं सम्बोधनवाचि पदं तद्विशेषणभूते सम्बोधनवाचिनि पदे परेऽसदिव वा स्यात् । विकल्पार्थो योगारम्भः । जिनाः शरण्या युष्मान् शरणं प्रतिपद्यामहे । पक्षे जिनाः शरण्या वः शरणं प्रतिपद्यामहे ।

नाऽन्यत् । २ । १ । २७ ।

युष्मदस्मद्भ्यां पूर्वं जस्प्रत्ययान्तादन्यद् विशेष्यं सम्बोधनवाचि पदं तद्विशेषणभूते सम्बोधनवाचिनि पदे परेऽसदिव न स्यात्। आचार्य भगवन् त्वा शरणं प्रतिपद्ये । आचार्य भगवन् वां शरणं स्वीकुर्वे ।

दृश्यर्थैश्चिन्तायाम् । २ । १ । ३० ।

चिन्तायां वर्तमानैर्दृश्यर्थकधातुभिर्योगे वस्नसादि न स्यात् । मनसा त्वा समीक्षते ध्यायति स्मरति वा । परम्परासम्बन्धेऽपि न स्यात । भक्तस्तव रूपं ध्यायति, अत्र ध्यानेन सह सम्बद्धं रूपं तेन सह सम्बद्धस्य तवेत्यस्य परम्परासम्बद्धत्वाद् न भवति ।

सपूर्वात् प्रथमान्ताद् वा । २ । १ । ३२ ।

पूर्वपदसहितात् प्रथमान्तात् पदात् परयोर्युष्मदस्मदोरन्वादेशो वस्नसादय आदेशा वा स्युः । यूयं विवेकिनस्तद गुरवो वः सम्मानयन्ति, तद् गुरवो युष्मान् सम्मानयन्ति वा ।

चाह–ह–वैव–योगे। २। १। २९।

च अह ह वा एव इत्येतैर्योगे सम्बन्धे सति पदात् परयोर्युष्मदस्मदोर्यदुक्तं तन्न स्यात्। आचार्यस्त्वां मां च रक्षतु। अत्र योगग्रहणेन साक्षात् सम्बन्धे सति निषेधः सूचितः, परम्परासम्बन्धे तु स्यादेव।

इति षड्लिङ्गप्रकरणं समाप्तम्।



## अथ अव्ययप्रकरणम् ।

अव्ययान्यलिङ्गकानि, यदुक्तम्—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥१॥

### चादयोऽसत्त्वे । १ । १ । ३१ ।

सत्त्वं लिङ्गसङ्ख्यावद्, लिङ्ग—सङ्ख्ये न विद्येते यस्मिन् तदसद् अद्रव्यम् । तस्मिन्नद्रव्ये वर्तमानाश्चादयोऽव्ययसंज्ञकाः स्युः । च वा ह अह एव एवं नूनं पृथग् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् इति चादिः, आकृतिगणोऽयम् ।

### स्वरादयोऽव्ययम् । १ । १ । ३० ।

स्वरादयः शब्दा अव्ययसंज्ञकाः स्यु । स्वर् अन्तर् प्रातर् पुनर् भूयस् आहोस्वित् सह नमस् ऋते अन्तरेण अन्तरा अलम् आराद् दूराद् भृशमित्यादिः । आकृतिगणोऽयम् । स्वरादीनां वाच्यरूपोऽर्थश्चादीनां च द्योत्यरूपोऽर्थः ।

### अघण्—तस्वाद्याशसः । १ । १ । ३२ ।

घण्वर्जितास्तसुप्रभृतयः शस्पर्यन्ता ये प्रत्ययास्तदन्तं नामाव्ययं स्यात् । देवा अर्जुनतोऽभवन्, अर्जुनपक्षेऽभवन्नित्यर्थः । ततः

तत्र इह क्व कदा एतर्हि अधुना इदानीम् सद्यः परेद्यवि पूर्वेद्युः उभयेद्युः परुत् परारि ऐषमः कर्हि यथा कथम् पञ्चधा एकधा ऐकध्यम् द्वेधम् द्वि पञ्चकृत्वः सकृत् बहुधा प्राक् दक्षिणतः पश्चात् पुरः पुरस्तात् उपरि उपरिष्टात् बहुशः । अधणिति किम् । पथिद्वैधानि संशयत्रैधानि । आ शस इति किम् । पचतिरूपम । ये चाद्यन्तर्गणभूता. प्रादयस्ते धातोः प्रागुपसर्गसञ्ज्ञका भवन्ति । प्र परा अप् सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप श्रद् अन्तर् आविस् एते प्रादयो धातोः प्राक् प्रयोक्तव्याः ।

वत्तस्याम । १ । १ । ३४ ।

वत्—तसि—आमित्येतत्प्रत्ययान्तं नामाव्ययं स्यात् । मुनिना तुल्यं मुनिवद् वृत्तम् । उरसैका दिग् उरस्त · । आम् तद्धितस्यैव ग्राह्यः उच्चैस्तराम् ।

क्त्वा—तुमम् । १ । १ । ३५ ।

क्त्वा—तुम्—अम्—प्रत्ययान्तं नामाव्ययं स्यात् । कृत्वा, कर्तुम्, यावज्जीवम् ।

गतिः । १ । १ । ३६ ।

गतिसञ्ज्ञकं नामाव्ययं स्यात् । अदः कृत्वा, अत्राव्ययत्वाद् "अतः कृकमि—'इत्यादिना सकारो न जातोऽतो विसर्ग एव ।

अव्ययस्य । ३ । २ । ७ ।

अव्ययसम्बन्धिनः स्यादेर्लुक् स्यात् । तथा अवोपसर्गस्य तनिक्रीणात्योः परयोर्विकल्पेन वादेशः, अप्युपसर्गस्य च धाग्नहोः परयोर्विकल्पेन पि इत्यादेशश्च अवतंसः वतंसः, अवक्रयः वक्रयः, अपिधानं पिधानम्, अपिनद्ध पिनद्ध । केचित्तु सर्वत्रैवेच्छन्ति, तथा चोक्तम्—

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हसन्तानां यथा वाचा निशा दिशा ॥१॥

**इति अव्ययप्रकरणं समाप्तम् ।**



# अथ स्त्रीप्रत्ययप्रकरणम् ।

## आत् । २ । ४ । १८ ।

स्त्रियां वर्तमानादकारान्ताद् नाम्नः पर आप् प्रत्ययः स्यात् । सुभद्रा । सीता । चन्दना । यक्षा । शाला । माला । माया । दोला ।

## अजादेः । २ । ४ । १६ ।

अजादिसम्बन्धिन्यां स्त्रियां वर्तमानेभ्योऽजादिभ्यः पर आप् प्रत्ययः स्यात् । जातिलक्षण-वयोलक्षणादिङ्यादिबाधनार्थं व्यञ्जनान्तानां चाप्राप्तौ विधानार्थं वचनम् । अजा खट्वा एडका अश्वा चटका मुषिका कोकिला इत्यादौ जातिलक्षणो ङीर्न भवति । बाला वत्सा होडा मन्दा विलाता एषु वयोलक्षणो ङीर्न भवति । क्रुञ्चा उष्णिहा देवविशा एषु व्यञ्जनान्तानामपि आब् भवति । ज्येष्ठा कनिष्ठा मध्यमा एषु पुंयोगेऽप्याप् । नञ्पूर्वाद् मूलादपि आप् अमूला ।

## अस्यायत्तत्क्षिपकादीनाम् । २ । ४ । १११ ।

यत्—तत्—क्षिपकादिवर्जितस्य नाम्नोऽकारस्य स्थाने निर्दिष्टप्रत्ययावयवे आप्परे ककारे परे इः स्यात् । आप्पर इति आबेव परो यस्माद् न विभक्तिः स आप्परः, तस्मिन्नाप्परे इत्यर्थः ।

सर्विका पाठिका कारिका हारिका मद्रिका । अस्येति किम् । गोका । निष्ठिन्नककारे परे इत्येव जीवका नन्दका, अत्राशिषि कन् प्रत्ययः । आप्पर इत्येव । कारकः ।

इच्चापुंसोऽनित्क्याप्परे । २ । ४ । १०७ ।

अपुंलिङ्गाच्छब्दाद् विहितस्यापः स्थाने इकारो ह्रस्वश्च वा स्यात्, नकारानुबन्धवर्जितप्रत्ययावयवभूते आप्परे ककारे परतः । अल्पा खट्वा खट्विका खट्वका खट्वाका । गङ्गिका गङ्गका गङ्गाका । कप्प्रत्यये तरादौ च परे पूर्वस्य ह्रस्वो वा भवति । तर-तम-रूप-कल्पादयः तरादयः। तरादौ च पुंवद् वा वेण्येव वेणिका वेणीका । नदी एव नदिका नदीका । अतिशयेन प्रशस्या श्रेयसी अतिशयेन श्रेयसी श्रेयसितरा श्रेयसीतरा पुंवद्भावे च श्रेयस्तरा । बहुव्रीहौ चाबन्तानाबन्तानां वा ह्रस्वः बहुमालाकः बहुमालकः ।

स्त्रियां नृतोऽस्वस्रादेर्ङीः । २ । ४ । १ ।

स्त्रियां वर्तमानाद् नकारान्तादृकारान्ताच्च स्वस्रादिवर्जिताद् नाम्नः परो ङीप्रत्यय स्यात् । राज्ञी । दण्डिनी । करिणी । मालिनी । शुनी । कर्त्री । हर्त्री । अस्वस्रादेरिति किम्

स्वसा तिस्र श्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैव स्वस्रादय उदाहृताः ॥ १ ॥

अधातूदृदितः । २ । ४ । २ ।

धातुवर्जो य उदित् ऋदिच्च प्रत्ययोऽप्रत्ययो वा तदन्ताद् नाम्नः स्त्रियां ङीप्रत्ययो भवति । भवन्ती । पचन्ती । पठन्ती ।

**वा पादः । २ । ४ । ६ ।**

पादिति कृतसमासान्तः, तदन्तात् स्त्रिया ङीर्वा स्यात् । द्विपदी द्विपाद् । सुपदी सुपाद् । ऋचि पादः पात्पदेति निपातौ त्रिपाद् ऋक्, त्रिपदा गायत्री । द्विपदा । एकपदा ।

**णस्वराघोषाद् वनो रश्च । २ । ४ । ४ ।**

णकारान्तात् स्वरान्तादघोषान्ताच्च विहितो यो वन्प्रत्यय-स्तदन्ताद् नाम्नः स्त्रियां ङी. स्यात् । तत्संनियोगे च वनोऽन्तस्य रः स्यात् । वनिति वन्-क्वन्-क्वनिपां सामान्येन ग्रहणम् । उणवन् इति स्थिते ' वन्याङ् पञ्चमस्य ' इति णकारस्यात्त्वे उकारस्य च गुणेऽवादेशे अवावा नरः, स्त्री चेद् अवावरी ब्राह्मणी । एवं धाधातोः धीवरी । पाधातोः पीवरी । दृश्धातो मेरुदृश्वरी इत्यादि. ।

**वा बहुव्रीहेः । २ । ४ । ५ ।**

बहुव्रीहौ तु वा स्यात् । प्रियावावरी प्रियावावा ।

**ताभ्यां वाप् डित् । २ । ४ । १५ ।**

मनन्तादनन्ताच्च बहुव्रीहेः स्त्रियामाब् वा स्यात्, स च डित् । सीमा सीमे सीमाः, पक्षे सीमा सीमानौ सीमानः । बहुराजा बहुराजे बहुराजाः, पक्षे बहुराजा बहुराजानौ बहुराजानः ।

**वा पादः । २ । ४ । ६ ।**

पादिति बहुव्रीहिनिमित्तकः कृतसमासान्त पाच्छब्दः, तद्न्तात् स्त्रियां ङीर्वा स्यात् । द्विपदी द्विपाद् । त्रिपदी त्रिपाद् ।

**मनः । २ । ४ । १४ ।**

मनन्तात् स्त्रियां ङीर्न स्यात् । सीमा सीमानौ सीमानः ।

**अनो वा । २ । ४ । ११ ।**

अनन्ताद् बहुव्रीहेः स्त्रियां ङीर्वा स्यात् । बहुराज्ञी बहुराज्ञ्यौ बहुराज्ञ्य । पक्षे डाप् बहुराजा बहुराजे बहुराजाः, तस्याप्यभावे बहुराजानौ बहुराजानः ।

**नोपान्त्यवतः । २ । ४ । १३ ।**

यस्योपान्त्यलोपो नास्ति स उपान्त्यवान्, तस्मादनन्ताद् बहुव्रीहे स्त्रियां ङीर्न स्यात् । सुपर्वा सुपर्वाणौ सुपर्वाण. ।

**दाम्नः । २ । ४ । १० ।**

संख्यादेर्दामन्शब्दान्ताद् बहुव्रीहेः स्त्रिया ङीः स्यात् । द्विदाम्नी । त्रिदाम्नी । पूर्वं सङ्ख्यावाचिनोऽभावे तु उद्दामानं पश्य ।

**अणञेयेकण्नञ्स्नञ्टिताम् । २ । ४ । २० ।**

अण् अञ् एय इकण् नञ् स्नञ् टित् एषां प्रत्ययान्तानां योऽकारस्तदन्ताद् नाम्नस्तेषामेवाणादिसम्बधिन्या स्त्रियां वाच्यायां ङीः स्यात् । औपगवी । वैदी । सौपर्णेयी । आक्षिकी । स्त्रैणी । पौंस्नी जानुदघ्नी । पञ्चतयी । उभयी ।

**गौरादिभ्यो मुख्याद् ङीः । २ । ४ । १९ ।**

गौरादिगणपठिताद् मुख्याद् नाम्नः स्त्रियां ङीप्रत्ययः स्यात् । गौरी । शबली । नदी । कल्माषी । सारङ्गी । नर्तकी । अनड्वाही । अनडुही । पीप्पली । आकृतिगणोऽयम् ।

**संख्यादेर्हायनाद् वयसि । २ । ४ । ९ ।**

संख्यादेर्हायनान्ताद् नाम्नः स्त्रियां ङीप्रत्ययः स्याद्, वयसि गम्यमाने । द्विहायनी । 'चतुस्त्रेर्हायनाद् वयसि' इति नस्य णत्वे चतुर्हायणी । त्रिहायणी ।

**पुरुषाद् वा । २ । ४ । २५ ।**

प्रमाणवाचिपुरुषान्ताद् द्विगोः स्त्रियां ङीर्वा स्यात् तद्धित-लुकि । द्विपुरुषी द्विपुरुषा परिखा ।

**वरुणेन्द्ररुद्रभवशर्वमृडादान् चान्तः । २ । ४ । ६२ ।**

एभ्यो धववाचिनामभ्यस्तद्योगे स्त्रियां ङीः स्यात्, तत्संनि-योगे आन् चान्तः । वरुणानी । इन्द्राणी । रुद्राणी । भवानी । शर्वाणी । मृडानी । मातुलाचार्योपाध्यायेभ्योङीस्तद्योगेवाऽऽन् चान्तः । मातुलानी मातुली । आचार्यानी आचार्यी । उपाध्यायानी उपाध्यायी ।

**आर्यक्षत्रियाद् वा । २ । ४ । ६६ ।**

आभ्यां ङीर्वा स्यात्, तत्सन्नियोगे आन् चान्तः स्वार्थे ।

आर्याणी आर्या । क्षत्रियाणी क्षत्रिया । पुंयोगे तु आर्यस्य स्त्री आर्यी, क्षत्रियी । हिमारण्ययोर्महत्त्वेऽर्थे वाच्ये ङीस्तत्संनियोगे चान् । महद् हिमं हिमानी, महदरण्यमरण्यानी । यवनाच्च लिप्यां यवनस्य लिपिः यवनानी । यवाद् दोषे दुष्टा यवा यवनी ।

**द्विगोः समाहारात् । २ । ४ । २२ ।**

अकारान्तसमाहारद्विगोः स्त्रियां ङीः स्यात् । त्रयाणां लोकानां समाहारः त्रिलोकी । पञ्चराजी । पात्राद्यन्तानां ङीर्न पञ्चपात्रं त्रिभुवनं चतुष्पथम् । अकारान्तादिति पञ्चाग्नयः समाहृताः पञ्चाग्नि, समाहारस्य नपुंसकत्वं ह्रस्वत्वं च । त्रिफला इति स्रजादिपाठात् ।

**धवाद् योगादपालकान्तात् । २ । ४ । ५९ ।**

धवो भर्ता, तद्वाचिनोऽकारान्ताद् योगात् सम्बन्धात् स्त्रियां वर्तमानाद् नाम्नः परो ङीः स्यात् । गणकस्य स्त्री गणकी । प्रष्ठस्य स्त्री प्रष्ठी । शूद्रस्य स्त्री शूद्री । अपालकान्तादिति किम् । गोपालकस्य स्त्री गोपालिका । एवम् अश्वपालिका ।

**सूर्याद् देवतायां वा । २ । ४ । ६४ ।**

धववाचिनः सूर्यशब्दाद् योगात् स्त्रियां वर्तमानाद् ङीर्वा स्यात्, तद्योगे आन् चान्त । सूर्यस्य स्त्री देवता सूर्याणी सूर्या वा । अन्यत्र मानुष्यां सूरी ।

जातेरयान्तनित्यस्त्रीशूद्रात् । २ । ४ । ५४ ।

जातिवाचिनोऽकारान्ताद् नाम्नः स्त्रियां ङीः स्याद्, न चेत्तद् यान्तं नित्यस्त्रीजातिवाचि शूद्रशब्दश्च स्यात् । तत्र जातिरनुगत-संस्थानव्यङ्ग्या एका यथा गोत्वादिः, सकृदुपदेशव्यङ्ग्यत्वे सत्य-त्रिलिङ्गान्या यथा ब्राह्मणी, गोत्रचरणलक्षणाऽपरा यथा कठी; तथाचोक्तम्—

आकृतिग्रहणा जातिर्लिङ्गानां न च सर्वभाक् ।
सकृदुपदेशनिर्ग्राह्या गोत्रं च चरणै सह ॥ १ ॥

कुक्कुटी । तटी । पात्री । वृषली । नाडायनी । बहूवृची । जातेरिति किम् मुण्डा, शुक्ला । अयान्तेति किम् इभ्या । गवय-हय-मुकय-मनुष्य-मत्स्यानां तु गौरादिपाठाद् गवयी हयी मुकयी मनुषी मत्सी । नित्यस्त्रीति किम् यूका खट्वा । शूद्रेति किम् शूद्रा । महाशूद्री इति त्वाभीरजातिविशेषः, पुंयोगे तु महाशूद्रस्य स्त्री महाशूद्री ।

वयस्यनन्त्ये । २ । ४ । २१ ।

अन्त्यवयोवर्जिताद् वयोवाचिनोऽदन्ताद् नाम्नः स्त्रिया ङीः स्यात् । कुमारी । वधूटी । चरटी । तरुणी । अनन्त्य इति किम् स्थविरा ।

असह—नञ्—विद्यमान—पूर्वपदात्
स्वाङ्गादक्रोडादिभ्यः । २ । ४ । ३८ ।

सह-नञ्-विद्यमान-वर्जितपूर्वपदं यत् क्रोडादिवर्जं स्वाङ्गं तदन्ताद्-

कारान्तात् स्त्रियां ङीर्वा स्यात् । सुमुखी अतिकेशी पक्षे सुमुखा अतिकेशा । असहनञित्यादि किम् सहकेशा, अकेशा, विद्यमानकेशा, कल्याणीक्रोडा इत्यादौ न भवति । अत्र स्वाङ्गं पारिभाषिकं ग्राह्यं यदुक्तम्—

अविकारोऽद्रवं मूर्तं प्राणिस्थं स्वाङ्गमुच्यते ।
च्युतं च प्राणिनस्तत् तन्निभं च प्रतिमादिषु ॥ १ ॥

तेन सुशोफा इति विकारत्वात्, सुस्वेदा इति द्रवत्वात्, सुज्ञाना इत्यमूर्तत्वाद् ङीभाजो न भवन्ति। सुकेशी रथ्या, सुमुखी प्रतिमा इत्यादौ स्वस्याङ्गत्वाभावेऽपि पारिभाषिकस्वाङ्गत्वाद ङीः।

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात्** ।२।४।३९।

असहादिपूर्वपदेभ्य एभ्यो ङीर्वा स्यात् । सुनासिकी सुनासिका । कृशोदरी कृशोदरा। लम्बोष्ठी लम्बोष्ठा। श्लक्ष्णजङ्घी श्लक्ष्णजङ्घा । श्वेतदन्ती श्वेतदन्ता । सुन्दरकर्णी सुन्दरकर्णा । वक्रशृङ्गी वक्रशृङ्गा । बलवद्गात्री बलवद्गात्रा। शङ्खकण्ठी शङ्खकण्ठा। पूर्वेणैव सिद्धे बहुस्वरस्य संयोगोपान्त्यस्य च स्वाङ्गस्य यदि ङीस्तदा एषामेव तेनान्येषा न भवतीति नियमार्थं सूत्रम् ।

**नखमुखादनाम्नि** । २ । ४ । ४० ।

आभ्या स्वाङ्गाभ्यामसञ्ज्ञायामेव ङीर्वा स्यात् । सूर्पनखी सूर्पनखा । चन्द्रमुखी चन्द्रमुखा। अयमपि नियमार्थस्तेनैतदन्तयोरसञ्ज्ञायामेवेति । सूर्पणखा सञ्ज्ञायाम् ।

इतोऽक्त्यर्थात् । २ । ४ । ३२ ।

क्त्यर्थप्रत्ययान्तवर्जितादिकारान्ताद् नाम्नः स्त्रियां ङीर्वा स्यात् । रात्री रात्रिः । धूली धूलिः । शकटी शकटिः । भूमी भूमिरित्यादिः । अक्त्यर्थादिति किम् कृतिः, अजननिः ।

मनोरौ च वा । २ । ४ । ६१ ।

मनुशब्दाद् धवयोगात् स्त्रियां वर्तमानाद् ङीर्वा स्यात्, तत्संनियोगे च औकार एकारश्चान्तादेशः स्यात् । मनोः स्त्री मनावी मनायी मनुः ।

पूतक्रतुवृषाकप्यग्निकुसितकुसिदादै च । २ । ४ । ६० ।

धवयोगात् स्त्रियां वर्तमानेभ्य एभ्यो ङीर्वा स्यात्, तत्सन्नियोगे चैकारोऽन्तादेशः स्यात् । पूतक्रतोः स्त्री पूतक्रतायी । वृषाकपायी । अग्नायी । कुसितायी । कुसिदायी ।

सपत्न्यादौ । २ । ४ । ५० ।

पत्यन्ताद् स्त्रियां नित्यं ङीर्नकारश्चान्तादेशः । समानः पतिर्यस्याः सपत्नी । एकपत्नी । वीरपत्नी इत्यादिः ।

पतिवत्न्यन्तर्वत्न्यौ भार्या—गर्भिण्योः । २ । ४ । ५३ ।

भार्या जीवद्भर्तृका, तस्यां वाच्यायां पतिशब्दाद् ङीः, प्रकृतेश्च पतिवत्नादेशः पतिवत्नी । गर्भिण्यां वाच्यायामन्तर्वच्छब्दाद् ङीः, अन्तर्वत्नादेशश्च अन्तर्वत्नी । वीवाहितायां स्त्रियां केवलपति-

शब्दादपि ङीर्नान्तादेशश्च वक्तव्यः । पत्नी । पाणिगृहीति इत्यादिशब्दा निपातनात् साधवो ज्ञेयाः। अशिशुशब्दाद् बहुव्रीहौ अशिश्वी। नारी-सखी-पङ्गू-श्वश्रूणामपि निपातनात् सिद्धिर्वेदितव्या।

अञ्चः । २ । ४ । ३ ।

अञ्चन्तात् स्त्रियां ङीः स्यात् । सविता प्राग् गच्छति यस्यां सा प्राची दिग् । पश्चाद् गच्छति सा प्रतीची । एवम् उदीची । समीची । प्राञ्ची इत्यादयः ।

स्वरादुतो गुणादखरोः । २ । ४ । ३५ ।

स्वरात् परोऽर्थादेकवर्णमात्रव्यवहितो य उकारस्तदन्तात् खरुवर्जिताद् गुणवचनाद् नाम्नः स्त्रिया ङीर्वा स्यात् । पट्वी पटु । मृद्वी मृदुः । तन्वी तनुः । साध्वी साधुः । स्वरादिति किम् पाण्डुर्भूमिः । उदिति किम् शुचिः । गुणादिति किम् आखुः । अखरोरिति किम् खरु ।

उतोऽप्राणिनश्चायु–रज्ज्वादिभ्य ऊङ् । २ । ४ । ७३ ।

उकारान्तादप्राणिवाचिनो मनुष्यजातिवाचिनश्च नाम्नः स्त्रियामूङ् प्रत्ययः स्याद्, युशब्दान्तं रज्ज्वादिशब्दं च वर्जयित्वा । कुरूः । इक्ष्वाकूः । अलाबूः । कर्कन्धूः । उदिति किम् विट् । युरज्ज्वादिवर्जनाद् अध्वर्युः रज्जुरित्यादौ ऊङ् न । युवन्शब्दात्

तिर्वाच्यः युवतिः । ङ्यां सर्वत्राकारलोपो वक्तव्यः । भाजादीनां पक्वादौ भाजी पक्वा, कबरी केशपाशः । उपमानसहितादिपूर्वादूरोरूङ् करभोरूः । सहितोरूः । वामोरूः । ङी—आदूदीतां के परे ह्रस्वः कचि परे ह्रस्वाभावश्च । अनुक्तं सर्वं सिद्धहेमशब्दानुशासनाद् वेदितव्यम् ।

इति स्त्रीप्रत्ययप्रकरणं समाप्तम् ।



# अथ कारकप्रकरणम् ।

## क्रियाहेतुः कारकम् । २ । २ । १ ।

क्रियाया हेतुः कारणं कर्तृ-कर्म-करणादि तत् कारकसञ्ज्ञं स्यात् । तच्च शक्तिविशेषरूपम्, शक्ति-शक्तिमतोरभेदाद् मैत्रादीनां कारकत्वम् । करोतीति कारकमित्यन्वर्थसञ्ज्ञासमाश्रयणेनानाविष्ट-व्यापाराणां हेत्वादीना निमित्तमात्रत्वात् कारकसञ्ज्ञा न भवति ।

## स्वतन्त्रः कर्ता । २ । २ । २ ।

क्रियायां हेतुभूत क्रियासिद्धावपराधीनतया प्रधानीभूत स्वतधात्वर्थव्यापाराश्रयत्वेन विवक्षित कारकविशेषः कर्तृसञ्ज्ञकः स्यात् । जिनेन्द्रेणोपदिष्टं प्रवचनम् । श्राद्धेन क्रियते जिनमन्दिरम् ।

## नाम्नः प्रथमैक–द्वि–बहौ । २ । २ । ३१ ।

एकत्वद्वित्वबहुत्वविशिष्टेऽर्थे वर्तमानाद् नाम्नः परात् क्रमेण सि–औ–जस्रूपा प्रथमा विभक्ति स्यात् । कर्मादिकारकेषु अनुक्तेषु द्वितीयादीना विधास्यमानत्वेन प्रकृते च विशेषानभिधानेनाविशिष्टार्थमात्रे प्रथमा विज्ञेया । तत्र अर्थो द्विविधः अभिधेयरूपो द्योत्यरूपश्च । तत्राद्यः स्वार्थद्रव्यलिङ्गसङ्ख्याशक्तिलक्षणः पञ्चकः समग्रोऽसमग्रो वा नामार्थः । शब्दस्यार्थे प्रवृत्तौ निमित्तभूत. स्वरूप-जाति-गुण-क्रिया-सम्बन्धादिरूपः स्वार्थः । यत्तदादि-

शब्दाभिधेयं सत्त्वभूतं विशेष्यं द्रव्यम् । स्त्रीत्व-पुंस्त्व-नपुंसकत्वरूपं ङी-आप्-ऊङादिप्रत्ययहेतुभूतं लिङ्गम्, तच्च शब्दधर्मोऽर्थधर्मो वा। संख्या एकत्वद्वित्वादिरूपा । शक्तिः क्रियोत्पत्तौ हेतुभूता कारकत्वरूपा । पञ्चको नामार्थः डित्थः, डवित्थः, गौः, शुक्लः, कारकः, दण्डी इत्यादौ। त्वम्, अहम्, पञ्च, कति इत्यादौ चतुष्कः, अलिङ्गत्वात्। धवश्च खदिरश्चेत्यादौ चाव्ययस्य द्योत्यरूपोऽर्थः ।

## आमन्त्र्ये । २ । २ । ३२ ।

प्रसिद्धतत्सम्बन्धस्य किमप्याख्यातुं संमुखीकरणमामन्त्रणम्, तद्विषय आमन्त्र्यः । तस्मिन्नर्थे वर्तमानाद् नाम्न एकद्विबहुत्वविशिष्टार्थे सि-औ-जस्लक्षणा प्रथमा स्यात् । हे देव ! । हे देवौ! । हे देवाः ! ।

## कर्तुर्व्याप्यं कर्म । २ । २ । ३ ।

कर्त्रा स्वक्रियया यद् व्याप्तुमिष्यते तद् व्याप्यं सत् कारकं कर्मसञ्ज्ञं स्यात् । तच्च निर्वर्त्य-विकार्य-प्राप्यभेदात् त्रिधा भिद्यते । तत्रोत्पत्त्याऽसत् यत् सञ्जायते सद्वा जन्मना प्रकाश्यते तद् निर्वर्त्यम् कटं करोति, पुत्रं प्रसूते । प्रकृत्युच्छेदेन गुणान्तराधानेन वा यद् विकृतिमापद्यते तद् विकार्यम् काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोति । यत्र तु दर्शनादनुमानाद् वा क्रियाकृतो विशेषो नाप्यते तत् प्राप्यम् आदित्यं पश्यति, ग्रामं गच्छति । कर्तुः किम् माषेष्वश्वं बध्नाति, अत्र कर्मणोऽश्वरूपस्य व्याप्या माषा

न कर्तुः। वीति किम् पयसा ओदनं भुङ्क्ते, अत्र करणस्य मा भूत्। पुनस्तत् कर्म त्रिविधम् इष्टमनिष्टमनुभयं च। यदिच्छाविषयीभूतं सदाप्तुं क्रियामारभते तदिष्टं घटादि। यद् द्विष्टं स्तत् प्राप्यते तदनिष्टं विषादि विषं भक्षयति, अहिं लङ्घयति। यत्र नेच्छा न च द्वेषस्तदनुभय यथा ग्रामं गच्छन् तृणं स्पृशति। पुनस्तद् द्विविधं प्रधानेतरभेदात्, तच्च द्विकर्मकधातूनां ज्ञेयम्। दुहि—भिक्षि—रुधि-प्रच्छि-चिञ्-ब्रूञ्-शास्वर्थेषु याचि-जयति-प्रभृतिषु च सत्सु यथा गां दोग्धि पयः, पुरोहितं गा भिक्षयते, व्रजं गामवरुणद्धि, छात्रं पन्थानं पृच्छति, वृक्षं फलान्यवचिनोति, शिष्य धर्मं ब्रूते शास्ति च, क्रुद्धं शान्तिं याचते, याचिरिहानुनयार्थस्तेन भिक्ष्यर्थाद् भेदः; गर्गान् शतं जयति, अमृतमम्भोधिं मथ्नाति, देवदत्त शतं मुष्णाति। तथा नी-हृ-वहि-कृषीणा च ग्राममजा नयति हरति बहति कर्षति वा, तन्दुलान् ओदनं पचति। 'स्मृत्यर्थदयेशा व्याप्यं वा कर्म' मातरं स्मरति, मातु. स्मरति पक्षे षष्ठी।

**कालाध्वभावदेशं वाऽकर्म चाकर्मणाम्। २। २। २३।**

काल· मुहूर्तादिरूप, अध्वा गन्तव्य क्षेत्रं क्रोशादि, भावः क्रिया, देशो जनपद·, अकर्मकधातुना योगे य· कालादिराधारः स कर्मसञ्ज्ञो वा स्याद्, अकर्म च कर्माकर्मसञ्ज्ञो युगपद् भवतीत्यर्थः। मासमास्ते, मास आस्यते। क्रोशं स्वपिति, क्रोशः सुप्यते। गोदोहमास्ते, गोदोह आस्यते। कुरून् आस्ते, कुरव आस्यन्ते। युगपद्-

विधानाद् मासमास्यते । पक्षेऽधिकरणत्वाद् मासे आस्ते इत्यादि । 'अविवक्षितकर्माणः सकर्मका अप्यकर्मकाः स्युः' मास पचति, मास पच्यते, मासे पचतीत्यादि ।

## गतिबोधाहारार्थ-शब्दकर्म-नित्याकर्मणामनीखाद्यदि-ह्वा-शब्दाय-क्रन्दाम् । २ । २ । ५ ।

गत्याद्यर्थाना, शब्दः क्रिया येषां ते अथवा शब्दरूपं कर्म येषां ते शब्दकर्माणस्तेषामकर्मकाणां चाणिगवस्थायां यः कर्ता स णौ सति कर्मसञ्ज्ञः स्याद्, न्यादिं धातु वर्जयित्वा । गच्छति मैत्रो ग्रामं, गमयति मैत्रं ग्रामं चैत्रः । जानाति शिष्यो धर्मं, ज्ञापयति शिष्यं धर्मं गुरुः । भुङ्क्ते पुत्र ओदनं, भोजयति पुत्रमोदनं माता । जल्पति जिनदासो द्रव्यं, जल्पयति जिनदासं द्रव्यं जिनदत्तः । शृणोति जिनपालः शब्दं, श्रावयति जिनपालं शब्दं धर्मपाल. । नित्याकर्मकः— आस्ते कुमारपालः, आसयति कुमारपालं हेमचन्द्रः । कालाध्वभावदेशैः सर्वेऽपि धातवः सकर्मका एवेत्यन्यापेक्षया नित्याकर्मकत्वं ज्ञेयम् । न्यादिधातूनां वर्जनाद् नयति ग्राममजां मैत्रः, नाययति ग्राममजां मैत्रेण चैत्र इत्यादौ कर्तृत्वात् तृतीयैव । प्रयोजकव्यापारेण प्रयोज्यकर्तुर्व्याप्यमानत्वात् कर्मसञ्ज्ञा सिद्धैवेति प्रयोजकव्यापारेण व्याप्यमानत्वेन कर्तुर्यदि कर्मसञ्ज्ञा तदैषामेवेति नियमार्थ आरम्भस्तेन पचत्योदनं शिवदत्तः, पाचयत्योदनं शिवदत्तेन यज्ञदत्त इत्यादौ पूर्वेणापि कर्मसञ्ज्ञाभावात्

कर्तरि तृतीयैव। ह्वक्रोरणिक्कर्तुर्णौ वा कर्मत्वम्। वहेरपि क्वचिद् वहति भारं तुरङ्गमः, वाहयति भारं तुरङ्गमेण ब्राह्मणः।

कर्मणि। २। २। ४०।

गौणाद् नाम्नः कर्मणि कारके द्वितीया स्यात्। आख्यातपदेनासामानाधिकरण्यं गौणत्वम्। घटं करोति। जिनेन्द्रं पश्यति। गुरुं प्रणमति। त्यादि-कृत्-तद्धित-समासादिभिरुक्ते तु कर्मणि प्रथमैव 'उक्तार्थानामप्रयोगः' इति न्यायात्। घटः क्रियते। जिनेन्द्रो दृष्टः। स्नानीयं चूर्णम्। दानीयो मुनिः। गोमान् चैत्रः। शतेन क्रीतः शत्यः। नता देवेन्द्रा यं स नतदेवेन्द्र इत्यादि। नी-हृत्यादीनामुभयकर्मणां धातूनां कर्मणोः प्रधानेतरता, यस्मै क्रियाऽऽरभ्यते तद् दुग्धादि प्रधानं कर्म, यत्तु तत्सिद्ध्यै क्रियया व्याप्यते गवादि तद् गौणम्, गोपालो गां पयो दोग्धि। यदा पयःप्रभृत्यर्थाः कर्त्रादेः प्रवृत्तिरविवक्षिता तदा गवादेरेव मुख्यता। तत्र दुह्यादीनां गौणे कर्मणि कर्मजप्रत्ययो भवति। गोपालकेन गौः पयो दुह्यते। गुरुणा शिष्योऽर्थमुच्यते। 'न्यादीनां धातूनां तु मुख्ये कर्मणि' नीयते गौर्द्विजैर्ग्रामम्। उह्यते भारो ग्रामं चैत्रेणेत्यादयः।

सर्वोभयाभिपरिणा तसा। २। २। ३९।

तस्प्रत्ययान्तैस्सर्वादिभिर्युक्ताद् गौणाद् नाम्नो द्वितीया स्यात्। सर्वतो ग्रामं नदी वहति। अभितो ग्रामं नदी वहति। उभयतो ग्रामं पर्वताः। परितो जिनेन्द्रमिन्द्राः।

**द्वित्वेऽधोऽध्युपरिभिः । २ । २ । ३४ ।**

एषां द्वित्वे सति एभिर्युक्ताद् गौणाद् नाम्नो द्वितीया स्यात्। अधोऽधो ग्रामं वनानि सन्ति । अध्यधि ग्रामं क्षेत्राणि । उपर्युपरि श्राद्धं याचका पतन्ति ।

**गौणात् समया-निकषा-हा-धिगन्तराऽन्तरेणाति-येन-तेनैर्द्वितीया । २ । २ । ३३ ।**

एभिर्युक्ताद् गौणाद् नाम्नो द्वितीया स्यात् । समया ग्रामं क्षेत्राणि वर्तन्ते । निकषा ग्रामं जिनेन्द्रसमवसरणम् । हा जिना-भक्तं तस्य शोचत इत्यर्थः । धिग् मिथ्यादृष्टिम् । अन्तरा निषधं नीलं च मेरुः । जिनदर्शनमन्तरेण न सम्यगवाप्तिः । अति कुरून् महद् बलं कुर्वतिक्रमेण वृद्धमित्यर्थः । येन पश्चिमां गतः । तेन पश्चिमा नीतः ।

**लक्षण-वीप्स्येत्थम्भूतेष्वभिना । २ । २ । ३६ ।**

लक्षण चिह्नम्, समुदायस्यावयवशः क्रियाभि. कृत्स्नेन प्राप्तुमिच्छा वीप्सा तत्कर्म वीप्स्यम्, केनचिद् विवक्षितविशेषेण भाव इत्थम्भूतम्, एषु वर्तमानाद् गौणाद् नाम्नोऽभिना युक्ताद् द्वितीया स्यात् । वृक्षमभि विद्योतते विद्युत् । वृक्षं वृक्षमभि सिञ्चति । साधु जिनदत्तो मातरमभि । लक्षणेत्यादि किम् यदत्र ममाभिष्यात् तद् दीयताम् ।

**भागिनि च प्रतिपर्यनुभिः । २ । २ । ३७ ।**

स्वीकारविषयीभूतोंऽशो भागस्तत्पतिर्भागी, तस्मिन् लक्षणादिष्वर्थेषु च वर्तमानाद् गौणाद् नाम्न. प्रतिपर्यनुभिर्युक्ताद् द्वितीया स्यात् । यदत्र मां प्रति परि अनु स्यात् योऽत्र मम भागस्तद् दीयतामित्यर्थः । वृक्षं प्रति परि अनु विद्योतते विद्युत् । वृक्षं वृक्षं प्रति परि अनु वा सेचनम् । साधु जिनरक्षो मातरमनु प्रति परि वा ।

**कालाध्वनोर्व्याप्तौ । २ । २ । ४२ ।**

स्वकीयसम्बन्धिना द्रव्य-गुण-क्रियारूपेण सह सम्बन्धो व्याप्तिरत्यन्तसंयोग इत्यर्थ. । तस्या द्योत्यायां कालेऽध्वनि च वर्तमानाद् गौणाद् नाम्नो द्वितीया स्यात् । मासं गुडधाना । मासं कल्याणी । मासमधीते । क्रोशं पर्वत । क्रोशं कुटिला नदी । क्रोशमधीते ।

**हेतु–कर्तृ–करणेत्थम्भूतलक्षणे । २ । २ । ४४ ।**

फलसाधनयोग्य· पदार्थो हेतु·, द्रव्यादिसाधारणत्वे सति निर्व्यापारसव्यापारसाधारणत्वं हेतुत्वम्, क्रियासिद्धौ प्रकृष्टोपकारकं नियतव्यापारोपबद्धं करणं क्रियामात्रविषय व्यापारनियतं चेत्यर्थ, कञ्चित् प्रकारमापन्न इत्थम्भूत· स लक्ष्यते येनेति इत्थम्भूतलक्षणम्, हेत्वादिषु वर्तमानाद् गौणाद् नाम्नस्तृतीया स्यात् । धनेन कुलम्, व्रतेन वा । दण्डेन घट· । पुण्येन दृष्टो जिनः । वस्तुपालेन कृत जिनमन्दिरम् । कुमारपालेन कृता अहिंसामयी मेदिनी । दात्रेण लुनाति धान्यम् । रजोहरणेन जैनमुनिः रजोहरणज्ञाप्यजैनमुनित्वविशिष्ट इत्यर्थः ।

**यद्भेदैस्तद्वदाख्या । २ । २ । ४६ ।**

यस्य भेदिन. प्रकारवतोऽर्थस्य भेदैः प्रकारैर्विशेषैस्तद्वतः पदार्थस्य निर्देशः स्यात् तद्वाचिनो गौणाद् नाम्नस्तृतीया स्यात्। अक्ष्णा काणः। पादेन खञ्ज.। शिरसा खल्वाटः। प्रकृत्या चारुः। गोत्रेण गार्ग्यः। प्रायेणालसः। प्रायेण नैयायिकः।

**कर्माभिप्रेयः सम्प्रदानम् । २ । २ । २५ ।**

कर्मकारकेन क्रियया वा करणभूतेन यमभिप्रेयते श्रद्धानुग्रहादिकाम्यया यमभिसम्बध्नाति स कर्माभिप्रेय कारकं सम्प्रदानसञ्ज्ञं स्यात्। तच्च त्रिविधम् त्यज्यमानरूपेण कर्मणा प्राप्तं सत् प्रेरकम्— देहीति यत् प्रेरयति याचकाय गां ददाति। अनुमन्तृ— दायकेन अहमिदं ददामीत्युक्ते 'ओम्' इत्यनुमन्यते तत् श्राद्धो गुरवे भिक्षां ददाति। यच्च नानुमन्यते न च निराकरोति तदनिराकर्तृ— जिनायार्घ्यं ददाति। गुरवे कार्यं निवेदयति। पत्ये शेते। युद्धाय संनह्यते। यत्र श्रद्धादिना नानुसम्बन्धस्तत्र षष्ठ्येव। राज्ञो दण्डं, रजकस्य वस्त्रं ददाति।

**चतुर्थी । २ । २ । ५३ ।**

सम्प्रदानसञ्ज्ञकाद् गौणाद् नाम्नश्चतुर्थी स्यात्। धर्माय यतते। धनाय गच्छति। जिनभुवनाय सहस्रं ददाति।

**अपायेऽवधिरपादानम् । २ । २ । २९ ।**

अपायो विश्लेषो विभागो वा तत्र योऽवधिश्चलत्वेनाचलत्वेन वा विवक्षितः स अपादानसञ्ज्ञकः स्याद्, अथवा सावधिकं गमनं तत्र यदवधिभूतम् अपायेनानधिष्ठित तत्कारकमपादानं स्यात्। ग्रामादायाति। धावतोऽश्वात् पतति इति कायिकोऽपाय। बुद्धिजन्मापायः—अधर्माद् जुगुप्सते विरमति वा, धर्मात् प्रमाद्यति, चौरेभ्यो बिभेति, यवेभ्यो गा रक्षति निवारयति वा, उपाध्यायादन्तर्धत्ते।

**पञ्चम्यपादाने। २। २। ६९।**

अपादाने वर्तमानात् कारकात् पञ्चमी स्यात्। अरण्यादागच्छति। चौरेभ्यो रक्षति। कुण्डाद् निष्काशयति।

**शेषे। २। २। ८१।**

कर्मादिभ्योऽन्य. स्वस्वामिभावादिसम्बन्ध शेष, तस्मिन् वर्तमानाद् गौणाद् नाम्नः षष्ठी स्यात्। राज्ञः पुरुष। पित्रोरेतत् पूजनम्। गुरूणां वचन पथ्यम्। कर्मादिकारकाणामपि सम्बन्धमात्रविवक्षया षष्ठी भवत्येव माषाणामश्नीयात्, सुभाषितस्य शिक्षते, सतां गतमित्यादौ सतामपि कर्मादीनामविवक्षा।

**क्रियाश्रयस्याधारोऽधिकरणम्। २। २। ३०।**

क्रियाश्रयस्य कर्तुः कर्मणो वा य आधारः स अधिकरणसञ्ज्ञकः स्यात्।

**सप्तम्यधिकरणे। २। २। ९५।**

अधिकरणकारकेऽर्थे वर्तमानाद् गौणाद् नाम्नः सप्तमी स्यात् । तच्च षड्विधम्— औपश्लेषिकं वैषयिकमभिव्यापकं सामीप्यकं नैमित्तिकमौपचारिकं च । तत्रैकदेशमात्रसंयोग उपश्लेषस्तत्र भवमौपश्लेषिकम्— खट्वायां शेते, कटे आस्ते । अनन्यत्रभावो विषयस्तस्मै प्रभवति वैषयिकम्— भुवि मनुष्याः, दिवि वैमानिकाः सन्ति । ययोराधाराधेययोः सर्वावयवसंयोगस्तदभिव्यापकम्— तिलेषु तैलम्, दध्नि घृतम् । आधेयसन्निधिमात्रं सामीप्यकम्— गङ्गायां घोषः, वटे गावः । निमित्तमेव नैमित्तिकम्— शरदि पुष्प्यन्ति वनानि । उपचारः प्रयोजनं यस्य तदौपचारिकम्— मम मुष्टिमध्ये राजाऽस्ति, अङ्गुल्या अग्रे करिणा शतम् ।

**यद्भावो भावलक्षणम् । २ । २ । १०६ ।**

यस्य क्रिययाऽन्या क्रिया लक्ष्यते ज्ञायते वा ततः सप्तमी स्यात् । गोषु दुह्यमानासु जिनदत्तो गतः । देवे वर्षति श्राद्धः समागतः ।

**सप्तमी चाविभागे निर्धारणे । २ । २ । १०९ ।**

जाति-गुण-क्रियादिभिः समुदायादेकदेशस्य बुद्धचा पृथक्करणं निर्धारणम्, तस्मिन् वर्तमानाद् गौणाद् नाम्नः सप्तमी वा स्याद्, अविभागे अवयवावयविनो कथञ्चिदैक्ये शब्दाद् गम्यमाने सति । नृणां नृषु वा क्षत्रियाः शूराः । गवां गोषु वा कृष्णा बहुक्षीराः । गच्छतां गच्छत्सु वा धावनक्रियाकर्ता शीघ्रतरः ।

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः । २ । २ । ९८ ।**

एभिर्योगे गौणाद् नाम्नः षष्ठी सप्तमी च स्यात् । गवां गोषु वा स्वामी, ईश्वरः, अधिपतिः, दायादः, साक्षी, प्रतिभूः, प्रसूतः ।

**पृथग्-नाना पञ्चमी च । २ । २ । ११३ ।**

आभ्यां योगे गौणाद् नाम्न पञ्चमी तृतीया च स्यात् । पृथग् जिनदत्ताद् जिनदत्तेन वा । नाना जिनपालाद् जिनपालेन वा ।

**विना ते तृतीया च । २ । २ । ११५ ।**

विनायोगे ते द्वितीया-पञ्चम्यौ तृतीया च स्यात् । विना धर्मं धर्माद् धर्मेण वा कुतः सुखम् ।

**ऋते द्वितीया च । २ । २ । ११४ ।**

ऋते वर्जनार्थकमव्ययम्, तद्योगे गौणाद् नाम्नो द्वितीया पञ्चमी च स्याताम् । ऋते पुण्यं निर्धनत्वम् । ऋते सम्यग्दर्शन-ज्ञान-चारित्रेभ्यो न मुक्ति ।

**उपान्वध्याङ्-वसः । २ । २ । २१ ।**

उप अनु अधि आङ् एभिर्युक्तस्य वसतेराधार कर्मसञ्ज्ञः स्यात् । उपवसति धर्मपालो ग्रामम् । एवमनुवसति, अधिवसति, आवसति ।

**अधेः शीङ्-स्थाऽऽस आधारः । २ । २ । २० ।**

अधिपूर्वाणां शीङ्-स्थाऽऽस्धातूनामाधारः कर्म वा स्यात्। अधिशेते अधितिष्ठति अध्यास्ते वा स्वर्गं स्वर्गे वा देवः।

**वाऽभिनिविशः। २। २। २२।**

अभिनीत्येतत्समुदायपूर्वस्य विश्धातोराधारः कर्म वा स्यात। ग्राममभिनिविशते। 'व्यवस्थितविभाषाश्रयणात् क्वचिन्न' निःश्रेयसि अभिनिविशते।

**सहार्थे। २। २। ४५।**

सहार्थः— तुल्ययोगो विद्यमानता च, तत्र गम्यमाने गौणाद् नाम्नस्तृतीया स्यात्। पुत्रेण सहागतः पिता। शिष्येण सार्धमागतो गुरुः। नयनाभ्यां साकं श्लक्ष्णा दन्ताः। शिष्यैः सहावश्यकं करोति गुरुः।

**दामः सम्प्रदानेऽधर्म्य आत्मने च। २। २। ५२।**

सम्पूर्वाद् दाम्धातोरधर्म्यरूपे सम्प्रदाने वर्तमानाद् गौणाद् नाम्नस्तृतीया स्यात्, तत्संनियोगे च दाम आत्मनेपदं स्यात। दास्या सम्प्रयच्छते कामुकः। धर्म्ये तु भार्यायै सम्प्रयच्छति।

**कृताद्यैः। २। २। ४७।**

निषेधार्थककृतादिभिर्योगे गौणाद् नाम्नस्तृतीया स्यात्। कृतं तेन। अलं प्रसङ्गेन। किं गतेन।

**शक्तार्थवषड्नमः स्वस्तिस्वाहास्वधाभिः। २। २। ६८।**

एभिर्योगे गौणाद् नाम्नश्चतुर्थी स्यात् । शक्तो जिनदत्तः शिवदत्ताय । वषड् इन्द्राय । नमो जिनेन्द्राय । स्वस्तिशब्दः क्षेमार्थः स्वस्ति श्रीविजयधर्मसूरये, आशिष्यपि स्वस्ति सङ्घाय भूयाद् । अग्नये स्वाहा । पितृभ्यः स्वधा ।

**रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु । २ । २ । ५५ ।**

रुच्यर्थकै क्लृप्यर्थकैर्धारिणा च योगे यथासङ्ख्यं प्रेये विकारे उत्तमर्णे चार्थे वर्तमानाद् गौणाद् नाम्नश्चतुर्थी स्यात् । देवदत्ताय रोचते जैनधर्मः तस्याभिलाषमुत्पादयतीत्यर्थ. । मूत्राय कल्पते यवागू· । सहस्रं धारयति चैत्रो मैत्राय, उत्तमर्णो धनस्वामी पूर्वं परस्य ऋणदाता, ऋणग्राहकस्त्वधमर्णः ।

**प्रभृत्यन्यार्थदिक्शब्दबहिराराादितरैः । २ । २ । ७५ ।**

प्रभृत्यर्थैरन्यार्थैर्दिक्शब्दैर्बहिर् आराद् इतर इत्येतैर्युक्ताद् गौणाद् नाम्न पञ्चमी स्यात् । कार्तिक्या. प्रभृति । वसन्तादारभ्य । अन्यो विष्णुदत्ताद् जिनदत्तः । भिन्नः शिवदत्ताद् विष्णुदत्त. । ग्रामात् पश्चिमायां दिशि वसति । पूर्वोऽवन्त्या गोनर्दः । बहिर्ग्रामाद् वटः । आराद् ग्रामात् क्षेत्रम् । इतरश्चैत्रात् ।

**गुणादस्त्रियां नवा । २ । २ । ७७ ।**

हेतुभूताद् गुणवाचिन स्त्रीलिङ्गे वर्तमानाद् गौणाद् नाम्नः पञ्चमी वा स्यात् । जाड्याद् जाड्येन वा बद्धः । प्रज्ञायाः प्रज्ञया वा मुक्त. ।

**कृत्यस्य वा । २ । २ । ८८ ।**

कृत्यप्रत्ययान्तस्य कर्तरि षष्ठी वा स्यात् । मया मम वा पूज्या विजयधर्मसूरयः ।

**कर्तरि । २ । २ । ८६ ।**

कृत्प्रत्ययान्तस्य कर्तरि षष्ठी नित्यं स्यात् । भवतः शायिका । चैत्रस्य स्वापः । देवदत्तस्य भोजनम् । जिनदत्तस्य पठनम् ।

**कर्मणि कृतः । २ । २ । ८३ ।**

कृदन्तस्य सम्बन्धिनि कर्मणि गौणाद् नाम्नः षष्ठी स्यात् । तीर्थस्य कर्ता । ग्रामस्य गमनम् । ओदनस्य पाकः ।

**तृन्नुदन्ताव्यय–क्वस्वानातृश्–शतृ–ङि–णकच्–खलर्थस्य । २ । २ । ९० ।**

तृनन्तस्योदन्तस्याव्ययस्य क्वसोरानस्यातृश. शतुर्ङेर्णकचः खलर्थस्य च प्रत्ययस्य कर्मकर्त्रोः षष्ठी न स्यात् । वदिता जनापवादान् । शत्रून् जिष्णुः । देवार्चनं कृत्वा । ओदनं भोक्तुम् । पायं पायं पयो गच्छति । तपः तेपिवान् । प्रवचनं विद्वान् । आनेति कानशानाऽऽनशां ग्रहणम्, पटं चक्राणः । ग्रामं पवमानः । ओदनं पचमानः । सूत्रमधीयन् । पटं कुर्वन् । परीषहं सासहिर्मुनिः । घटस्य पूरकः । सुकरो घटस्त्वया ।

**द्विषो वाऽतृशः । २ । २ । ८४ ।**

अतृशन्तस्य द्विषः कर्मणि षष्ठी वा स्यात् । चौरस्य चौरं वा द्विषन् ।

**वैकत्र द्वयोः । २ । २ । ८९ ।**

द्विकर्मकधातोर्द्वयोः कर्मणोरेकस्मिन् षष्ठी वा स्यात् । अजाया ग्राम नेता । अजा ग्रामं नेता । ग्रामस्याजां नेता । ग्राममजां नेता ।

**क्तयोरसदाधारे । २ । २ । ९१ ।**

सतो वर्तमानादाधाराच्चान्यत्रार्थे विहितौ यौ क्त–क्तवतू तयोः कर्मकर्त्रोः षष्ठी न स्यात् । कुलालेन घट. कृतः । कुलालो घटं कृतवान् । असदाधार इति किम् राज्ञां ज्ञातः, इदमेषां शयित-मित्यादौ षष्ठ्येव । 'तृप्तार्थधातूना करणे वा षष्ठी' फलानां फलैर्वा तृप्तः ।

**हेत्वर्थैस्तृतीयाद्याः । २ । २ । ११८ ।**

हेतुर्निमित्तं तदर्थैः शब्दैर्युक्तात् तैरेव समानाधिकरणाद् गौणाद् नाम्नस्तृतीयाद्या विभक्तयः स्युः । विद्यया हेतुना, विद्यायै हेतवे, विद्याया हेतोः, विद्याया हेतोः, विद्यायां हेतौ वा वसति । एवं निमित्त–कारण–प्रयोजनादय. प्रयोक्तव्या ।

**सर्वादेः सर्वाः । २ । २ । ११९ ।**

हेत्वर्थैर्युक्तात् तैरेव समानाधिकरणाद् गौणात् सर्वादेर्नाम्नः सर्वा विभक्तयः स्यु. । को हेतुः, कं हेतुम्, केन हेतुना, कस्मै

हेतवे, कस्माद् हेतोः, कस्य हेतोः, कस्मिन् हेतौ वा वसति। एवं निमित्तादीनां योगेऽपि।

आङाऽवधौ। २। २। ७०।

आङा युक्तादवधिवाचिनो गौणाद् नाम्नः पञ्चमी स्यात्। आ पाटलिपुत्राद् वृष्टो मेघः पाटलिपुत्रं मर्यादीकृत्य तदभिव्याप्य वा मेघो वृष्ट इत्यर्थः। आ बालेभ्यो जिनभक्तिः। आ आङ्गल-भूमेर्विजयधर्मसूरीणां कीर्तिः।

पर्यपाभ्यां वर्ज्ये। २। २। ७१।

आभ्यां युक्ताद् वर्जनीयेऽर्थे गौणाद् नाम्नः पञ्चमी स्यात्। परि त्रिगर्तेभ्यो वृष्टो मेघः, अप त्रिगर्तेभ्यो वृष्टो मेघः त्रिगर्त मुक्त्वा वृष्ट इत्यर्थः।

आख्यातर्युपयोगे। २। २। ७३।

आख्याता वक्ता, नियमपूर्वकविद्याध्ययनमुपयोगः, आख्या-तृवाचिनो गौणाद् नाम्नो नियमपूर्वकविद्याग्रहणविषये पञ्चमी स्यात्। उपाध्यायादिन्द्रविजयादधीते निधानविजय.। उपयोग इति किम् नटस्य गाथां शृणोति।

तादर्थ्ये। २। २। ५४।

कञ्चित् पदार्थ निष्पादयितुं यत् प्रवृत्तं तत् तदर्थम्, तस्य भावस्तादर्थ्यं सम्बन्धविशेष इत्यर्थः, तस्मिन् द्योत्ये गौणाद् नाम्न-

श्चतुर्थी स्यात् । संयमाय श्रुतं धत्ते । धर्माय संयमम् । धर्मं मोक्षाय । धनं दानाय मुक्तये वा ।

**क्रुद्-द्रुहेर्ष्याऽसूयार्थैर्यं प्रति कोपः । २ । २ । २७ ।**

क्रुधाद्यर्थानां धातूना योगे यं प्रति कोप स सम्प्रदानसञ्ज्ञः स्यात् । चैत्राय क्रुध्यति । जिनदत्ताय द्रुह्यति । धर्मपालायेर्ष्यति । पार्श्वदत्तायासूययति । अत्र सिंहावलोकनन्यायो द्रष्टव्य ।

**नोपसर्गात् क्रुद्-द्रुहा । २ । २ । २८ ।**

उपसर्गात् पराभ्यां क्रुद्-द्रुहिभ्या योगे यं प्रति कोपस्तत् सम्प्रदानसञ्ज्ञं न स्यात् । चैत्रमभिक्रुध्यति । ऋषभदत्तमभिद्रुह्यति ।

**गम्ययपः कर्माधारे । २ । २ । ७४ ।**

प्रयोगेऽपठितस्य यबन्तस्य कर्मवाचिन आधारवाचिनश्च गौणाद् नाम्न पञ्चमी स्यात् । प्रासादात् प्रेक्षते प्रासादमारुह्य प्रेक्षत इत्यर्थ । श्वशुराद् जिह्रेति श्वशुरं वीक्ष्य जिह्रेतीत्यर्थः । आसनात् प्रेक्षते आसने उपविश्य प्रेक्षत इत्यर्थः ।

**तद्भद्रायुष्यक्षेमार्थार्थेनाशिषि । २ । २ । ६६ ।**

हितार्थैश्च सुखार्थैर्भद्राद्यर्थैर्युक्ताद् गौणाद् नाम्न आशिषि चतुर्थी वा स्यात् । हितं जीवाना जीवेभ्यो वा भूयात् । सुखं प्रजानां प्रजाभ्यो वा भूयात् । भद्रं शासनस्य शासनाय वा । आयुर्देवदत्तस्य देवदत्ताय वा भूयात् । क्षेमं कल्याणं श्राद्धाना श्राद्धेभ्यो वा भूयात् । अर्थश्चैत्रस्य चैत्राय वा भूयाद् ।

**तद्युक्ते हेतौ । २ । २ । १०० ।**

तेन व्याप्येन युक्ते तद्युक्ते हेतौ वर्तमानाद् गौणाद् नाम्नः सप्तमी स्यात् ।

चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः ॥ १ ॥

**षष्ठी वाऽनादरे । २ । २ । १०८ ।**

अनादरे गम्यमाने यद्भावो यस्य भावस्य लक्षणं तद्वाचिनो गौणाद् नाम्नः षष्ठी वा स्यात् । राजा बहुष्वसाधुषु वदत्सु प्राव्राजीत् । बहुषु साधुषु वदत्सु स्वयमार्यो भगवान् साधुमार्गेण गतवान् । एवं बहुषु साधुषु वदत्सु अनार्योऽनार्यमार्गेण गतवान् । पक्षे बहूनां साधूनां वदतामिति षष्ठी ।

कर्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणमित्याहुः कारकाणि षट् ॥१॥
द्वितीया कर्मणि ज्ञेया कर्तरि प्रथमा यदा ।
उक्तकर्तृप्रयोगे तु प्रथमैव प्रयुज्यते ॥२॥
यदा कर्तरि तृतीया कर्मणि प्रथमा तदा ।
उक्तकर्मप्रयोगे तु क्यो न स्याच्च परस्मैपदम् ॥३॥

**इति कारकप्रकरणं समाप्तम् ।**

---

१ गुद-मेढ्रान्तरालाङ्गं सीमेति प्रोच्यते बुधैः ।
पुष्कलको मृगभेदः स्याद् वन्योऽसौ गन्धहेतुकः ॥

# अथ समासप्रकरणम् ।

## समर्थः पदविधिः । ७ । ४ । १२२ ।

य कश्चिदिह शास्त्रे पदविधि श्रूयते स समर्थो ज्ञातव्य, विधीयत इति विधि पदाना पदयो· पदस्य वा विधि पदविधिः; स पुनः समासादिः समर्थः शक्त । विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो नाम शक्तो बोद्धव्यः । तच्च सामर्थ्यमेकार्थीभावलक्षणम्, एकार्थीभावश्च परस्परान्वयित्वेन मिलिताना पदानामेकक्रियाऽन्वयित्वरूपम् । अथवा समर्थानां सम्बद्धार्थानां परस्परं संसृष्टार्थानां पदानां विधिः समर्थपदविधिर्बोद्धव्य. ।

## नाम नाम्नैकार्थ्ये समासो बहुलम् । ३ । १ । १८ ।

नाम नाम्ना सह परस्परान्वयरूपे ऐकार्थ्यरूपसामर्थ्ये सति समाससंज्ञं बहुलं स्यात् । लक्षणमधिकारश्चेद् सूत्रं तेन यत्र विशेषसञ्ज्ञाऽभाव. तत्रानेनैव समासविधिः । विस्पष्टं पटु. विस्पष्टपटुः इत्यादि· । नामेति किम्, चरन्ति गावो धनमस्य । नाम्नेति किम्, चैत्र. पचति । क्वचिदनामापि, भाति अर्को यत्र तद् भात्यर्कं नभः । क्वचिदनाम्नाऽपि अनुव्यचलत् ।

## ऐकार्थ्ये । ३ । २ । ८ ।

ऐकार्थ्यमैकपद्यमेकविभक्तिकत्वं च तन्निमित्तस्य स्यादेर्विभक्ते-

लुक् स्यात् । पूर्वं भूतः— भूतपूर्वः । राज्ञः पुरुषः— राजपुरुषः । बहुलाधिकारात् क्वचिदिवेन समासो विभक्तेरलोपश्च जीमूतस्येव इत्यादि । समासश्चतुर्धा—अव्ययीभाव-तत्पुरुष-द्वन्द्व-बहुव्रीहिभेदात् । अयं च प्रायोवादः—भूतपूर्वः, दृन्भू, कारभूः, आयतस्तु, विस्पष्टपटु-रित्यादीनां समस्यमानत्वेऽप्यसंग्रहात् । तथाऽपरोऽपि प्रायोवादः—पूर्वपदप्रधानोऽव्ययीभावः, उत्तरपदप्रधानस्तत्पुरुषः, उभयपदप्रधानो द्वन्द्वः, अन्यपदप्रधानो बहुव्रीहिश्चेति, उन्मत्तगङ्गमित्यादावव्ययी-भावेऽपि पूर्वपदप्राधान्याभावादव्ययीभावलक्षणस्याव्याप्तेरन्यपदप्र-धानरूपबहुव्रीहिलक्षणस्यातिव्याप्तेश्च, एवं सूपप्रति इत्यत्रोत्तरपदार्थ-प्राधान्यात् तत्पुरुषलक्षणस्यातिव्याप्तिरव्ययीभावलक्षणस्याव्याप्तिश्च, अर्धपिप्पलीत्यत्र तत्पुरुषे पूर्वपदप्राधान्यादव्ययीभावलक्षणातिव्या-प्तिस्तत्पुरुषलक्षणाव्याप्तिश्च, द्वित्रा इत्यादौ बहुव्रीहौ द्वयपदार्थप्राधा-न्याद् द्वन्द्वलक्षणस्यातिव्याप्तिर्बहुव्रीहिलक्षणस्याव्याप्तिश्च, शशकुश-पलाशम् इत्यत्र समाहारद्वन्द्वे समाहाररूपान्यपदार्थप्राधान्याद् बहुव्रीहिलक्षणातिव्याप्तिर्द्वन्द्वलक्षणाव्याप्तिश्च । तस्मान्नैतानि अव्य-यीभावादीनां लक्षणानि, किन्तु—अव्ययीभावाधिकारपठितत्वमव्ययी-भावत्वं, तत्पुरुषाधिकारपठितत्वं तत्पुरुषत्वं, द्वन्द्वाधिकारपठितत्वं द्वन्द्वत्वं, बहुव्रीह्यधिकारपठितत्वं बहुव्रीहित्वम् ।

**विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासम्प्रति-पश्चात्-क्रम-ख्याति-युगपत्-सदृक्-सम्पत्-साकल्यान्तेऽव्य-यम् । ३ । १ । ३९ ।**

विभक्त्याद्यर्थेषु यदव्ययं तद् नाम्ना सहैकार्थ्ये सति पूर्वपदार्था-भिधेये नित्यं समस्यते, स समासोऽव्ययीभावसञ्ज्ञकः स्यात् । अत्र विभक्तिपदेन विभक्त्यर्थो ग्राह्यः । स्त्रीष्वधिकृत्य कथा प्रवर्तते इति वाक्येऽधिकरणरूपस्य सप्तम्या अर्थस्य द्योतकमधि अव्ययं स्त्रीनाम्ना सह समस्तम् इति 'ऐकार्थ्ये' इत्यनेन विभक्तेर्लुपि स्त्री+अधि इति स्थिते

**प्रथमोक्तं प्राक् । ३ । १ । १४८ ।**

इह समासप्रकरणे प्रथमान्तपदेन यदुक्तं तत्प्राक् प्रयोक्तव्यम् । 'द्वन्द्वैकत्वाव्ययीभावौ' इति लिङ्गानुशासनात् क्लीबत्वम्, ततश्च 'क्लीबे' इति ह्रस्वे अधिस्त्रि । एवं कुमार्यामिति अधिकुमारि । नित्यसमासाधिकारेऽस्वपदेनैव विग्रहः, न तु समस्यमानाभ्यां पदाभ्याम् । समीपे— कुम्भस्य समीपम् अत्रापि सर्वं पूर्ववत् समुदितस्य तु विभक्तेः—

**अमव्ययीभावस्यातोऽपञ्चम्याः । ३ । २ । २ ।**

अदन्तादव्ययीभावात् परस्य स्यादेरम् स्यात्, पञ्चमीं त्यक्त्वा । उपकुम्भम् अस्ति पश्यति वा सर्वत्राम् । 'तृतीयायां सप्तम्या च विकल्पेन अम् कर्तव्यः' उपकुम्भेन उपकुम्भं कृतम्, उपकुम्भे उपकुम्भं निधेहि । ऋद्धेराधिक्यं समृद्धिः— कुमारपालस्य समृद्धिः सुकुमारपालम् । ऋद्धेरभावो व्यृद्धि— ब्राह्मणानां व्यृद्धि दुर्ब्राह्मणम् । अर्थाभावो नाम वस्तूनामभावः— लुम्पकानामभावो

निर्लुम्पकम् । अत्ययो नामातीतत्वं विद्यमानस्यातिक्रमः– अतीतानि शीतानि निःशीतं वर्तते । असम्प्रति– वर्तमानकाले उपभोगाभावः– कम्बलस्य सम्प्रति उपभोगाभाव इति अतिकम्बलम्–कम्बलमूर्णावस्त्रं तस्यायमुपभोगकालो न भवतीत्यर्थः । पश्चात्– रथस्य पश्चादनुरथं पदातिर्याति । क्रम –आनुपूर्वी ज्येष्ठस्य क्रमेणेति अनुज्येष्ठं गच्छन्तु भवन्तः–ज्येष्ठानुपूर्व्या गच्छन्तु इत्यर्थः । ख्यातिः–प्रथा– इतिहेमचन्द्रम् इतिधर्मसूरि हेमचन्द्रस्य धर्मसूरेश्च ख्यातिरित्यर्थः । यौगपद्यमेककालता चक्रेण सहैककालं गदां धेहीति सचक्रम्, अत्र 'अकालेऽव्ययीभावे' इति सहशब्दस्य सादेशः । सदृग्– व्रतेन सदृशमिति सव्रतम् । सम्पत्–अनुरूप आत्मभावः– साधूनां ब्रह्मणः सम्पदिति सब्रह्म–साधूनां सम्पन्नं ब्रह्मेत्यर्थः । साकल्यमशेषता–सतृणमभ्यवहरति न किञ्चित् त्यजतीत्यर्थः । अन्तः– समाप्ति. सपिण्डैषणमधीते पिण्डैषणापर्यन्तमधीत इत्यर्थः ।

**योग्यता–वीप्सा–ऽर्थानतिवृत्ति–सादृश्ये । ३ । १ । ४० ।**

एष्वर्थेषु वर्तमानमव्ययं नाम नाम्ना सह समस्यते, स च समासोऽव्ययीभावसञ्ज्ञकः स्यात् । योग्यता– रूपस्य योग्यमनुरूपं चेष्टते । वीप्सा अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य पठतीति यथाशक्ति । शीलस्य सादृश्यम्–सशीलमनयोः समानशीलतेत्यर्थः ।

**यथाऽथा । ३ । १ । ४१ ।**

थाप्रत्ययरहितं यथेत्यव्युत्पन्नं नाम नाम्ना सह समस्यते पूर्वपदार्थाभिधेये। यथावृद्धं श्राद्धान् आमन्त्रयस्व—ये ये वृद्धास्तान् इत्यर्थः। अथेति किम्, यथा चैत्रस्तथा मैत्रः। पूर्वेणैव सिद्धे सादृश्यप्रतिषेधार्थं सूत्रम्।

**यावदियत्त्वे। ३। १। ३१।**

यावदित्यव्ययमवधारणे वर्तमानं नाम्ना सह समस्यते, स च समासोऽव्ययीभावसञ्ज्ञकः स्यात्। यावदमत्रं श्राद्धान् भोजय—यावन्त्यमत्राणि सम्भवन्ति तावतो भोजयेत्यर्थः।

**नित्यं प्रतिनाऽल्पे। ३। १। ३७।**

अल्पार्थे वर्तमानेन प्रतिना सह नाम समस्यते, स चाव्ययीभावः। शाकस्याल्पत्वं शाकप्रति। सूपप्रति।

इत्यव्ययीभावसमासप्रकरणम्।

**अथ तत्पुरुषः।**

**श्रितादिभिः। ३। १। ६२।**

द्वितीयान्त नाम श्रितादिभिर्नामभि सह समस्यते, स च समासस्तत्पुरुषसंज्ञ स्यात्। जिनं श्रितः जिनश्रित। संसारमतीतः संसारातीतः। नरकं पतितः नरकपतितः। पादलिप्तं गमी पादलिप्तगमी। तुहिनमत्यस्त तुहिनात्यस्तः।

**प्राप्तापन्नौ तयाऽच्च। ३। १। ६३।**

तया द्वितीयान्तेन नाम्ना प्राप्ताऽऽपन्नौ समस्येते, स च समासस्तत्पुरुषसञ्ज्ञः स्यात्। तत्सन्नियोगे चानयोरन्तस्याऽकारादेशः स्यात्। जीविकां प्राप्तः प्राप्तजीविकः। जीविकामापन्नः—आपन्नजीविकः। अद्वचनं स्त्रीलिङ्गार्थम्। प्राप्ताजीविका। आपन्नाजीविका। श्रितादित्वाच्च जीविकां प्राप्तः जीविकाप्राप्तः, जीविकामापन्नः जीविकापन्नः।

## द्वितीया खट्वा क्षेपे। ३। १। ५९।

खट्वेति द्वितीयान्तं नाम नाम्ना सह समस्यते क्षेपे गम्ये। क्षेपो निन्दा स च समासार्थः, तेन विभाषाधिकारेऽपि नित्यसमास एवायम्। खट्वारोहणं च विमार्गप्रस्थानस्योपलक्षणं तेन सर्वाविनीतशिरोमणिः खट्वारूढशब्देनोच्यते। खट्वामारूढः खट्वारूढो जाल्मः—अपथप्रस्थित इत्यर्थः।

## कारकं कृता। ३। १। ६८।

कर्तृकरणरूपं कारकं तृतीयान्तं कृदन्तेन नाम्ना सह समस्यते, स च समासस्तत्पुरुषः स्यात्। आत्मना कृतमात्मकृतम्। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति न्यायेन नखैर्निर्भिन्नः—नखनिर्भिन्नः। परशुना च्छिन्नः—परशुच्छिन्न।

## तृतीया तत्कृतैः। ३। १। ६९।

तृतीयान्तं नाम तत्कृतैर्गुणवचनैर्नामभिः सह समस्यते। तत्कृतैरिति तदर्थकृतैस्तेन तृतीयान्तार्थकृतैर्गुणवचनैरिति ग्राह्यम्।

शङ्कुलया खण्ड.— शङ्कुलाखण्डः— शङ्कुलया कृतः खण्ड इत्यर्थः। किरिणा काण.—किरिकाण। धान्येनार्थ—धान्यार्थः। तत्कृतैरिति किम्, अक्ष्णा काणः।

**चतुर्थी प्रकृत्या । ३ । १ । ७० ।**

चतुर्थ्यन्तं विकृतिवाचि नाम प्रकृतिवाचिना नाम्ना सह समस्यते, स च समासस्तत्पुरुष स्यात्। घटाय मृत्तिका—घटमृत्तिका। कुण्डलाय हिरण्यम्—कुण्डलहिरण्यम्। यूपाय दारु—यूपदारु।

**हितादिभिः । ३ । १ । ७१ ।**

चतुर्थ्यन्तं नाम हितादिभिर्नामभि सह समस्यते। साधुभ्यो हितम्—साधुहितम्। श्राद्धाय सुखम्—श्राद्धसुखम्। श्राविकायै रक्षितम्—श्राविकारक्षितम्। भूताय बलि— भूतबलिरित्यादि।

**तदर्थार्थेन । ३ । १ । ७२ ।**

चतुर्थ्यन्तं नाम तदर्थेन चतुर्थ्यर्थेनार्थशब्देन सह नित्यं समस्यते, स च समासस्तत्पुरुषः। वाच्यलिङ्गता। कुमारपालायेदम्—कुमारपालार्थमिदं राज्यम्। श्राद्धायेयं यवागू—श्राद्धार्था यवागू। उदकायायम्—उदकार्थो घट।

**पञ्चमी भयाद्यैः । ३ । १ । ७३ ।**

पञ्चम्यन्तं नाम भयाद्यैर्नामभि सह समस्यते स च समासः तत्पुरुषः स्यात्। नरकेभ्यो भयम्—नरकभयम्। धर्मादपेत.—

धर्मापेतः । सुखापेतः । कल्पनाप्रौढः । अधर्माद् जुगुप्सुः—अधर्मजुगुप्सुः । सुखपतित इत्यादिः ।

**क्तेनासत्त्वे । ३ । १ । ७४ ।**

असत्त्वे वर्तमाना या पञ्चमी तदन्तं नाम क्तप्रत्ययान्तेन नाम्ना सह समस्यते, स च तत्पुरुषः । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । 'असत्त्वे ङसेः' इत्यलुक्समासः । 'परःशताद्या निपातनाद् ज्ञेयाः' शतात् परे, सहस्रात् परे, लक्षात् परे; परःशताः, परस्सहस्राः, परोलक्षा इत्यादयः ।

**षष्ठ्ययत्नाच्छेषे । ३ । १ । ७६ ।**

शेषे या षष्ठी तदन्तं नाम नाम्ना सह समस्यते, न चेत् स शेषो यत्नाद् विहितः स्यात् । कर्मसञ्ज्ञाया सिद्धायां पक्षे च कर्माविवक्षाया सम्बन्धमात्रविवक्षया षष्ठ्या सिद्धायां सत्यां या सूत्रैर्व्याप्यस्य कर्मसञ्ज्ञा विकल्पिता पक्षे च षष्ठी कृता सा सर्वा षष्ठी यत्नषष्ठी, यत्नात् शेषे षष्ठी जातेति यत्नशेषषष्ठी कथ्यते । 'नाथः' 'स्मृत्यर्थदयेशः' इत्यादिना यत्नाद् विहितः शेषः—यत्नशेष इत्यर्थः, तं यत्नशेषं वर्जयित्वा या षष्ठी तदन्तं नाम समस्यत इत्यर्थः । राज्ञः पुरुषः—राजपुरुषः । गृहस्थानां गृहम्—गृहस्थगृहम् । गवां क्षीरम्—गोक्षीरम् । अयत्नादिति किम्, मातुः स्मारकः, सर्पिषो नाथकः अत्र सम्बन्धषष्ठी, न कृदन्तकर्मनिमित्ता ।

कृति । ३ । १ । ७७ ।

'कर्मणि कृतः' 'कर्तरि' एतत्सूत्रद्वयेन कृत्प्रत्ययनिमित्ता या षष्ठी उक्ता तदन्तं नाम नाम्ना सह समस्यते । सिद्धसेनस्य कृतिः—सिद्धसेनकृतिः । गणधराणामुक्तिः—गणधरोक्तिः । इध्मवृश्चनः । पलाशशातनः ।

सप्तमी शौण्डाद्यैः । ३ । १ । ८८ ।

सप्तम्यन्तं नाम शौण्डादिभिर्नामभिः सह समस्यते, स च तत्पुरुषसञ्ज्ञः स्यात् । अक्षेषु शौण्डः—अक्षशौण्डः, इह शौण्डशब्दो व्यसने वर्तते । अक्षधूर्त. । अक्षकितवः । वृत्तौ प्रसक्तिक्रियाया अन्तर्भावाद् अक्षादिष्वधिकरणे सप्तमी । बहुवचनमाकृतिगणार्थम् । 'काकाद्याना क्षेपे गम्यमाने समासो वाच्यः' तीर्थे काक इव—तीर्थकाक. इत्यादि । 'पात्रेसमितादयो निपातनात् साधवः' पात्रे एव समिता न तु कार्ये इति पात्रेसमिता, पात्रेबहुलाः, गेहेशूर इत्यादयः । अग्नावाहितः—आहिताग्निरित्यादौ पूर्वप्रयोगः क्वचिद् द्रष्टव्यः ।

नञ् । ३ । १ । ५१ ।

नञिति नाम नाम्ना सह समस्यते, स च समासस्तत्पुरुषः स्यात् । नञ् द्विविधः, यदुक्तम्—

उभौ नञौ समाख्यातौ पर्युदासप्रसज्यकौ ।
पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ १ ॥

प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेय उत्तरपदगतो नञ् ॥ २ ॥
अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ॥ ३ ॥

न मनुष्यः— अमनुष्यः, न सूर्यं पश्यन्तीति—असूर्यम्पश्या राजदाराः । पुनरपि तत्सदृश-तद्विरुद्ध-तदन्य-तदभावभेदात् स नञ् चतुर्धा । न ब्राह्मणः अब्राह्मणः ब्राह्मणसदृश इत्यर्थः । न धर्मोऽधर्मः तद्विरुद्ध इत्यर्थः । न वायुः अवायुः वायुभिन्नः पदार्थ इत्यर्थः । न वचनमवचनं वचनाभाव इत्यर्थः । प्रथमत्रयाणां पर्युदासे चतुर्थस्य प्रसज्ये चान्तर्भावः ।

नञत् । ३ । २ । १२५ ।

नञ्शब्दस्य स्थाने अकारादेशः स्यादुत्तरपदे परे । अब्राह्मणः । अहिंसा । असत्यम् । अस्तेयम् ।

नखादयः । ३ । २ । १२८ ।

नखादयः शब्दा अकृतनञकारादेशा निपात्यन्ते । नास्य खं विद्यते इति नखः । न भ्राजत इति नभ्राट् । न पातीति नपात् । न विदन्तीति नवेदाः । सत्सु साधुः सत्यः, न सत्यः असत्यः, न असत्यः नासत्यः । न मुञ्चतीति नमुचिः । नास्य कुलमस्तीति नकुलः । न पुमान् न स्त्रीति नपुंसकः । न क्षरति क्षीयते वेति नक्षत्रम् । न क्रामतीति नक्रः । नास्मिन् अकं दुःखमस्तीति

नाक । न विद्यन्ते ग्नाः श्रियः छन्दांसि वा यस्येति नग्नः । न गच्छतीति नगः । न अगः नागः । एवं नमेरुः, ननान्दा, नभागः, नान्तरीयः । नवाद इत्यादयः ।

अन् स्वरे । ३ । २ । १२९ ।

स्वरादावुत्तरपदे परे नञित्यस्य अनित्यादेशः स्यात् । न विद्यते अन्तो यस्येति अनन्तः । न अश्वः—अनश्व. । न अजः—अनजः ।

इति नञ्समासप्रकरणम् ।

**विशेषणं विशेष्येणैकार्थं कर्मधारयश्च । ३ । १ । ९६ ।**

भेदकं विशेषणं, भेद्यं विशेष्यम् । भिन्नप्रवृत्तिनिमित्तयोः शाब्दयोरेकस्मिन्नर्थे वृत्तिरैकार्थ्यं सामानाधिकरण्यम् । विशेषणवाचि नाम विशेष्यवाचिना समानाधिकरणेन नाम्ना सह समस्यते, स च समासस्तत्पुरुषसञ्ज्ञ. सन् कर्मधारयसञ्ज्ञः स्यात् । नीलं च तदुत्पलं चेति नीलोत्पलम् । रक्तं च तत् कमलं च रक्तकमलम् । कृष्णा चासौ शाटी च कृष्णशाटी । पुमांश्चासौ गौश्च पुङ्गवः । विशेषणमिति किम्, तक्षकः सर्पः । विशेष्येणेति किम्, लोहितः तक्षकः । विशेषण—विशेष्ययोः सम्बन्धिशब्दत्वेनैकतरोपादानेनैव सिद्धे उभयोरुपादानं परस्परव्यवच्छेद्यव्यवच्छेदकत्वे समासो यथा स्यात् ।

उपमानं सामान्यैः । ३ । १ । १०१ ।

उपमीयतेऽनेनेत्युपमानम् । उपमानवाचि नामैकार्थं सामान्य-वाचिभिरेव नामभिः समस्यते, स च तत्पुरुषः सन् कर्मधारयः स्यात् । उपमानोपमेयोभयगतसाधारणधर्मः सामान्यम् । शस्त्रीव शस्त्री, शस्त्री चासौ श्यामा च शस्त्रीश्यामा । घनश्यामः । उप-मानमिति किम्, देवदत्तः श्यामा । सामान्यैरिति किम्, पर्वता इव बलाहकाः ।

उपमेयं व्याघ्राद्यैः साम्यानुक्तौ । ३ । १ । १०२ ।

उपमेयवाचि नाम सामर्थ्यादुपमानवाचिभिर्व्याघ्रादिभिः सह समस्यते, स च तत्पुरुषकर्मधारयसञ्ज्ञः स्यात् । न चोपमा-नोपमेययोः साधारणधर्मवाची शब्दः प्रयुज्यते । व्याघ्र इव व्याघ्रः, पुरुषश्चासौ व्याघ्रश्च पुरुषव्याघ्रः । पुरुषसिंहः । साम्यानुक्ताविति किम्, पुरुषो व्याघ्र इव शूरः ।

पुंवत् कर्मधारये । ३ । २ । ५७ ।

ऊङन्तवर्जां परतः स्त्री कर्मधारये समासे स्त्र्येकार्थे उत्तरपदे परे पुंवद् भवति । प्रतिषेधनिवृत्त्यर्थमिदम् । कल्याणी चासौ प्रिया च कल्याणप्रिया । भद्रिका चासौ भार्या च भद्रकभार्या । माथुर-वृन्दारिका । चन्द्रमुखभार्या ।

ङस्युक्तं कृता । ३ । १ । ४९ ।

कृत्प्रत्ययविधायके सूत्रे ङसिना पञ्चम्यन्तेन नाम्ना यदुक्तं तद् ङस्युक्तम्। ङस्युक्तं नाम कृत्प्रत्ययान्तेन नाम्ना सह नित्यं समस्यते, स च समासस्तत्पुरुषसञ्ज्ञो भवति। कुम्भं करोति—कुम्भकार। शरलावः। 'तृतीयोक्तं तु वा समस्यते' मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते वा। प्रादयो गत्याद्यर्थे प्रथमान्तेन, अत्यादय क्रान्ताद्यर्था द्वितीयान्तेन, अवादयः क्रुष्टाद्यर्थे तृतीयान्तेन, पर्यादयो ग्लानाद्यर्थे चतुर्थ्यन्तेन, निरादयः क्रान्ताद्यर्थे पञ्चम्यन्तेन समस्यते, स च समासस्तत्पुरुषः। प्रगत आचार्यः—प्राचार्य। खट्वामतिक्रान्तः—अतिखट्वः। कोकिलया अवक्रुष्टः—अवकोकिलः। अध्ययनाय परिग्लान—पर्यध्ययनः। कौशाम्ब्या निष्क्रान्तः—निष्कौशाम्बि।

## सङ्ख्या समाहारे च द्विगुश्चानाम्न्ययम्। ३। १। ९९।

अनेकस्य कथञ्चिदेकत्वं समाहारः। सङ्ख्यावाचि नाम परेण नाम्ना सह समस्यते, सञ्ज्ञाविषये तद्धितविषये उत्तरपदे च परे समाहारेऽभिधेये च, स च तत्पुरुषः कर्मधारयश्च स्याद्, अयमेव समासोऽसञ्ज्ञायां द्विगुश्च स्यात्। सञ्ज्ञाविषये— पञ्च च ते ग्रामाश्च—पञ्चग्रामाः, सप्तर्षयः। तद्धितविषये— द्वयोर्मात्रोरपत्यं पुमान् द्वैमातुरः, पञ्चनापितिः। उत्तरपदे— पञ्च गावो धनमस्य पञ्चगवधनः, दशग्रामधनः। समाहारे— पञ्चानां पूलानां समाहारः—पञ्चपूली, पञ्चफली। समाहारे चेति किम्, अष्टौ प्रवचनमातरः।

**कोः कत् तत्पुरुषे । ३ । २ । १३० ।**

स्वरादावुत्तरपदे परे तत्पुरुषसमासे कुशब्दस्य कदादेशः स्यात् । कुत्सितमन्नम्—कदन्नम् । कदश्वः ।

**रथ—वदे । ३ । २ । १३१ ।**

कुशब्दस्य रथे वदे चोत्तरपदे कदादेशः स्यात् । कद्रथः । कद्वदः ।

**काऽक्ष—पथोः । ३ । २ । १३४ ।**

कुशब्दस्य कादेशः स्यादनयोः परयो । काक्ष. । कापथः । 'पुरुषे वा' कापुरुषः, कुपुरुषः । 'अल्पार्थस्यापि कोः काऽऽदेशः' कामधुरम् अल्पमधुरमित्यर्थः ।

**का—कवौ वोष्णे । ३ । २ । १३७ ।**

उष्णे उत्तरपदे का—कवौ वाऽऽदेशौ स्याताम् । ईषदुष्णम्—कोष्णम्, कवोष्णम् । पक्षे यथाप्राप्तमिति तत्पुरुषे कदुष्णम् । बहुव्रीहौ कूष्णः ।

**परतः स्त्री पुंवत् स्त्र्येकार्थेऽनूङ् । ३ । २ । ४९ ।**

अन्यतो विशेष्यवशात् स्त्रीलिङ्गः स्त्रियां वर्तमाने तुल्याधिकरणे उत्तरपदे परे पुंवत् स्यात् । न तूङन्तः । दर्शनीया भार्या यस्य स दर्शनीयभार्यः । पट्वी भार्या यस्य स पटुभार्यः । परतः स्त्रीत्यादि किम्, गङ्गाभार्यः, गृहिणीनेत्रः । अनूङिति किम्, ब्रह्मबन्धूभार्यः ।

**क्यङ्-मानि-पित्तद्धिते । ३ । २ । ५० ।**

क्यङ्प्रत्यये मानिनि चोत्तरपदे परे पित्तद्धिते च परतः स्त्री पुंवत् स्याद्, अनूङ् । श्येनी इवाचरति–श्येतायते, एनीवाचरति–एतायते । दर्शनीयां मन्यते–दर्शनीयमानी अयमस्या. । दर्शनीयकल्पा । अजथ्यं यूथम् ।

**नाप्प्रियादौ । ३ । २ । ५३ ।**

पूरण्यप्प्रत्ययान्ते स्त्र्येकार्थे उत्तरपदे प्रियादौ च पुंवद्भावो न भवति । कल्याणी पञ्चमी यासु ता· कल्याणीपञ्चमा रात्रयः । कल्याणीप्रिया यस्य स कल्याणीप्रियः । एवं प्रियासुभग·, भव्याप्रियः । प्रिया, भक्ति, मनोज्ञा, सुभगा, दुर्भगा, क्षान्ता, कल्याणी, चपला, सचिवा, समा, वामा, कान्ता, बाला, तनया, दुहितृ, स्वसृ इत्यादिप्रियादयः ।

**तद्धिताककोपान्त्यपूरण्याख्याः । ३ । २ । ५४ ।**

तद्धितप्रत्ययस्याकप्रत्ययस्य च यः कः स उपान्त्यो यासां ता. पूरणप्रत्ययान्ताः सञ्ज्ञाश्च परतः स्त्री पुंवद् न भवति । मद्रिका भार्या यस्य स मद्रिकाभार्य । लाक्षिकाभार्यः । अक–कारिका भार्या यस्य स कारिकाभार्यः, हारिकाभार्य । पूरणी–द्वितीया भार्या यस्य स द्वितीयभार्यः, पञ्चमीभार्यः । आख्या–दत्ता भार्या यस्य स दत्ताभार्य. । तद्धिताकविशेषणं किम्, पाका भार्या यस्य स पाकभार्यः ।

**स्वाङ्गाद् ङीर्जातिश्चामानिनि । ३ । २ । ५६ ।**

स्वाङ्गाद् विहितो यो ङीस्तदन्तो जातिवाची च परत. स्त्री पुंवद् न भवति, मानिनि परे न। दीर्घकेशी भार्या यस्य स दीर्घकेशीभार्यः। एवं चन्द्रमुखीभार्यः। जातिः— ब्राह्मणी भार्या यस्य स ब्राह्मणीभार्यः। अमानिनीति किम्, दीर्घकेशमानिनी। कठमानिनी इत्यादि।

**तद्धितः स्वरवृद्धिहेतुररक्तविकारे। ३। २। ५५।**

स्वरस्थानाया वृद्धेर्हेतुभूतो रक्तविकाराच्चान्यत्रार्थे विहितो यस्तद्धितस्तदन्त परत· स्त्री पुंवद् न भवति। मैथिली भार्या यस्य स मैथिलीभार्यः। एवं माथुरीभार्य·। वैदर्भीभार्य। तद्धित इति किम्, कुम्भकारी भार्या यस्य स कुम्भकारभार्य·। वृद्धिहेतुरिति किम्, शोभनतरा भार्या यस्य स शोभनतरभार्यः। अन्ये तु वृद्धिहेत्वोस्तद्धितप्रत्यययो· ञ्णितोरेव प्रतिषेधमिच्छन्ति, तन्मते वैयाकरणीभार्यः इत्यादिर्भवति। अरक्तेति किम्, कषायेण रक्ता काषायी, काषायी वृहतिका यस्य स काषायवृहतिक., लोहस्य विकारो लौही, सा ईषा यस्य स लौहेष.।

इति तत्पुरुषसमासप्रकरणम्।

---

# अथ बहुव्रीहिसमासप्रकरणम् ।

## एकार्थं चानेकं च । ३ । १ । २२ ।

एकः समानोऽर्थोऽधिकरणं यस्य तदेकार्थं समानाधिकरणमिति यावद् । एकमनेकं चैकार्थं नामाव्ययं च नाम्ना सह समस्तं भवति द्वितीयाद्यन्तस्यान्यपदस्यार्थे वाच्ये सति, स च समासो बहुव्रीहिसञ्ज्ञको भवति । प्राप्तमुदकं यमसौ प्राप्तोदको ग्रामः, ऊढो रथो येन स ऊढरथोऽनड्वान्, उपहृतो बलिर्यस्मै स उपहृतबलिर्यक्ष, उद्धृत ओदनो यस्या सा उद्धृतौदना स्थालिः, वीराः पुरुषा यस्मिन् स वीरपुरुषो रणः, चित्रा गावो यस्य स चित्रगुर्देवदत्त. । अनेकं— शोभना सूक्ष्मा जटा केशा यस्यासौ सुसूक्ष्मजटकेश., सुलभमजिनं वासो यस्मिन् तत् सुलभाजिनवासः क्षेत्रम् । अव्ययम्— उच्चैर्मुखं यस्य स उच्चैर्मुखः, एवं नीचैर्मुखः, कर्तुकामः, अन्तरङ्गम् । व्यधिकरणत्वेनाव्ययस्य प्राप्त्यभावाद् चपदेन तदनुकर्षणम् । बहुव्रीहिर्द्विविधः—तद् गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च । प्रधानस्यैकदेशो विशेषणतया यत्र ज्ञायते स तद्गुणसंविज्ञानो यथा लम्बकर्णश्चैत्रः; यत्र न ज्ञायते सोऽतद्गुणसंविज्ञानो यथा पीतसमुद्रः । 'उष्ट्रमुखादयो बहुव्रीहिसमासान्ता निपातनाद् वेदितव्याः' उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः, अत्र व्यधिकरणसमासो मुखशब्दस्येवशब्दस्य च लोपश्च निपातनाद् विधेयः । एवं

हरिणाक्षी, हंसगमनाऽऽदयोऽस्मिन् गणे द्रष्टव्याः । प्रादिपूर्वं धातुजं पदं समस्यते, विकल्पेन उत्तरपदलोपश्च। प्रपतितानि पर्णानि यस्य स प्रपर्णः, न विद्यमानः पुत्रो यस्य स अपुत्रः, पक्षे प्रपतितपर्णः, अविद्यमानपुत्र इति ।

**सहस्तेन । ३ । १ । २४ ।**

तुल्ययोगे विद्यमानार्थे च वर्तमानं सहेति नाम तृतीयान्तेन नाम्ना समस्यते, अन्यपदार्थे स च बहुव्रीहिः । तुल्ययोगो द्रव्य-गुणक्रियया। पुत्रेण सह गोमान् सपुत्रो गोमान्, पुत्रेण सह स्थूलः सपुत्र. स्थूलः, पुत्रेण सहागतः सपुत्र आगतः । विद्यमानता— सह कर्मणा वर्तत इति सकर्मा जीवः, सलोमकः पुरुषः। सहेति किम्— साकं पुत्रेण ।

**सहस्य सोऽन्यार्थे । ३ । २ । १४३ ।**

उत्तरपदे परे बहुव्रीहौ सहस्य स आदेशो वा स्यात्। सपुत्रः, सच्छात्रः ।

**विशेषण—सर्वादि—संख्यं बहुव्रीहौ । ३ । १ । १५० ।**

विशेषणं सर्वादि संख्यावाचि च बहुव्रीहौ प्राग् निपतति । चित्रगु', कालकण्ठः, मोक्षबुद्धि , सर्वशुक्लः, त्रिकृष्णः । 'प्रियशब्दो वा प्राग् निपतति' गुडप्रियः, प्रियगुडः ।

**गड्वादिभ्यः । ३ । १ । १५९ ।**

एभ्यः सप्तम्यन्तं बहुव्रीहौ वा प्राक् निपतति। विशेषणत्वात् सप्तम्यन्तस्य पूर्वेण पूर्वं निपाते नित्यं प्राप्ते योगो विकल्पार्थः। कण्ठेगडुः गडुकण्ठः। 'प्रहरणार्थादिन्द्वादिगणाच्च सप्तम्यन्तं प्राक् न निपतति' असिपाणिः, इन्दुमौलिः।

क्तः । ३ । १ । १५१ ।

क्तान्तं बहुव्रीहौ सर्वत्र प्राक् प्रयोक्तव्यम्। कृतकटः। 'आहिताग्न्यादिषु तु क्तान्तं वा प्राक् प्रयोजनीयम्' आहिताग्निः, अग्न्याहितः। एवं 'प्रहरणार्थादपि क्तान्तं विकल्पेन पूर्वं पातनीयम्' उद्यतासिः, अस्युद्यतः। उद्यतमुशलः, मुशलोद्यत इत्यादि। 'जातिवाचि–कालवाचि–सुखादिभ्योऽपि क्तान्तं वा पूर्वं पातनीयम्' खर्जूरजग्धी, मासजाता, सुखजाता। पक्षे जग्धखर्जूरा, जातमासा, जातसुखा।

द्विपदाद् धर्मादन् । ७ । ३ । १४१ ।

धर्मशब्दान्ताद् द्विपदाद् बहुव्रीहेरन् भवति। शोभनो धर्मो यस्य स सुधर्मा जैनः। द्विपदादिति किम्— परमः स्वो धर्मो यस्य स परमस्वधर्मः। जायाशब्दस्य बहुव्रीहौ जानिरादेशो वक्तव्यः। युवतिजानिः।

सुपूत्युत्सुरभेर्गन्धादिद् गुणे । ७ । ३ । १४४ ।

एभ्यः पराद् गुणार्थे वर्तमानाद् गन्धशब्दाद् बहुव्रीहौ इद् भवति। सुगन्धि, पूतिगन्धि, उद्गन्धि, सुरभिगन्धि वस्तु। गुण

इति किम्— द्रव्येऽर्थे वर्तमानाद् न भवति शोभना गन्धा द्रव्याणि यस्य स सुगन्ध आपणिकः। 'आहार्ये गुणे वा इद् वक्तव्यः' शोभनो गन्धो यस्य तत् सुगन्धि सुगन्धं शरीरम्। 'अल्पार्थाद् गन्धशब्दाद् विकल्पेनेद् वाच्यः' सूपगन्धि, घृतगन्धि भोजनम्। 'उपमानार्थात् पराद् गन्धशब्दादपि' उत्पलगन्धि मुखम्। 'सम्पूर्वात् प्रपूर्वाच्च जानुशब्दस्य बहुव्रीहौ ज्ञुज्ञावादेशौ वाच्यौ' संज्ञुः, संज्ञः, प्रज्ञुः, प्रज्ञः। 'मन्दाल्पाभ्यां पराद् मेधाशब्दस्यापि बहुव्रीहौ अस[illegible]ना-सान्तो वाच्यः' मन्दा मेधा यस्यासौ मन्दमेधा एवमल्पमेधाः।

**स्त्रियामूधसो न्। ७। ३। १६९।**

स्त्रियां वर्तमानस्योधसो बहुव्रीहौ न् स्यात्। कुण्डमिवोध्नो यस्याः सा कुण्डोध्नी गौः। स्त्रियामिति किम्— कुण्डोध्ना गोगणः। 'खर-खुरशब्दात् परस्य नासिकाशब्दस्य सञ्ज्ञायां नसादेशः स्यात्' खरणाः, खुरणाः। 'उपसर्गात् परस्य नासिकाया नसादेशो वाच्यो बहुव्रीहौ' प्रणसं मुखम्। 'वेरुपसर्गात्तु नासिकाया खु-ख्य-ग्र आदेशा बोध्याः' विगता नासिका यस्यासौ विखुः, विख्यः, विग्रः। 'धनुः-शब्दस्य बहुव्रीहौ धन्वन् वक्तव्यः' पुष्पधन्वा।

**सक्थ्यक्ष्णः स्वाङ्गे। ७। ३। १२६।**

स्वाङ्गार्थौ यौ सक्थ्यक्षी तदन्ताद् बहुव्रीहेष्टो भवति। दीर्घ-सक्थी, विशालाक्षी। स्वाङ्ग इति किम्— दीर्घसक्थि शकटम्।

**प्रमाणीसंख्याड्डः। ७। ३। १२८।**

प्रमाण्यन्तात् संख्यार्थाच्च बहुव्रीहेर्डो भवति । स्त्रीप्रमाणा गृहस्थाः, द्वित्राः ।

जातेरीयः सामान्यवति । ७ । ३ । १३९ ।

जात्यन्ताद् बहुव्रीहेरीयो भवति सामान्याश्रयेऽन्यपदार्थे । वैश्यजातीयः, क्षत्रियजातीयः । सामान्यवतीति किम्— बहुजातिर्ग्रामः । 'हस्त्यादिवर्जादुपमानात् परस्य सोः संख्यायाश्च परस्य बहुव्रीहौ पादस्य पाद् वक्तव्य.' व्याघ्रपाद् । सुपाद् । द्विपाद् ।

इति बहुव्रीहिसमासप्रकरणम् ।



# अथ द्वन्द्वसमासप्रकरणम् ।

---

## चार्थे द्वन्द्वः सहोक्तौ । ३ । १ । ११७ ।

चार्थे वर्तमानं नाम नाम्ना सह सहोक्तिविषये समस्यते, स च समासो द्वन्द्वसञ्ज्ञो भवति । समुच्चयान्वाचयेतरेतरसमाहारभेदात् चतुर्विधश्चार्थः । अनेकस्य क्रियाकारकादेरेकस्मिन्नर्थे तुल्यबलतया ढौकनं समुच्चय. । यथा विप्रः पठति पचति च, चैत्रो मैत्रश्च पठति । गुणप्रधानभावमात्रविशेषः समुच्चय एवान्वाचयो यथा हे बटो भिक्षामट, गां चानय । समुच्चयान्वाचयरूपे चार्थेऽन्योन्यापेक्षाभावाद् न भवति समासः । द्वयोस्तु इतरेतरसमाहारयोर्भवति । अन्योन्यसापेक्षाणामेव द्रव्याणामुद्भूतावयवभेदसमूह इतरेतरयोग. । अजयपालश्च विजयपालश्च जीवादिपदार्थं जानीत इति अजयपालविजयपालौ जीवादिपदार्थं जानीतः । धवश्च प्लक्षश्च धवप्लक्षौ, धवश्च खदिरश्च पलाशश्च धवखदिरपलाशा , अत्रावयवानामुद्भूतत्वात् तन्निबन्धनं द्वित्वं बहुत्वं च भवति । न्यग्भूतावयवभेदः समूहः समाहारः । धवश्च खदिरश्चानयो. समाहारः धवखदिरम्, धवश्च पलाशश्च न्यग्रोधश्चैषां समाहारः धवखदिरन्यग्रोधम् । अत्रावयवानां न्यग्भूतत्वात् समुदायस्य च प्राधान्यात् तस्यैकत्वाच्चैकवचनम् । पदैः प्रत्येकं पदार्थानां युगपदभिधानं सहोक्तिः । चैत्रमैत्रौ

घटं कुर्वातेऽत्र चैत्रशब्दो द्व्यर्थो मैत्रशब्दोऽपि द्व्यर्थ., चकारेण तु लक्ष्यतेऽयमर्थः ।

समानानामर्थेनैकः शेषः । ३ । १ । ११८ ।

समानार्थानां शब्दाना सहोक्तौ गम्यमानायामेक. शिष्यतेऽर्थादन्ये लुप्यन्ते । वक्रश्च कुटिलश्च वक्रौ कुटिलौ वा । अर्थेन समानानामिति किम्— प्लक्षन्यग्रोधौ । सहोक्ताविति किम्— वक्रश्च कुटिलश्च द्रश्यः ।

स्यादावसंख्येयः । ३ । १ । ११९ ।

सर्वस्यां स्यादौ विभक्तौ तुल्यरूपाणां सहोक्तौ गम्यमानायामेकः शिष्यते, संख्येयवाचि शब्दरूपं वर्जयित्वा । अक्षश्च शकटः, अक्षश्च देवन., अक्षश्च बिभीतक इति अक्षा । एवं घटाः पटा देवा इत्यादयः । 'त्यदादिभिरन्येन सहोक्तौ त्यदादिरेवैक. शिष्यते' स च चैत्रश्च तौ । 'भ्रात्रर्थस्य स्वस्रर्थेन सहोक्तौ भ्रात्रर्थ एकः शिष्यते' 'पुत्राथस्य दुहित्रर्थेन सहोक्तौ पुत्रार्थश्चैकः शिष्यते' भ्राता च स्वसा च भ्रातरौ, पुत्रश्च दुहिता च पुत्रौ । 'मातृशब्देन सहोक्तौ पितृशब्द एको वा शिष्यते' माता च पिता च पितरौ मातापितरौ वा।

वृद्धो यूना तन्मात्रभेदे । ३ । १ । १२४ ।

वृद्धप्रत्ययान्तस्य युवप्रत्ययान्तेन सहोक्तौ वृद्धप्रत्ययान्त एकः शिष्यते, तन्मात्रभेदे एव न तु प्रकृतिभेदेऽर्थभेदे वाऽन्यस्मिन् भेदे

सति । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । तन्मात्रभेद इति किम्—गार्ग्यवात्स्यायनौ ।

पुरुषः स्त्रिया । ३ । १ । १२६ ।

पुरुषशब्दः प्राणिनि पुंसि वर्तते । रूढस्त्रीवाचिना सहोक्तौ पुरुष एकः शिष्यते, तन्मात्रभेदे । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । "क्लीबं नामाक्लीबेन सहोक्तावेकं शिष्यते तन्मात्रभेदे, तच्च शिष्टमेकार्थं वा भवति' शुक्लं च शुक्लश्च शुक्ले वा ।

विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः । ३ । १ । १३० ।

द्रव्यं गुणक्रियावत् । विरोधिवाचिनामद्रव्याणां स्वजातीयैरेवारब्धो द्वन्द्व एकार्थो वा भवति । सुखं च दुःखं च सुखदुःखे सुखदुःखं वा ।

प्राणितूर्याङ्गाणाम् । ३ । १ । १३७ ।

प्राणितूर्ययोरङ्गार्थाना स्वजातीयारब्धो द्वन्द्व एकार्थो नित्यं भवति । कर्णनासिकम् । मार्दङ्गिकपाणविकम् । सेनाङ्गवाचिनां क्षुद्रजन्तुवाचिनां च स्वैर्द्वन्द्व एकार्थो नित्यं भवति । रथाश्चाश्वाश्च रथाश्वम्, यूकालिक्षम् । 'येषामध्येतॄणां निकटः पाठस्तेषां स्वैर्द्वन्द्व एकार्थः स्यात्, पदकक्रमकम् । 'जातिवैराणामपि' अहिनकुलम् । यतिब्राह्मणम् ।

पात्र्यशूद्रस्य । ३ । १ । १४३ ।

यैर्भुक्ते पात्रं संस्कारेण शुध्यति ते शूद्राः, पात्रमर्हन्तीति

न्या: । पात्रार्हशूद्रवाचिनां स्वैर्द्वन्द्व एकार्थो भवति । तक्षाय-स्कारम् । रजकतन्तुवायम् । एकवद्भावे नपुंसकत्वं यदुक्तम्—
" द्वन्द्वैकत्वाऽव्ययीभावौ क्रियाव्ययविशेषणे ।

कृत्याः क्तानाः खलञिनः भावे आ त्वात् समूहजः " ॥ १ ॥

द्वन्द्वैकत्वम्— सुखदुःखम् । अव्ययीभाव— दण्डादण्डि । क्रियाया अव्ययस्य च यद् विशेषणं तद्वाचि नाम-साधु पचति, प्राग् रमणीयम् । भावे विहिताः कृत्याः, क्तप्रत्ययः, आनेति कान— आनशौ, अनडपि इत्येते प्रत्ययाः तदन्तं च— चैत्रेण कार्यं कर्तव्यं कृतं पेचानं पच्यमानं लवनं स्थानं इत्यादयः । खलप्रत्ययान्तम्— दुराढ्यंभवं मैत्रेण । ञिन् सांराविणम् । ' भावे त्वतल् ' इत्यारभ्य ' ब्राह्मणस्त्वः ' इति त्वमभिव्याप्य ये प्रत्ययास्तदन्तं च नाम नपुंसकं भवतीत्यर्थः ।

लघ्वक्षरासखीदुत्स्वराद्यदल्पस्वरार्च्यमेकम् । ३ । १ । १६० ।

लघ्वक्षरं सखिवर्जितमिकारोकारान्तं स्वराद्यकारान्तमल्पस्वरं पूज्यवाचि चैकं द्वन्द्वे प्राक् प्रयोक्तव्यम् । लघ्वक्षरम्— शरशीर्षम् । असखीदुत— अग्नीषोमौ, पटुगुप्तौ । स्वराद्यत्— अश्वशस्त्रम्, उष्ट्रखरम्, उष्ट्रशशकम् । अश्वरथेन्द्रा, इन्द्ररथाश्वाः अत्रैकस्यैव नियमः 'स्पर्धे परम्' इति न्यायात् । अल्पस्वरम्— प्लक्षन्यग्रोधौ, धवखदिरपलाशाः । अर्च्यम्— श्रद्धामेधे । एकमिति किम्— शङ्खदुन्दुभिवीणाः, वीणादुन्दुभिशङ्खा नाऽत्र वीणाशङ्खयोर्युगपत् पूर्वनिपातः ।

आ द्वन्द्वे । ३ । २ । ३९ ।

विद्यायोनिसम्बन्धनिमित्तानामृकारान्तानां यो द्वन्द्वस्तस्मिन् सत्युत्तरपदे परे पूर्वपदस्याऽऽद् भवति। होता च पोता च होतापोतारौ। माता च पिता च मातापितरौ। याताननान्दरौ। पुत्रशब्दे परेऽपि द्वन्द्वे ऋकारस्याकारो भवति पितापुत्रौ।

**वेदसहश्रुतावायुदेवतानाम् । ३ । २ । ४१ ।**

एषां द्वन्द्वे पूर्वपदस्य आ भवति उत्तरपदे परे। येषां साहचर्यं लोके प्रसिद्धं वेदे च सहभावेन निर्देशः कृतस्ते वेदसहश्रुताः। इन्द्रासोमौ। इन्द्रावृहस्पती। वायुवर्जनाद् वाय्वग्नी।

**ईः षोमवरुणेऽग्नेः । ३ । २ । ४२ ।**

अग्निशब्दस्येकारादेशो भवति षोमे वरुणे च परे, वेदसहश्रुतावायुदेवतानां द्वन्द्वे। अग्नीषोमौ। अग्नीवरुणौ।

**दिवो द्यावा । ३ । २ । ४४ ।**

देवताद्वन्द्वे उत्तरपदे परे दिवो द्यावादेशो भवति। द्यौश्च भूमिश्च द्यावाभूमी। 'पृथिवीशब्दे उत्तरपदे दिवस्-दिवः इत्येतावादेशौ वा भवतः' दिवस्पृथिव्यौ, दिवःपृथिव्यौ, द्यावापृथिव्यौ। 'मातृपित्रोर्द्वन्द्वे ऋकारस्यार वोभयोः पदयोर्निपात्यः' मातरपितरयोः, मातापित्रोः।

**परस्परान्योन्येतरेतरस्याम् स्यादेर्वाऽपुंसि । ३ । २ । १ ।**

अपुंसि प्रयुज्यमानानां परस्परादीनां सम्बन्धिनः स्यादेः स्थाने

वाऽऽमादेशो भवति। एते च परस्परादयः स्वभावादेकत्वपुंस्त्ववृत्तयः कर्मव्यतिहारविषयाः। अन्योऽन्यमेकक्रियाकरणं कर्मव्यतिहारः। इमे सख्यौ कुले वा परस्परां परस्परं वा भोजयतः। इमे सख्यौ कुले वाऽन्योऽन्यमन्योऽन्यां वा भोजयतः। आभिः सखीभिः इतरेतरां वा इतरेतरेण भोज्यते इत्यादि।

अथालुप्समासः—

असत्त्वे ङसेः। ३। २। १०।

असत्त्वे विहितो यो ङसिस्तस्योत्तरपदे परे लुब् न भवति। स्तोकान्मुक्तः। कृच्छ्रान्मुक्तः।

ओजोऽञ्जःसहोऽम्भस्तमस्तपसष्टः। ३। २। १२।

एभ्यः परस्य तृतीयैकवचनस्य टाप्रत्ययस्य लुब् न भवति। ओजसाकृतम्। अञ्जसाकृतम्। सहसाकृतम्। अम्भसाकृतम्। तमसाकृतम्। तपसाकृतम्। 'पुंसोऽनुजे, जनुषोऽन्धे, आत्मनश्च पूरणप्रत्ययान्ते उत्तरपदे टाप्रत्ययस्य लुग् न वाच्यः'। पुंसाऽनुजः। जनुषाऽन्धः। आत्मनाद्वितीय।

परात्मभ्यां ङेः। ३। २। १७।

आभ्यां परस्य चतुर्थ्येकवचनस्योत्तरपदे परे सञ्ज्ञायां लुब् न भवति। परस्मैपदम्। आत्मनेपदम्।

तत्पुरुषे कृति। ३। २। २०।

अकारान्ताद् व्यञ्जनान्ताच्च परस्य सप्तम्याः कृदन्त उत्तर-पदे परे तत्पुरुषे समासे लुब् न भवति। स्तम्बेरमः। कर्णेजपः। भस्मनिहुतम्।

अपो य–योनि–मति–चरे। ३। २। २८।

अस्मात् परस्य सप्तम्या यप्रत्यये योनि–मति–चरेषु चोत्तर-पदेषु लुब् न भवति। अप्सु भवः अप्सव्यः। अप्सुयोनिः। अप्सु-मतिः। अप्सुचरः। 'मध्यादन्ताच्च सप्तम्या गुरौ परे लुग् न वाच्य.' मध्येगुरुः। अन्तेगुरुः।

अमूर्धमस्तकात् स्वाङ्गादकामे। ३। २। २२।

मूर्ध–मस्तकवर्जितात् स्वाङ्गवाचिनोऽदन्व्यञ्जनात् परस्याः सप्तम्याः कामवर्जित उत्तरपदे परे लुब् न स्यात्। उरसिलोम। शिरसिशिखः। उदरेमणिः। कण्ठेकाल.।

पश्यद्–वाग्–दिशो हर–युक्ति–दण्डे। ३। २। ३२।

हर–युक्ति–दण्डे उत्तरपदे एभ्यः परस्या षष्ठ्या लुब् न भवति। पश्यतोहरः। वाचोयुक्तिः। दिशोदण्डः। 'देवानांप्रिय इत्यलुब् निपात्यः'।

ऋदुदित्तरतमरूपकल्पब्रुवचेलड्गोत्रमतहते वा हृस्वश्च। ३। २। ६३।

परतः स्त्रीलिङ्ग ऋदुदित् शब्दस्तरादिप्रत्यये ब्रुवादावुत्तरपदे च परे हृस्वान्तः पुंवच्च वा भवति। पचन्तितरा, पचत्तरा, पचन्ती-

तरा । श्रेयसितमा, श्रेयस्तमा, श्रेयसीतमा। विदुषिरूपा, विद्वद्रूपा, विदुषीरूपा । पचन्तिकल्पा, पचत्कल्पा, पचन्तीकल्पा । पचन्तिब्रुवा, पचद्ब्रुवा, पचन्तीब्रुवा । पचन्तिचेली, पचच्चेली, पचन्तीचेली । पचन्तिगोत्रा, पचद्गोत्रा, पचन्तीगोत्रा । पचन्तिमता, पचन्मता, पचन्तीमता। पचन्तिहता, पचद्धता, पचन्तीहता । 'गौणस्याक्विपो गोशब्दस्य ङ्याद्यन्तस्य चान्ते वर्तमानस्यापि ह्रस्वो वेदितव्यः' पञ्च गावो यस्य स पञ्चगु, अतिकुमारिः, अतिखट्व । 'ङयन्तस्यैकस्वराणा विकल्पेनान्येषां नित्यं ह्रस्वस्तरादिषु परेषु वेदितव्यः, स्त्रितरा, स्त्रीतरा । गौरितमा । 'महच्छब्दस्योत्तरपदे क्वचिद् डा वाच्यः' महावीरः, महाकरः ।

**गोस्तत्पुरुषात् । ७ । ३ । १०५ ।**

गोशब्दान्तात् तत्पुरुषादड् भवति । राज्ञो गौ राजगवी ।

**राजन्सखेः । ७ । ३ । १०६ ।**

एतदन्तात् तत्पुरुषादड् भवति । पञ्चानां राज्ञां समाहारः पञ्चराजी । राज्ञः सखा राजसखः ।

**ऋक्पूःपथ्यपोऽत् । ७ । ३ । ७६ ।**

ऋगाद्यन्तात् समासादद् भवति । अर्धर्चः । त्रिपुरम् । जलपथः । द्वीपम् । 'धुरन्तादद् वाच्यश्चेद् धूर्नाक्षस्य' राजधुरा । 'उपसर्गात् परस्याध्वनः समवान्धेभ्यश्च तमसोऽद् वक्तव्यः' प्राध्वः, सन्तमसम्, अवतमसम्, अन्धतमसम् ।

**प्रति-परोऽनोरव्ययीभावात् । ७ । ३ । ८७ ।**

प्रत्यादिपूर्वादक्ष्यन्तादव्ययीभावादद् भवति । प्रत्यक्षम् । परोक्षम् । अन्वक्षम् । 'अक्ष्णन्तादव्ययीभावादद् वाच्यः' उपतक्षम् ।

**गिरि-नदी-पौर्णमास्याग्रहायण्यपञ्चमवर्ग्याद्वा । ७ । ३ । ९० ।**

एतदन्तात् पञ्चमवर्जवर्गान्ताच्चाव्ययीभावादद् वा भवति । अन्तर्गिरम्, अन्तर्गिरि । उपनदम्, उपनदि । उपपौर्णमासम्, उपपौर्णमासि । उपाग्रहायणम्, उपाग्रहायणि । उपस्रुचम्, उपस्रुक् । 'संख्यार्थात् पराभ्यां नदी-गोदावरीभ्यां तु नित्यं वक्तव्यः' । पञ्चनदम्, द्विगोदावरम् ।

**जात-महद्-वृद्धादुक्ष्णः कर्मधारयात् । ७ । ३ । ९५ ।**

एभ्यः परो य उक्षशब्दस्तदन्तात् कर्मधारयादद् भवति । जातोक्षः । महोक्षः । वृद्धोक्षः ।

**स्त्रियाः पुंसो द्वन्द्वाच्च । ७ । ३ । ९६ ।**

स्त्रीशब्दात् परो यः पुमान् तदन्ताद् द्वन्द्वात् कर्मधारयाच्चाद् भवति । स्त्रीपुंसौ । स्त्रीपुंसः । 'ऋक्सामे, ऋग्यजुषम्, धेन्वनडुहौ, वाङ्मनसे, अहोरात्रः, रात्रिंदिवम्, नक्तंदिवम्, अहर्दिवम्, ऊर्वष्ठीवम्, पदष्ठीवम्, अक्षिभ्रुवम्, दारगवम्' एते अदन्ता द्वन्द्वे निपात्याः ।

**चवर्गदषहः समाहारे । ७ । ३ । ९८ ।**

समाहारार्थादेतदन्ताद् द्वन्द्वादट् भवति । वाक्त्वचम् । संपद्विपदम् । वाक्त्विषम् । छत्रोपानहम् ।

**द्विगोरन्नह्नोऽट् । ७ । ३ । ९९ ।**

अन्नन्तादहन्नन्ताच्च द्विगुसमाहारादट् भवति । पञ्चानां तक्ष्णां समाहारः पञ्चतक्षी । द्व्यहः । 'खार्यन्ताद् वा वाच्यः' द्विखारम्, द्विखारि ।

**नावः । ७ । ३ । १०४ ।**

अर्धात् परो यो नौशब्दस्तदन्तात् समासाद् द्विगोश्चाट् भवति । अर्धनावी । पञ्चनावम् ।

**प्राणिन उपमानात् । ७ । ३ । १११ ।**

प्राण्यर्थादुपमानात् परो यः श्वा तदन्तात् तत्पुरुषादट् भवति । व्याघ्रश्वः व्याघ्र इव श्वा इत्यर्थः । 'अहन्नन्तात् तत्पुरुषादट् वाच्यः' परमाहः ।

**सर्वांशसंख्याऽव्ययात् । ७ । ३ । ११८ ।**

सर्वशब्दादंशार्थात् संख्यार्थादव्ययाच्च परो योऽहन्शब्दस्तदन्तात् तत्पुरुषादट् भवति, अह्नोऽह्नादेशश्च । सर्वाह्णः । पूर्वाह्णः । द्व्यह्नः । अत्यही ।

**अतोऽह्नस्य । २ । ३ । ७३ ।**

रेफादिमतोऽकारान्तात् पूर्वपदात् परस्याह्नस्य नो णू भवति । पराह्णः ।

अक्ष्णोऽप्राण्यङ्गे । ७ । ३ । ८५ ।

अप्राण्यङ्गार्थादक्ष्यन्तादद्न्तो भवति । लवणाक्षम् । शकटाक्षम् ।

संख्यातैकपुण्यवर्षादीर्घाच्च रात्रेरत् । ७ । ३ । ११९ ।

एभ्यः सर्वांशादेश्च परो यो रात्रिशब्दस्तदन्तात् तत्पुरुषादद् भवति । संख्यातरात्रः । एकरात्रः । पुण्यरात्रः । वर्षारात्रः । दीर्घ-रात्रः । सर्वरात्रः । पूर्वरात्रः । द्विरात्रः । अतिरात्रः ।

नञव्ययात् संख्याया डः । ७ । ३ । १२३ ।

आभ्यां परो यः संख्यावाची शब्दस्तदन्तात् तत्पुरुषाद् डो भवति । अदशाः । निस्त्रिंशः । 'संख्याऽव्ययाभ्यां परो योऽङ्गुलिस्तदन्तात् तत्पुरुषाद् डो वाच्यः' । द्व्यङ्गुलम्, निरङ्गुलम् ।

नञ्–सु–व्युप–त्रेश्चतुरः । ७ । ३ । १३१ ।

एभ्यः परो यश्चतुरशब्दस्तदन्ताद् बहुव्रीहेरत् भवति । अचतुरः । सुचतुरः । विचतुरः । उपचतुराः । त्रिचतुराः ।

वयसि दन्तस्य दतृ । ७ । ३ । १५१ ।

सुसंख्यापूर्वस्य दन्तस्य बहुव्रीहौ दतृ आदेशो भवति, वयसि गम्ये । शोभना दन्ता यस्य स सुदन् कुमारः । द्विदन्

बाल: । 'सुपूर्वस्य हृदयस्य बहुव्रीहौ मित्रेऽर्थे दु पूर्वस्य चामित्रे हृद् निपात्यः' । सुहृद् मित्रम् । दुर्हृदमित्रः ।

**इनः कच् । ७ । ३ । १७० ।**

इन्नन्ताद् बहुव्रीहेः स्त्र्यर्थात् कच् भवति । बहवो दण्डिनो यस्या सा बहुदण्डिका सेना । 'ऋकारान्ताद् नित्यदिदन्ताच्च बहुव्रीहेः कच् वक्तव्य' । बहुकर्तृक' । बहुनदीकः ।

**शेषाद् वा । ७ । ३ । १७५ ।**

उक्तातिरिक्ताद् बहुव्रीहेः कच वा भवति । बहुखट्वकः. बहुखट्वः ।

**ईयसोः । ७ । ३ । १७७ ।**

ईयस्वन्ताद् बहुव्रीहेः कच न भवति । बहुश्रेयसी साध्वी । 'षोडश, षोढा, षड्ढा, षोडत् इत्यादयस्तु निपातनाद्'। यत्र नित्यसमासस्तत्रास्वपदविग्रहो विधेयो यथा स्त्रियामिति अधिस्त्रि ।

**इति समासप्रकरणं समाप्तम् ।**



# अथ तद्धितार्थो निरूप्यते ।

## तद्धितोऽणादिः । ६ । १ । १ ।

इतो वक्ष्यमाणा अणादिप्रत्ययास्तद्धितसञ्ज्ञका भवन्ति ।

## पौत्रादि वृद्धम् । ६ । १ । २ ।

पौत्रप्रभृति अपत्यं वृद्धम् । अपत्यवतः परमप्रकृतेर्यत् पौत्राद्यपत्यं तद् वृद्धसञ्ज्ञकं भवति । गर्गस्यापत्यं पौत्रादिः गार्ग्यः । नडस्यापत्यं पौत्रादिः नाडायनः । पौत्रादीति किम्—गर्गस्यानन्तरापत्यं गार्गिः ।

## वंश्यज्यायोभ्रात्रोर्जीवति प्रपौत्राद्यस्त्री युवा । ६ । १ । ३ ।

वंश्यः पित्रादिः, ज्यायान् भ्राता वयोधिक इत्यर्थः, स चैकपितृकः एकमातृको वा, प्रपौत्रो मूलप्रकृतेश्चतुर्थः । वंश्ये ज्येष्ठभ्रातरि च जीवति सति स्त्रीवर्जितं प्रपौत्राद्यपत्यं युवसंज्ञकं भवति। गार्ग्यस्य युवाऽपत्यं गार्ग्यायणः । वंश्यज्यायोभ्रात्रोरितिकिम्—गार्ग्यः । जीवतीति किम्—मृते गार्ग्यः । अस्त्रीतिकिम्—स्त्री गार्गी।

## सपिण्डे वयःस्थानाधिके जीवद् वा । ६ । १ । ४ ।

ययोः सप्तम एकः पुरुषस्तौ मिथः सपिण्डौ स्तः । वयो यौवनादि । स्थानं पिता पुत्रादि च । द्वाभ्यां वयःस्थानाभ्यामधिके सपिण्डे जीवति सति मूलप्रकृतेः स्त्रीवर्ज्यं प्रपौत्राद्यपत्यं

जीवदेव युवसञ्ज्ञं वा भवति। गार्ग्यस्यापत्यं जीवद् गार्ग्यः गार्ग्यायणो वा । वात्स्यः वात्स्यायनः ।

सञ्ज्ञा दुर्वा । ६ । १ । ६ ।

हठाद् या सञ्ज्ञा सा दुसञ्ज्ञा वा भवति । चैत्रीयाः चैत्राः ।

त्यदादिः । ६ । १ । ७ ।

असौ दुसञ्ज्ञो भवति । 'दोरीयः' इति ईये त्वदीयः । तदीयः ।

प्राग् जितादण् । ६ । १ । १३ ।

'तेन जितजयद्दीव्यत्खनत्सु' इत्येतस्मात् सूत्रात् प्राग् येऽपत्यादयोऽर्थास्तेष्वण् वा भवत्यपवादविषयं मुक्त्वा । उपगोरपत्यम्—औपगवः । मञ्जिष्ठेन रक्तम्—माञ्जिष्ठम् ।

ङसोऽपत्ये । ६ । १ । २८ ।

षष्ठ्यन्ताद् नाम्नोऽपत्येऽर्थे यथाविहितमणादयो भवन्ति । उपगु+अण् इति स्थिते ण इत्सञ्ज्ञायां सत्यां

वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते । ७ । ४ । १ ।

ञिति णिति तद्धिते परे प्रकृतेः प्रथमस्वरस्य वृद्धिर्भवति । इत्यादिस्वरस्य वृद्धौ औपगु+अ इति स्थिते

अस्वयंभुवोऽव् । ७ । ४ । ७० ।

स्वयंभूवर्जस्योवर्णान्तस्यापदस्य तद्धिते परेऽव् भवति। अवादेशे औपगवः ।

### धनादेः पत्युः । ६ । १ । १४ ।

धनादिगणपठिताच्छब्दात् परो यः पतिशब्दस्तदन्तात् प्रागूजितीयेऽर्थेऽण् भवति । धनपतेरपत्यं तत्र भवो वा धानपतः । अश्वपतेः आश्वपत. ।

### अनिदम्यणपवादे च दित्यदित्यादित्ययम–
### पत्युत्तरपदाञ् ञ्यः । ६ । १ । १५ ।

दित्यादिशब्दात् पत्युत्तरपदाच्चेदमर्थवर्जिते प्रागूजितीयेऽर्थेऽपत्यार्थरूपे ण्योऽणोऽपवादस्तद्विषये च ञ्यः भवति । दितेरपत्यं दैत्यः । अदितेरपत्यमादित्यः । आदित्यो देवता यस्य तद् आदित्यम् । यमस्यापत्यं याम्यः । बृहस्पतिर्देवताऽस्य बार्हस्पत्यम् । इदमर्थवर्जनाद् आदित्यस्येदम्—आदितीयं मण्डलम् ।

### कल्यग्नेरेयण् । ६ । १ । १७ ।

आभ्यां प्रागूजितीये एयण् भवति । कलिर्देवताऽस्य तत् कालेयम् । आग्नेयम् ।

### उत्सादेरञ् । ६ । १ । १९ ।

अस्मात् प्रागूजितीयेऽनिदम्यणपवादे चाञ् भवति । उत्सस्यापत्यम्—औत्सः । तरुण्या अपत्यम्—तारुणः ।

### अः स्थाम्नः । ६ । १ । २२ ।

स्थाम्नः प्रागूजितीये अः भवति । अश्वत्थामः ।

लोम्नोऽपत्येषु । ६ । १ । २३ ।

अस्मात् प्रागुजितीये बह्वपत्यार्थे अः भवति । एकत्वे द्वित्वे च बाह्वादित्वादिञ् । उडुलोम्नोऽपत्यानि—उडुलोमाः । एकत्वे द्वित्वे च औडुलोमिः औडुलोमी ।

द्विगोरनपत्ये यस्वरादेर्लुबद्विः । ६ । १ । २४ ।

अपत्यार्थादन्यत्र प्रागजितीयेऽर्थे विहितस्य द्विगोः परस्य यकारादेः स्वरादेश्च प्रत्ययस्य लुब् भवति, न तु द्विः । द्वयो रथयो-र्वोढा द्विरथः 'रथाद् सादेश्च वोढ्ङ्गे' इति यः । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः । द्विगोरितिकिम् — पूर्वस्यां शालायां भवः— पौर्वशालः । यस्वरादेरिति किम् — पञ्चभ्यो गोभ्य आगतं पञ्चगुमयम् ।

न प्राग्जितीये स्वरे । ६ । १ । १३५ ।

गोत्रे उत्पन्नस्य प्रत्ययस्य बहुवचनेषु या लुब् वक्ष्यते सा प्रागुजितीयेऽर्थे यः स्वरादितद्धितो विधीयते तस्मिन् विषये न भवति । गर्गाणां छात्रा गार्गीयाः । वात्सीयाः ।

तद्धितयस्वरेऽनाति । २ । ४ । ९२ ।

व्यञ्जनात् परस्यापत्यप्रत्ययसम्बन्धिनो यकारस्य तद्धिते यका-रादावाकारवर्जस्वरादौ च प्रत्यये परे लुग् भवति । गार्ग्ये साधु-गार्गर्यः । गर्गाणां समूहो गार्गकम् । यस्वर इति किम् — गार्ग्या-दागतं गार्ग्यमयम् । अनातीति किम् — गार्ग्यायणे ।

**अत इञ् । ६ । १ । ३१ ।**

षष्ठ्यन्ताददन्तादपत्येऽर्थे इञ् भवति । दाक्षिः ।

**गर्गादिभ्यो यञ् । ६ । १ । ४२ ।**

एभ्योऽपत्ये वृद्धे यञ् भवति । गर्गस्य वृद्धापत्यं गार्ग्यः । वात्स्यः । जामदग्न्यः । धौम्यः । धानंजय्यः । 'विदादीनामञ् वाच्यो वृद्धेऽपत्ये' विदस्य वृद्धापत्यं वैदः ।

**नडादिभ्य आयनण् । ६ । १ । ५३ ।**

नड इत्यादिभ्यो वृद्धापत्ये आयनण् भवति । नाडायनः । चारायणः । वृद्धग्रहणादनन्तरापत्ये तु नाडिः, चारिः इत्यादिः ।

**यञिञः । ६ । १ । ५४ ।**

वृद्धेऽर्थे यौ यञिञौ तदन्ताद् युवापत्ये आयनण् भवति ।

**वृद्धाद् यूनि । ६ । १ । ३० ।**

युवापत्ये य. प्रत्ययः स वृद्धप्रत्ययान्ताद् भवति । गर्गस्य युवापत्यं गार्ग्यायणः । वत्सस्य वात्स्यायनः । दक्षस्य दाक्षायणः ।

**शिवादेरण् । ६ । १ । ६० ।**

शिवादिगणपठितादपत्येऽण् भवति । शैवः, प्रौष्ठः, चाण्ड इत्यादिः ।

**ऋषिवृष्ण्यन्धककुरुभ्यः । ६ । १ । ६१ ।**

ऋषयः प्रसिद्धाः, वृष्णयः अन्धककुरवः इति च वंशाख्याः ।

ऋष्यादिवाचिभ्यो नामभ्योऽपत्येऽण् भवति । वशिष्ठस्यापत्यं वाशिष्ठः । वैश्वामित्रः । वसुदेवस्यापत्यं वासुदेवः । आनिरुद्धः । श्वफल्कस्यापत्यं श्वाफल्कः । सहदेवस्यापत्यं साहदेवः । नाकुलः ।

**सङ्ख्यासंभद्राद् मातुर्मातुर्च । ६ । १ । ६६ ।**

संख्यावाचिनः शब्दात् संभद्राभ्यां च परो यो मातृशब्दस्तदन्तादपत्येऽर्थेऽण् भवति । मातुश्च मातुरादेशः । द्वयोर्मात्रोरपत्यं द्वैमातुरः । षाण्मातुरः । सामातुरः । भाद्रमातुरः ।

**कन्यात्रिवेण्याः कनीनत्रिवणं च । ६ । १ । ६२ ।**

आभ्यामपत्येऽण् यथासंख्यं च कनीनत्रिवणावादेशौ भवतः । कन्याया अपत्यं कानीनः । त्रिवेण्या अपत्यं त्रैवणः ।

**दितेश्चैयण् वा । ६ । १ । ६९ ।**

दितिशब्दाद् मण्डूकशब्दाच्चापत्ये एयण् वा भवति । दितेरपत्यं दैतेयः, दैत्यो वा । मण्डूकस्यापत्यं माण्डूकेयः, माण्डूकिर्वा । मण्डूकस्याणपि माण्डूकः ।

**ङ्याप्त्यूङः । ६ । १ । ७० ।**

ङ्यन्तादाबन्तात् त्यन्तादूङन्ताच्चापत्ये एयण् भवति । सुपर्ण्या अपत्यं सौपर्णेयः । विनताया अपत्यं वैनतेयः । युवत्या अपत्यं यौवतेयः । कमण्डल्वा अपत्यं कामण्डलेयः । 'पीलासाल्वाभ्यामणपि' पैलेयः, पैलः । साल्वेयः, साल्वः ।

**द्विस्वरादनद्याः । ६ । १ । ७१ ।**

नद्यर्थवर्जिताद् द्विस्वराद् ङ्याप्स्यूङन्तादपत्य एयण् भवति । दत्ताया अपत्यं दात्तेयः । नद्यर्थवर्जनात् नैप्रः, विधानबलात् पूर्वेणापि न । 'शुभ्रादीनामेयण् वाच्यः' शौभ्रेयः ।

**कल्याणादेरिन् चान्तस्य । ६ । १ । ७७ ।**

कल्याण इत्येवमादीनामपत्येऽर्थे एयण् अन्तस्य चेनादेशो भवति । केचित् कल्याणी इति शब्दं पठन्ति । कल्याणस्यापत्यं काल्याणिनेयः । सौभागिनेयः । दौर्भागिनेयः । बान्धकिनेयः । 'कुलटाशब्दस्य विकल्पेन वाच्यः' कौलटेयः ।

**क्षुद्राभ्य एरण् वा । ६ । १ । ८० ।**

अङ्गहीना वाऽनियतपुरुषाः स्त्रियः क्षुद्रा इति कथ्यन्ते । क्षुद्रार्थेभ्यः स्त्रीभ्योऽपत्ये एरण् वा भवति । काणाया अपत्यं काणेरः पक्षे काणेयः । दास्या अपत्यं दासेर., दासेयो वा । 'भ्रातृशब्दाद् व्य ईयश्च स्वसृशब्दाच्चेयो वक्तव्यः' भ्रातृव्यः, भ्रात्रीय. । स्वस्रीयः । 'श्वशुराद् यः' श्वशुर्यः ।

**मातृपित्रादेर्डेयणीयणौ । ६ । १ । ९० ।**

मातृ–पितृशब्दाभ्यां परो यः स्वसृशब्दस्तदन्तादपत्येऽर्थे डेयणीयणौ भवतः । मातृस्वसुरपत्यं मातृष्वस्रेयः, मातृष्वस्रीयः । पैतृष्वस्रेयः, पैतृष्वस्रीयः ।

**मातृपितुः स्वसुः । २ । ३ । १८ ।**

आभ्यां परस्य स्वसृशब्दस्य सत्य समासे षकारो भवति।

**जातौ राज्ञः। ६। १। ९२।**

जातौ गम्यमानाया राज्ञोऽपत्येऽर्थे यो भवति। राज्ञोऽपत्यं राजन्यः क्षत्रिया जातिश्चेद्। राजनोऽन्यः।

**मनोर्याणौ षश्चान्तः। ६। १। ९४।**

मनुशब्दादपत्येऽर्थे याणौ प्रत्ययौ भवतः, जातौ गम्यायाम्। तत्प्रत्यययोगे षश्चान्तादेश। मनोरपत्यं मानुष्यो मानुषो वा। कुत्सायां तु मनोरपत्यं मूढं माणवः।

**सम्राजः क्षत्रिय। ६। १। १०१।**

अतः क्षत्रियेऽपत्ये ञ्यो भवति। साम्राज्यः क्षत्रिय।

**सेनान्तकारुलक्ष्मणादिञ्च। ६। १। १०२।**

सेनान्तशब्दात् कार्वर्थशब्दाद् लक्ष्मणशब्दाच्चापत्येऽर्थे इञ ञ्यश्च भवतः। हारिषेणिः, हारिषेण्यः। तान्तुवायिः, तान्तुवायः। लाक्ष्मणिः, लाक्ष्मण्य।

**यञञोऽश्यापर्णान्तगोपवनादेः। ६। १। १२६।**

यञन्तस्याञन्तस्य च बहुगोत्रार्थस्य य प्रत्ययः तस्या-स्त्रियां लुब् भवति। गर्गाणामपत्यानि गर्गाः। विदस्यापत्यानि विदाः। एकत्वे द्वित्वे तु लुपोऽभवनाद् गार्ग्यः गार्ग्यौ। वैदः वैदौ।

**भृग्वङ्गिरस्कुत्सवशिष्ठगोतमात्रेः । ६ । १ । १२८ ।**

एभ्यो बहुगोत्रार्थस्य प्रत्ययस्य लुब् भवति, न तु स्त्रियाम् । भृगूणामपत्यानि भृगवः । अङ्गिरसः । कुत्साः । वशिष्ठाः । गोतमाः । अत्रयः ।

**यूनि लुप् । ६ । १ । १३७ ।**

यून्युत्पन्नप्रत्ययस्य प्राग् जितीयेऽर्थे स्वरादौ प्रत्यये विषयभूते लुब् भवति, लुपि सत्यां यः प्राप्नोति स भवेद् । पाण्टाहृतस्यापत्यं पाण्टाहृतिः, तस्य युवापत्यं पाण्टाहृतः, तस्य च्छात्रा इति प्राग् जितीयेऽर्थे स्वरादौ प्रत्यये चिकीर्षिते णप्रत्ययस्य लुब जातस्ततः ' वृद्धेऽञः ' इत्यनेनाञ् पाण्टाहृताः । पाण्टाहृति-मिमताभ्यामपत्यमात्रे ण आयनिञ् च वक्तव्यः ।

**राष्ट्रक्षत्रियात् सरूपाद्राजापत्ये द्रिरञ् । ६ । १ । ११४ ।**

सरूपाभ्यां राष्ट्रक्षत्रियाभ्यां यथासंख्यं राजापत्येऽञ् भवति स च द्रिः । विदेहानां राजा अपत्यं वा वैदेहो बहुत्वे तु विदेहा राजानोऽपत्यानि वा ।

**पुरुमगधकलिङ्गसूरमसाद्विस्वरादण् । ६ । १ । ११६ ।**

राष्ट्रक्षत्रियार्थेभ्यः सरूपेभ्य एभ्यो द्विस्वरेभ्यश्चाण् भवति । पुरोरपत्यं राजा वा पौरवः । मागधः । कालिङ्गः । सौरमसः । आङ्गः ।

इत्यपत्याधिकारः ।

**रागाट्टो रक्ते । ६ । २ । १ ।**

रज्यतेऽनेनेति रागः कुसुम्भादिः, तस्माद् रागविशेषवाचिनस्तृतीयान्ताद्रक्तमित्यर्थे यथाविहितं प्रत्यया भवन्ति । कषायेण रक्त वस्त्रं काषायम् । मञ्जिष्ठेन रक्तं माञ्जिष्ठम् । कुसुम्भेन रक्तं कौसुम्भम् ।

**लाक्षारोचनादिकण् । ६ । २ । २ ।**

तृतीयान्ताभ्यामाभ्यां रक्तमित्यर्थे इकण् भवति । लाक्षया रक्तं लाक्षिकं वस्त्रम् । रोचनेन रक्तं रौचनिकम् ।

**नीलपीतादकम् । ६ । २ । ४ ।**

तृतीयान्ताभ्यामाभ्या रक्तमित्यर्थे यथासंख्यमकौ भवतः । नीलेन रक्तं नीलम् । पीतेन रक्तं पीनकम् ।

**उदितगुरोर्भाद् युक्तेऽब्दे । ६ । २ । ५ ।**

उदितो गुरुर्बृहस्पतिर्यस्मिन् नक्षत्रे तदर्थाद् टान्ताद् युक्तेऽब्दरूपेऽर्थे यथाविहितं प्रत्ययो भवति । उदितगुरुणा पुष्येण युक्तं वर्षं पौषं वर्षम् ।

**चन्द्रयुक्तात् काले लुप् त्वप्रयुक्ते । ६ । २ । ६ ।**

चन्द्रयुक्त यन्नक्षत्रं तदर्थाद् टाप्रत्ययान्ताद् युक्ते कालेऽर्थे यथाविहितं प्रत्ययो भवति । चन्द्रयुक्तेन पुष्येण नक्षत्रेण युक्तमहः पौषमहः । पौषी रात्री । माघं दिनम् । माघी रात्रिः ।

'कालवाचिनः शब्दस्याप्रयोगे तु लुब् भवति' अद्य पुष्यः। अद्य कृत्तिका।

### श्रवणाश्वत्थान्नाम्न्यः। ६। २। ८।

चन्द्रयुक्तात् श्रवणादश्वत्थात् टाप्रत्ययान्ताद् युक्ते कालेऽर्थे संज्ञायामः भवति। श्रवणेन चन्द्रयुक्तेन युक्ता रात्रिः श्रवणा रात्रिः। अश्वत्थेन चन्द्रयुक्तेन युक्तमहः आश्वत्थमहः।

### दृष्टे साम्नि नाम्नि। ६। २। १३३।

टाप्रत्ययान्ताद् दृष्टं सामेत्यर्थे यथाविहितं प्रत्ययो भवति। क्रुञ्चेन दृष्टं साम क्रौञ्चं सामे, अत्राण्। कलिना दृष्टं साम कालेयम्, अत्रेयण्।

### तेन च्छन्ने रथे। ६। २। १३१।

तृतीयान्ताच्छन्ने रथेऽर्थे यथाविहितं प्रत्ययो भवति। वस्त्रेण-च्छन्नः – वास्त्रो रथः। 'पाण्डुकम्बलात् तु इन् वाच्यः' पाण्डु-कम्बलेन च्छन्नो रथः पाण्डुकम्बली इन्

### साऽस्य पौर्णमासी। ६। २। ९८।

सेति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं नाम्नि प्रत्ययो भवति, प्रथमान्तं चेत् पौर्णमासी। पौषी पौर्णमासी अस्य स पौषो मासोऽर्धमासो वा। आग्रहायण्यश्वत्थात् त्वत्रार्थे नित्यं, चैत्री-कार्तिकी–फाल्गुनी–श्रवणाभ्यस्तु विकल्पेनेकण् वक्तव्यः। आग्र-हायणी पौर्णमास्यस्य स आग्राहायणिको मासः। अश्वत्था पौर्ण-

मास्यस्य स आश्वत्थिकः। चैत्री पौर्णमास्यस्य स चैत्रः, चैत्रिको मासोऽर्धमासो वा। एवं कार्तिकः, कार्तिकिकः। फाल्गुनः, फाल्गुनिकः। श्रावणः, श्रावणिकः।

देवता। ६। २। १०१।

देवतार्थात् प्रथमान्तात् षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति। जिनो देवताऽस्यासौ जैनः। शिवो देवताऽस्यासौ शैवः। एवं बौद्धः। श्रीर्देवताऽस्य श्रायम्। 'शुक्रात् तु इयो वाच्यः' शुक्रो देवताऽस्य शुक्रियं हवि'। 'शतरुद्रात्तु इय ईयश्च नित्यं, महेन्द्रात्तु वा वाच्यौ' शतरुद्रो देवताऽस्य शतरुद्रियं, शतरुद्रीयं हविः, महेन्द्रो देवताऽस्य महेन्द्रीयं माहेन्द्रम्।

षष्ठ्याः समूहे। ६। २। ९।

षष्ठ्यन्तात् समूहेऽर्थे यथाविहितं प्रत्ययो भवति। चषाणां समूहः चाषम्। बकाना समूहो बाकम्। स्त्रीणां समूहः स्त्रैणम्। गवां समूहो गव्यम्। भिक्षाणां समूहो भैक्षम्। गर्भिणीनां समूहो गार्भिणम्।

गोत्रोक्षवत्सोष्ट्रवृद्धाजोरभ्रमनुष्यराजराजन्यराजपुत्रादकञ्
। ६। २। १२।

गोत्रप्रत्ययान्तादुक्षादेश्च षष्ठ्यन्तात् समूहेऽकञ् भवति। गार्गाणां समूहो गार्गकम्। औपगवानां समूह औपगवकम्। औक्षकम्। वात्सकम्। औष्ट्रकम्। वार्द्धकम्। आजकम्। औरभ्रकम्।

मानुष्यकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । 'केदारात् ण्योऽकञिकणौ च वाच्यौ' कैदार्यं,कैदारकम्, कैदारिकम् । 'कवचि-हस्तिभ्यामचित्तवाचिनश्चेकण् वाच्यः । कावचिकम् । हास्तिकम् । अपूपाना समूह आपूपिकम् । शाष्कुलिकम् । 'अनञ्पूर्वाद् धेनो रिकण् वक्तव्यः' धेनूनां समूह.— धेनु+इकण् इति स्थिते ।

**ऋवर्णोवर्णदोसिसुसशश्वदकस्मात्त इकस्येतो लुक् । ७ । ४ । ७१**

ऋवर्णोवर्णान्ताभ्यां दोस इसुसन्ताभ्या शश्वदकस्माद्वर्जात् तान्ताभ्यां च परस्येकस्यस्येतो लुग् भवति । धैनुकम् ।

**ब्राह्मणमाणववाडवाद् यः । ६ । २ । १६ ।**

एभ्यः समूहे यो भवति । ब्राह्मणानां समूहो ब्राह्मण्यम् । एवं माणव्यं, वाडव्यम् । 'गणिकाया ण्यो वाच्यः' गणिकानां समूहो गाणिक्यम् । 'पाशादिशब्दाद् गवादेश्च ल्यो वक्तव्यः' पाशानां समूहः पाश्या, तृणानां समूहस्तृण्या, गवानां समूहो गव्या रथानां समूहो रथ्या, लकारः स्त्रीलिङ्गार्थः ।

**ग्रामजनबन्धुगजसहायात् तल् । ६ । २ । २८ ।**

एभ्यः समूहे तल् भवति । ग्रामता । जनता । बन्धुता । गजता । सहायता । 'गोरथवाताद् यथासंख्यं त्रल्कटचलूलं वाच्यम्' गवां समूहः गोत्रा, रथकट्या, वातूलः । 'श्वादीनामञ् वाच्यः' शूनां समूहः शौवम्, अह्नां समूहः आह्नम् । 'पर्शुशब्दात् तु इकण् वक्तव्यः' पर्शूनां समूहः पार्श्वम् ।

**योद्धृप्रयोजनाद् युद्धे । ६ । २ । ११३ ।**

योद्धृप्रर्थात् प्रयोजनार्थाच्च प्रथमान्ताद् षष्ठ्यर्थे युद्धे यथाविहितं प्रत्ययो भवति । विद्याधरा योद्धारो यस्य युद्धस्य तद् युद्धं वैद्याधरम्, एवं सौभद्रम् ।

**भावघञोऽस्यां णः । ६ । २ । ११४ ।**

भावे घञन्तात् प्रथमान्तादस्यामित्यर्थे णो भवति । प्रकृष्टः पातो यस्या सा प्रपाता तिथिः । 'श्येनंपातातैलंपातेति तु निपात्यौ' श्येनानां पातो यस्या तिथौ क्रियाया भूमौ क्रीडाया वा सा श्येनंपाता तिथिः भूमिः क्रिया क्रीडा वा, एवं तैलम्पाता ।

**प्रहरणात् क्रीडायां णः । ६ । २ । ११६ ।**

प्रथमान्तात् प्रहरणार्थादस्यामिति क्रीडायां णो भवति । दण्डः प्रहरणं यस्यां क्रीडाया सा दाण्डा क्रिया ।

**विकारे । ६ । २ । ३० ।**

षष्ठ्यन्ताद् विकारे यथाविहितं प्रत्ययो भवति । सुवर्णस्य विकारः सौवर्णमङ्गुलीयम् । अश्मनां विकार आश्मनः, आश्मः ।

**प्राण्यौषधिवृक्षेभ्योऽवयवे च । ६ । २ । ३१ ।**

षष्ठ्यन्तेभ्यः प्राणिवाचिभ्य औषधिवाचिभ्यो वृक्षवाचिभ्यश्च विकारेऽवयवे चार्थे यथाविहितं प्रत्ययो भवति । कपोतस्य विकारोऽवयवो वा कापोतं सक्थि मासं वा । दूर्वाया विकारोऽवयवो वा दौर्वं भस्म काण्डं वा । एवं बैल्वम् ।

## त्रपुजतोः षोन्तश्च । ६ । २ । ३३ ।

आभ्यां विकारेऽण् भवति, षश्चान्तः । त्रापुषम् । जातुषम् ।

## उष्ट्रादकञ् । ६ । २ । ३६ ।

अस्माद् विकारेऽवयवे चाकञ् भवति । उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकम् । 'शमीशब्दाद् लो वाच्यः' शामीलं भस्म काण्डं वा । 'पयोद्रोर्यः' पयस्यम्, द्रव्यम् । 'एण्या एयञ्' एण्या विकारोऽवयवो वा ऐणेयं मांसमङ्गम् ।

## पुरुषात् कृतहितवधविकारे चैयञ् । ६ । २ । [illegible]० ।

पुरुषशब्दादेष्वर्थेषु समूहे चैयञ् भवति । पुरुषाणां कृतो हितं वधो विकारः समूहो वा पौरुषेयो ग्रन्थः, पौरुषेयं पथ्यम्, पौरुषेयो वधो विकारो वा, पौरुषेयः समूहः ।

## अवेर्दुग्धे सोढदूसमरीसम् । ६ । २ । ६४ ।

अविशब्दाद् दुग्धेऽर्थे एते प्रत्यया भवन्ति । अवेर्दुग्धम्—अविसोढं, अविदूसम्, अविमरीसम् ।

## पितृमातुर्व्यडुलं भ्रातरि । ६ । २ । ६२ ।

पितृमातृभ्यां भ्रातर्यर्थे व्यडुलौ भवतः । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । 'पितृमातृभ्यां पितृमात्रोस्तु डामहट् वाच्यः' पितुः पिता माता वा पितामहः पितामही, मातुः पिता माता वा मातामहः मातामही ।

**राष्ट्रेऽनङ्गादिभ्यः । ६ । २ । ६८ ।**

अङ्गादिवर्जात् षष्ठयन्ताद्राष्ट्रेऽर्थेऽण् भवति । शिवस्य राष्ट्रं शैवम् । वीरस्य राष्ट्रं वैरम् । कुमारपालस्य राष्ट्रं कौमारपालम् । भारतम् । 'राजन्यादीनामकञ् वाच्य.' राजन्याना राष्ट्रं राजन्यकम् ।

**निवासादूरभवे इति देशे नाम्नि । ६ । २ । ६९ ।**

षष्ठयन्ताद् नाम्नो निवासादूरभवयोर्यथाविहितं प्रत्ययो भवति तदन्तं नाम चेद्रूढं देशनाम स्यात् । शिबीना निवासः शैवं पुरम् । विदिशाया अदूरभवं वैदिशं नगरम् ।

**तदत्रास्ति । ६ । २ । ७० ।**

तदिति प्रथमान्तादत्रेति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति । प्रथमान्तं चेदस्तीति प्रत्ययान्तं चेद् देशनाम । उदुम्बराः सन्ति यस्मिन्—औदुम्बरो देश ।

**तेन निर्वृत्ते च । ६ । २ । ७१ ।**

तृतीयान्ताद् निर्वृत्तेऽर्थे यथाविहितं प्रत्ययो भवति, देश-नाम्नि । कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी ।

**मध्वादेः । ६ । २ । ७३ ।**

एभ्यो निवासाद्यर्थचतुष्के यथायोगं मतुः भवति, देशनाम्नि । मधुमान् ।

**शिखायाः । ६ । २ । ७६ ।**

अतश्चातुरर्थिको वल भवति, देशनाम्नि। शिखावलं पुरम्।

**रोऽश्मादेः । ६ । २ । ७९ ।**

अस्माच्चातुरर्थिको रो भवति, देशनाम्नि। अश्मनां निवासः—अश्मरः ।

**प्रेक्षादेरिन् । ६ । २ । ८० ।**

अतश्चातुरर्थिक इन् भवति, देशे नाम्नि । प्रेक्षी । फलकी ।

**तृणादेः सल् । ६ । २ । ८१ ।**

अस्माच्चातुरर्थिकः सल् भवति, देशनाम्नि। तृणसा । नड्सा ।

**काशादेरिलः । ६ । २ । ८२ ।**

अस्माच्चातुरर्थिक इलप्रत्ययो भवति, देशे नाम्नि । काशिलम् । वाशिलम् ।

**अरीहणादेरकण् । ६ । २ । ८३ ।**

चातुरर्थिकोऽस्मादकण् भवति, देशे नाम्नि । आरीहणकम् । खाण्डवकम् ।

**सुपन्थ्यादेर्ञ्यः । ६ । २ । ८४ ।**

अतश्चातुरर्थिको देशनाम्नि ञ्यो भवति । सौपन्थ्यम् । सौवन्ध्यम् ।

**सुतङ्गमादेरिञ् । ६ । २ । ८५ ।**

अस्माच्चातुरर्थिको देशे नाम्नि इञ् भवति । सौतङ्गमिः । मौनचित्तिः ।

बलादेर्यः । ६ । २ । ८६ ।

अतश्चातुरर्थिको देशनाम्नि यो भवति । बलस्य निवासोऽदूरभवं वा नगरं बल्यम् ।

अहरादिभ्योऽञ् । ६ । २ । ८७ ।

अतो देशनाम्नि चातुरर्थिकोऽञ् भवति । आह्नम् । लौमम् ।

सख्यादेरेयण् । ६ । २ । ८८ ।

देशे नाम्नि चातुरर्थिक एयण् भवति । साखेय । साखिदत्तेयः ।

पन्थ्यादेरायनण् । ६ । २ । ८९ ।

अतश्चातुरर्थिको देशनाम्नि आयनण् भवति । पान्थायनः । पाक्षायणः ।

कर्णादेरायनिञ् । ६ । २ । ९० ।

चातुरर्थिको देशे नाम्नि आयनिञ् भवति । कार्णायनिः । वासिष्ठायनिः ।

उत्करादेरीयः । ६ । २ । ९१ ।

चातुरर्थिको देशनाम्नि ईयो भवति । उत्करस्य निवासोऽदूरभवं उत्करीयम् । उत्कराः सन्त्यस्मिन् उत्करीयो देशः । उत्करेण निर्वृत्तमुत्करीयं नगरम् । 'नडादीना कीयो वाच्यः' नडकीयः । प्लक्षकीयः ।

कृशाश्वादेरीयण् । ६ । २ । ९२ ।

अतश्चातुरर्थिको देशे नाम्नि इयण् भवति । कार्शाश्वीयः । आरिष्टीयः ।

**ऋश्यादेः कः । ६ । २ । ९४ ।**

चातुरर्थिको देशे नाम्नि को भवति । ऋश्यकः । न्यग्रोधकः ।

**वराहादेः कण् । ६ । २ । ९५ ।**

चातुरर्थिको देशे नाम्नि कण् भवति । वाराहकम् । पालाशकम् ।

**कुमुदादेरिकः । ६ । २ । ९६ ।**

अतश्चातुरर्थिको देशे नाम्नि इको भवति । कुमुदिकम् । इक्कटिकम् ।

**अश्वत्थादेरिकण् । ६ । २ । ९७ ।**

अस्माद् देशे नाम्नि चातुरर्थिक इकण् भवति । आश्वत्थिकम् । कौमुदिकम् ।

**तत्रोद्धृते पात्रेभ्यः । ६ । २ । १३८ ।**

पात्रार्थात् सप्तम्यन्तादुद्धृतेऽर्थे यथाविहितं प्रत्यया भवन्ति । शरावे उद्धृतः शाराव ओदनः । 'सप्तम्यन्तात् स्थण्डिलशब्दात् शेते व्रतीत्यर्थे यथायोगं प्रत्ययो वाच्यः' स्थण्डिले शेते स्थाण्डिलो भिक्षुः । निर्जीवस्थानं स्थण्डिलमुच्यते ।

**तद् वेत्त्यधीते । ६ । २ । ११७ ।**

तदिति द्वितीयान्ताद् वेत्ति अधीते , वेत्त्यर्थयोर्यथाविहितं

प्रत्ययो भवति । व्याकरणं वेत्ति वाऽधीते 'ऐकार्थ्ये' इति विभक्तेर्लुपि व्याकरण+अण् इति स्थिते—

य्वः पदान्तात् प्रागैदौत् । ७ । ४ । ५ ।

ञिति णिति तद्धिते परे इवर्णोवर्णयोर्वृद्धिप्राप्तौ सत्यां तयोरेव स्थाने यौ यकारवकारौ पदान्तौ जातौ ताभ्या यकारवकाराभ्यां प्राग् यथासंख्यमैदौतौ भवत । वैयाकरणः । एवं न्यायमधीते वेत्ति वा नैयायिक ।

न्यायादेरिकण् । ६ । २ । ११८ ।

अतो वेत्त्यधीते वेत्यर्थे इकण् भवति । नैयायिकः । नैयासिकः । सैद्धान्तिक ।

पदक्रमशिक्षामीमांसासाम्नोऽकः । ६ । २ । १२६ ।

एभ्यो वेत्त्यधीते वेत्यर्थेऽक भवति । पदं वेत्त्यधीते वेति पदकः, एवं क्रमक, शिक्षकः, मीमासकः, सामकः ।

संख्याकात् सूत्रे । ६ । २ । १२८ ।

संख्यावाचकात् परो यः कः तदन्तात् सूत्रार्थाद् वेत्त्यधीते वेत्यर्थे प्रत्ययस्य लुब भवति । अष्टका. पाणिनीयाः ।

प्रोक्तात् । ६ । २ । १२९ ।

प्रोक्तार्थप्रत्ययान्ताद् वेत्त्यधीते वेत्यर्थे प्रत्ययस्य लुब् भवति । गोतमेन प्रोक्तं गौतमम्, गौतमं वेत्त्यधीते वेति गौतमः ।

संस्कृते भक्ष्ये । ६ । २ । १४० ।

सप्तम्यन्तात् संस्कृते भक्ष्येऽर्थे यथाविहितं प्रत्ययो भवति । आष्ट्रे संस्कृता अपूपा आष्ट्राः । 'क्षीरशब्दादेयण्, दधिशब्दाट्ठक्च वक्तव्यः' क्षीरे संस्कृता क्षैरेयी यवागू, दध्नि संस्कृतं दाधिकम् । 'अन्यत्रार्थेऽपि क्वचित् यथाविहितं प्रत्यया भवन्ति' चक्षुषा गृह्यते चाक्षुषं रूपम्, अश्वेनोह्यते आश्वो रथः, दृषदि पिष्टा दार्षदाः, उदुखले क्षुण्णः औदुखलः, चतुर्भिरुह्यते चातुरं शकटम्, चतुर्दश्यां दृश्यते चातुर्दशम् इत्यादयः ।



## अथ शेषाधिकारः ।

### शेषे । ६ । ३ । १ ।

' ङसोऽपत्ये ' इत्यतोऽपत्यार्थमारभ्य ' संस्कृते भक्ष्ये इति संस्कृतभक्ष्यार्थं यावद् येऽर्थास्तेभ्योऽन्योऽर्थः शेषः । प्राग्-जितीये शेषेऽर्थे इतोऽनुक्रम्यमाण ज्ञातव्यम् ।

### नद्यादेरेयण् । ६ । ३ । २ ।

अस्मात् प्राग्जितीये शेषेऽर्थे एयण भवति । नद्यां भवो जातो वा नादेय । वने भवो वानेय । शेष इति किम्—समूहे तु नदीनां समूहो नादिक्म् । ' दूरादेत्य ' दूरे भव दूरेत्यः । 'पारा-वारादीनः ' पारावारे भवः पारावारीण ।

### द्युप्रागपागुदक्प्रतीचो यः । ६ । ३ । ८ ।

दिव्शब्दात् प्राच् अपाच् उदच् प्रत्यच् इत्येतेभ्यश्चाव्ययान-व्ययेभ्यः शेषेऽर्थे यो भवति । दिवि भवं दिव्यं सुखम्, प्राच्यम्, अपाच्यम्, उदीच्यम्, प्रतीच्यम् । 'ग्रामशब्दात्तु एयकञ्, ईनञ्, यश्च' ग्रामे भवो ग्रामेयकः, ग्रामीणः, ग्राम्यः ।

### कुलकुक्षिग्रीवाच्छ्वाऽस्यलङ्कारे । ६ । ३ । १२ ।

एभ्यो यथासंख्यं शेषेऽर्थे एयकञ् भवति । कुले जातः

कौलेयकः श्वा । कुक्षौ भवः कौक्षेयकोऽसिः । ग्रीवायां भवो ग्रैवेयकोऽलङ्कारः ।

**दक्षिणापश्चात्पुरसस्त्यण् । ६ । ३ । १३ ।**

एभ्य. शेषेऽर्थे त्यण् भवति । दक्षिणस्यां दिशि भवो दाक्षिणात्यः । पश्चाद् भवः पाश्चात्यः । पुरो भवः पौरस्त्यः । 'निशब्दाद् ध्रुवेऽर्थे, निस्शब्दाच्च गतेऽर्थे त्यच् वाच्यः' नित्य ध्रुवमित्यर्थः । वर्णेभ्यो निर्गतो निष्ट्यश्चण्डाल ।

**क्वेहामात्रतसस्त्यच् । ६ । ३ । १६ ।**

एभ्यस्त्रतस्प्रत्ययान्तेभ्यश्च त्यच् भवति । क्व भवो जातो वा क्वत्यः । इह भवो जातो वा इहत्यः । अमा भवोऽमात्यः । तत्र भवस्तत्रत्यः । कुत आगतः कुतस्त्यः ।

**ऐषमो-ह्यः-श्वसो वा । ६ । ३ । १९ ।**

एभ्यः प्राग्जितीये शेषे त्यच् वा भवति । ऐषमस्त्यम्, ऐषमस्तनम् । ह्यस्त्यम, ह्यस्तनम् । श्वस्त्यम, श्वस्तनम् ।

**शकलादेर्यञः । ६ । ३ । २७ ।**

अस्माद् यञन्तात् शेषेऽञ् भवति । शाकल्ये जातः शाकलः ।

**वृद्धेऽञः । ६ । ३ । २८ ।**

वृद्धेञन्तात् शेषेऽञ् भवति । दाक्षौ भवः दाक्षः ।

**भवतोरिकणीयसौ । ६ । ३ । ३० ।**

अतः शेषेऽर्थे इकणीयसौ भवतः । भवतोऽयं भावतकः 'ऋवर्णोवर्ण' इत्यादिनेकण इकारस्य लुक। भवत इदं भवदीयम्। 'परजनराजभ्यस्तु अकीयो वाच्यः' परस्यायं परकीयः, जनस्येदं जनकीयम्, राज्ञोऽयं राजकीयः।

**दोरीयः । ६ । ३ । ३२ ।**

दुसञ्ज्ञकात् शेषेऽर्थे ईयो भवति। देवदत्तस्यायं देवदत्तीयः, तस्यायं तदीयः ।

**राष्ट्रेभ्यः । ६ । ३ । ४४ ।**

राष्ट्रेभ्यो दुसञ्ज्ञकेभ्यः शेषेऽकञ् भवति। अभिसाराणामयमा-भिसारकः ।

**पृथिवीमध्याद् मध्यमश्चास्य । ६ । ३ । ६४ ।**

अतो देशार्थात् शेषे ईयो भवति प्रकृतेर्मध्यमादेशश्च। मध्य-मीयः ।

**वा युष्मदस्मदोऽञीनञौ युष्माकास्माकं चास्यैकत्वे तु तवकममकम्। ६ । ३ । ६७ ।**

युष्मदस्मद्भ्यां शेषेऽर्थे वाऽञीनञौ तत्सन्नियोगे च यथासंख्यं युष्मदस्मदोर्युष्माकास्माकावादेशौ,एकत्वे तु तवकममकावादेशौ भवतः। युवयोर्युष्माकं वेदं यौष्माकं, यौष्माकीणं पक्षे युष्मदीयम्। तवेदं तावकं, तावकीनं पक्षे त्वदीयम्। आवयोरस्माकं वेदमास्माकम्, आस्माकीनं पक्षे दुसञ्ज्ञत्वादीयः अस्मदीयम्, ममायं मामकः, माम-कीनः, पक्षे मदीयः ।

अमोऽन्तावोऽधसः । ६ । ३ । ७४ ।

एभ्यः शेषेऽमो भवति । अन्तमः, अवमः, अधमः ।

पश्चादाद्यन्ताग्रादिमः । ६ । ३ । ७५ ।

पश्चाद् आदि अन्त अग्र इत्येतेभ्यः शेषेऽर्थे इमो भवति । पश्चाद् भवः पश्चिमः, आदौ भव आदिमः, अन्ते भवोऽन्तिमः, अग्रे भवोऽग्रिम. ।

मध्याद् मः । ६ । ३ । ७६ ।

मध्यशब्दाच्छेषेऽर्थे मो भवति । मध्यम. ।

अध्यात्मादिभ्य इकण् । ६ । ३ । ७८ ।

एभ्यः शेषेऽर्थे इकण भवति । आत्मनीत्यध्यात्मं तत्र भवमाध्यात्मिकम्, एवमाधिदैविकम्, आधिभौतिकम्, और्ध्वदेहिकम् इत्यादि ।

वर्षाकालेभ्यः । ६ । ३ । ८० ।

वर्षाशब्दात् कालविशेषवाचिनश्च शेषेऽर्थे इकण् भवति । वर्षासु भवं वार्षिकम्, मासे भवं मासिकम्, संवत्सरे भवं सांवत्सरिकं प्रतिक्रमणम् । 'निशाप्रदोषात्' आभ्यां तु वा; निशायां भवं नैशं नैशिकं वा, एवं प्रादोषं प्रादोषिकम् ।

श्वसस्तादिः । ६ । ३ । ८४ ।

अस्मात् कालार्थाच्छेषे इकण् वा स्यात्, स च तादिः । श्वो भवः शौवस्तिकः ।

चिरपरुत्परारेः त्नः । ६ । ३ । ८५ ।

एभ्यः कालार्थाच्छेषेऽर्थे त्नो वा भवति । चिरत्नम्, परुत्नम्, परारित्नम् ।

पूर्वाह्णापराह्णात् तनट् । ६ । ३ । ८७ ।

आभ्यां वा तनड् भवति । पूर्वाह्णे भवः पूर्वाह्णतनः अत्र 'कालात्तनतर—' इत्यादिना सप्तम्या वा लुक् पूर्वाह्णेतनः । एवं अपराह्णेतन, अपराह्णतनः ।

सायंचिरंप्राह्णेप्रगेऽव्ययात् । ६ । ३ । ८८ ।

एभ्योऽव्ययाच्च कालार्थाच्छेषे तनड् नित्यं स्यात् । सायंतनम्, चिरंतनम्, प्राह्णेतनम्, प्रगेतनम्, दोषातनम्, दिवातनम्, ह्यस्तनम्, श्वस्तनम्, सनातनम्, पुरातनम्, 'पुराशब्दाद् नोऽपि' पुराणम् ।

भर्तुसन्ध्यादेरण् । ६ । ३ । ८९ ।

नक्षत्रार्थादृत्वर्थात् सन्ध्यादेश्च कालार्थाच्छेषेऽर्थेऽण् भवति । पुष्ये भव· पौप, ग्रीष्मे भवः ग्रैष्म·, सन्ध्यायां भवः सान्ध्यः, आमावास्यायां भवोऽमावास्यः । 'हेमन्तस्य तु वाऽण्, तद्योगे च तल्लुक्' हेमन्ते भवो हैमनो, हैमन्तः पक्षे हैमन्तिकः । 'प्रावृष एण्यः' प्रावृषेण्यः ।

तत्र कृतलब्धक्रीतसंभूते । ६ । ३ । ९४ ।

सप्तम्यन्तादेष्वर्थेषु यथायोगमणादय एयणादयश्च भवन्ति । उत्से कृतो लब्धः क्रीतः संभूतो वा औत्सः । बहिः कृतः लब्धः क्रीतः संभूतो वा बाह्यः । नद्यां कृतो लब्ध. क्रीत. संभूतो वा नादेयः । एवं राष्ट्रीयः, पारीणः, दाक्षिणात्यः, ग्रैष्मः, प्रावृषेण्यः, नैशः, नैशिकः ।

कुशले । ६ । ३ । ९५ ।

सप्तम्यन्तात् कुशलेऽर्थे यथाविहितमणेयणादयश्च भवन्ति । माथुरः, नादेयः ।

जाते । ६ । ३ । ९८ ।

सप्तम्यन्ताज्जातेऽर्थे यथाविहितमणेयणादयश्च भवन्ति । माथुर, औत्सः । 'प्रावृषस्तु जातेऽर्थे इको वाच्यः' प्रावृषि जातो प्रावृषिकः ।

कालाद् देये ऋणे । ६ । ३ । ११३ ।

सप्तम्यन्तात् कालार्थाद् देये ऋणे यथाविहितमणादयो भवन्ति । मासे देय ऋणं मासिकम्, एवं वार्षिकम् ।

साधुपुष्यत्पच्यमाने । ६ । ३ । ११७ ।

कालविशेषवाचिन सप्तम्यन्तात् साधौ पुष्यति पच्यमाने चार्थे यथाविहितं प्रत्ययो भवति । हेमन्ते साधु हैमन्तिकम् । वसन्ते पुष्यति वासन्ती कुन्दलता । शरदि पच्यन्ते शारदाः शालयः ।

उप्ते । ६ । ३ । ११८ ।

कालार्थात् सप्तम्यन्तादुप्तेऽर्थे यथाविहितं प्रत्ययो भवति। उप्ताः शारदाः शालयः। हेमन्ते उप्ता हैमनाः, हैमन्ताः, तका यवा· 'ग्रीष्मवसन्ताभ्या तूप्तेऽर्थे अकञ् वा वाच्यः' ग्रीष्मे ग्रैष्मकं, ग्रैष्मं वा। वसन्ते उप्तं वासन्तकं वासन्तं वा धान्यम्।

व्याहरति मृगे। ६। ३। १२१।

सप्तम्यन्तात् कालार्थात् व्याहरति मृगेऽर्थे यथाभिहितं प्रत्ययो भवति। निशायां व्याहरति नैशो, नैशिको वा शृगालः। एवं प्रादोषिक·, प्रादोषः।

जयिनि च। ६। ३। १२२।

जय प्रसहनमभ्यासः स विद्यते यस्यासौ जयी। सप्तम्यन्तात् कालवाचिनो जयिन्यर्थे यथाविहित प्रत्ययो भवति। निशासहचरितमध्ययनमपि निशा, तस्यां जयी नैशो नैशिको वा।

भवे। ६। ३। १२३।

सप्तम्यन्ताद् भवेऽर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्ने भवः स्रौघ्न., नद्यां भवो नादेय., हेमन्ते भवो हैमनो हैमन्तो हैमन्तिको वा।

दिगादिदेहांशाद् यः। ६। ३। १२४।

दिगादिभ्यो देहावयववाचिभ्यश्च सप्तम्यन्तेभ्यो भवे यो भवति। दिशि भवो दिश्यः। मूर्ध्नि भवो मूर्धन्यः। 'वर्गान्तात्तु ईयो वाच्यः' कवर्गे भवः कवर्गीयः। 'जिह्वामूलाङ्गुलिभ्या मध्य-

शब्दाच्चापि' जिह्वामूले भवः जिह्वामूलीयः, अङ्गुलौ भवः अङ्गुलीयः, मध्ये भवो मध्यीयः। 'गम्भीरपञ्चजनबहिर्देवात् ञ्यो बोध्यः' गम्भीरे भवो गाम्भीयः, एव पाञ्चजन्यः, बाह्यः, दैव्यः।

तत आगते । ६ । ३ । १४९ ।

पञ्चम्यन्तादागतेऽर्थे यथापूर्वोक्त प्रत्ययो भवति। कुमारपालादागतः कौमारपालः सचिवः, जिनादागतं जैनं शासनम्, नद्या आगतो नादेयः, ग्रामादागतो ग्राम्यः। भव

नृहेतुभ्यो रूप्यमयटौ वा । ६ । ३ । १५६ ।

नृवाचिभ्यो हेत्वर्थाच्च तत आगतेऽर्थे रूप्यमयटौ वा भवतः। जिनदत्तादागतं जिनदत्तरूप्यम्, जिनदत्तमयम्, जिनदत्तीयं वा। एवं समरूप्यं, सममयं, समीयम्।

प्रभवति । ६ । ३ । १५७ ।

पञ्चम्यन्तात् प्रभवत्यर्थे यथोक्तं प्रत्ययो भवति। हिमवतः प्रभवति हैमवती गङ्गा, एवं काश्मीरी वितस्ता। 'त्यदादिभ्यस्तु प्रभवत्यर्थे मयड् वाच्यः' तस्माद प्रभवति तन्मयम्। भवन्मयी।

तस्येदम् । ६ । ३ । १६० ।

षष्ठ्यन्तादिदमित्यर्थे यथोक्तं प्रत्ययो भवति। तवेदं त्वदीयम्, पूर्णचन्द्रस्येदम् पूर्णचन्द्रीय सारस्वतम्, उपगोरिदमौपगवम्, नद्या इदं नादेयम्।

तेन प्रोक्ते । ६ । ३ । १८१ ।

तृतीयान्तात् प्रोक्ते इत्यर्थे यथाविहितं प्रत्ययो भवति । भद्रबाहुना प्रोक्तानि वस्तूनि भाद्रबाहवानि वस्तूनि । तीर्थङ्करेण प्रोक्ता तैर्थङ्करी त्रिपदी । गणधरेण प्रोक्तं गाणधरं द्वादशाङ्गम् । पाणिनिना प्रोक्तं पाणिनीयम्, हेमचन्द्रेण प्रोक्तं हेमचन्द्रीयम्, बृहस्पतिना प्रोक्तं बार्हस्पत्यं शास्त्रम् ।

उपज्ञाते । ६ । ३ । १९१ ।

प्रथमतः प्रागुपदेशेन विना ज्ञातमुपज्ञातम् । उपज्ञाते टान्ताद् यथाविहितं प्रत्ययो भवति । पाणिनिना उपज्ञातं पाणिनीयम् । श्रेयांसेनोपज्ञातं श्रेयांसीयं दानम्, जिनेन्द्रेणोपज्ञातं जैनेन्द्रं व्याकरणम् ।

कृते । ६ । ३ । १९२ ।

तृतीयान्तात् कृतेऽर्थे यथोक्तं प्रत्ययो भवति । सिद्धसेनेन कृतः सिद्धसेनीयः स्तवः । इष्टकाभिः कृतः ऐष्टकः अण् प्रासादः । एवं माक्षिकम् ।

अमोऽधिकृत्य ग्रन्थे । ६ । ३ । १९८ ।

द्वितीयान्तादधिकृत्य कृते ग्रन्थे यथाविहितं प्रत्ययो भवति । सुभद्रामधिकृत्य कृतो ग्रन्थः सुभद्रीयः । ईय

गच्छति पथिदूते । ६ । ३ । २०३ ।

अमन्ताद् यथोक्तं प्रत्ययो भवति । गमनकर्ता चेत् पन्था दूतो वा । मथुरां गच्छति यः पन्था दूतो वा माथुरः, एवं स्रौघ्नः ।

भजति । ६ । ३ । २०४ ।

द्वितीयान्ताद् भजत्यर्थे यथाविहितं प्रत्ययो भवति । स्रुघ्नं भजति, जिनं भजति, बुद्धं भजति, विष्णुं भजति, शिवं भजति, कपिलं भजति वा स्रौघ्नः, जैनः, बौद्धः, वैष्णवः, शैवः, कापिलो वा । अण्

इति शेषाधिकारः । प्राग्जितीयार्थोऽपि समाप्तः ।

---

इकण् । ६ । ४ । १ ।

इतः 'तमर्हति' यावद् इकणधिकृतो वेदितव्यः । अधिकारार्थमिदम् ।

तेन जितजयद्दीव्यत्खनत्सु । ६ । ४ । २ ।

तृतीयान्तादेष्वर्थेषु इकण भवति । अक्षैर्जित, जय न, दीव्यति वाऽऽक्षिकम्, कुद्दालेन खनति कौद्दालिकः ।

संस्कृते । ६ । ४ । ३ ।

तृतीयान्तात् संस्कृते इकण् भवति । दध्ना संस्कृतं दाधिकम्, विद्यया संस्कृतो वैद्यिकः । उपाध्यायेन संस्कृत औपाध्यायिको विशालविजय. । जयन्तविजयेन संस्कृतो जायन्तविजयिकश्चमरेन्द्रविजयः ।

संसृष्टे । ६ । ४ । ५ ।

तृतीयान्तात् संसृष्टेऽर्थे इकण् भवति । मिश्रणमात्रं संसृष्टार्थः । दध्ना संसृष्टं दाधिकम् । 'लवणशब्दात्तु अः वाच्य.' लवणेन संसृष्टो लावणः सूपः । 'चूर्णमुद्गाभ्यामिनणौ ' चूर्णेन संसृष्टा. चूर्णिनः । मुद्गेन संसृष्टा मौद्गी ।

**व्यञ्जनेभ्य उपसिक्ते । ६ । ४ । ८ ।**

तृतीयान्ताद् व्यञ्जनवाचिन उपसिक्तेऽर्थे इकण् भवति । व्यञ्जनं सूपादि । सूपेनोपसिक्त सौपिकः, तिलेनोपसिक्तं तैलिकं शाकम् ।

**तरति । ६ । ४ । ९ ।**

तृतीयान्तात् तरत्यर्थे इकण् भवति । उडुपेन तरति औडुपिक । तुम्बेन तरति तौम्बिकः, एवं घाटिक, दार्तिक । ' नौद्विस्वरादिकः ' नावा तरति नाविकः । बाहुभ्या तरति बाहुक' ।

**चरति । ६ । ४ । ११ ।**

टान्ताच्चरत्यर्थे इकण् भवति । हस्तिना चरति हास्तिकः । दध्ना चरति भक्षयति दाधिकः । ' पदिको निपात्यः ' पादाभ्यां चरति पदिकः ।

**वेतनादेर्जीवति । ६ । ४ । १५ ।**

वेतनादिभ्यस्तृतीयान्तेभ्यो जीवत्यर्थे इकण् भवति । वेतनेन जीवति वैतनिकः पण्डितः, वादेन जीवति वादिकः, कलहेन जीवति कालहिकः । 'क्रयविक्रयादिको वाच्यः' क्रयविक्रयेण जीवति क्रयविक्रयिक आङ्ग्लदेशः, क्रयेण जीवति क्रयिका इदानीतनी भारतभूः, विक्रयेण जीवति विक्रयिकः जर्मनदेशः । ' आयुधादीयश्च ' आयुधेन जीवति आयुधीयः, आयुधिकः ।

**निर्वृत्तेऽक्षद्यूतादेः । ६ । ४ । २० ।**

अक्षद्यूत इत्यादिभ्यस्तृतीयान्तेभ्यो निर्वृत्तेऽर्थे इकण् भवति। अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम्, जङ्घाप्रहतेन निर्वृत्तं जाङ्घाप्रहतिकम्। 'भावार्थादिमो वाच्यः' पाकेन निर्वृत्तं पाकिमम्।

**हरत्युत्सङ्गादेः। ६। ४। २३।**

उत्सङ्गादिभ्यस्तृतीयान्तेभ्यो हरत्यर्थे भावे इकण् भवति। उत्सङ्गेन हरति औत्सङ्गिकम्, एवमौडुपिकम्।

**ओजःसहोऽम्भसो वर्तते। ६। ४। २७।**

तृतीयान्तेभ्य ओज इत्यादिभ्यो वर्ततेऽर्थे इकण् भवति। ओजसा बलेन वर्तते औजसिकः, साहसिकः, आम्भसिकः।

**रक्षदुञ्छतोः। ६। ४। ३०।**

द्वितीयान्ताद् रक्षदुञ्छतोरिकण् भवति। नगरं रक्षति नागरिकः। बदरमुञ्छति बादरिकः।

**पक्षिमत्स्यमृगार्थाद् घ्नति। ६। ४। ३१।**

पक्ष्यर्थमत्स्यार्थमृगार्थवाचिभ्यो द्वितीयान्तेभ्यो घ्नत्यर्थे इकण् भवति। पक्षिणो हन्ति पाक्षिकः। मत्स्यान् घ्नन्ति मात्स्यिकाः। मृगान् हन्ति मार्गिकः। हरिणं हन्ति हारिणिकः।

**परिपन्थात् तिष्ठति च। ६। ४। ३२।**

द्वितीयान्तात् परिपथात् तिष्ठति इति चार्थे इकण् भवति। परिपन्थान् हन्ति पारिपान्थिकः, परिपन्थं तिष्ठति पारिपान्थिकश्चौरः।

## अवृद्धेर्गृह्णाति गर्ह्ये । ६ । ४ । ३७ ।

द्वितीयान्ताद् वृद्धिवर्जाद् गृह्णात्यर्थे इकण् भवति । योऽसौ गृह्णाति स चेद् निन्द्यो भवेत् । द्विगुणं गृह्णाति द्वैगुणिकः, त्रैगुणिकः । अवृद्धेरिति किम्—वृद्धिं गृह्णातीति वाक्यमेव ।

## परदारादिभ्यो गच्छति । ६ । ४ । ३८ ।

परदारादिभ्यो द्वितीयान्तेभ्यो: गच्छत्यर्थे इकण् भवति। परदारान् गच्छति पारदारिकः, गुरुतल्पं गच्छति गौरुतल्पिकः, भ्रातजायां गच्छति भ्रातृजायिकः । 'पश्चात्यनुपदात्' अनुपदं धावति आनुपदिक. ।

## सुस्नातादिभ्यः पृच्छति । ६ । ४ । ४२ ।

सुस्नातादिभ्यो द्वितीयान्तेभ्यः पृच्छत्यर्थे इकण् भवति । सुस्नातं पृच्छति सौस्नातिकः, सुखरात्रिं पृच्छति सौखरात्रिकः ।

## प्रभूतादिभ्यो ब्रुवति । ६ । ४ । ४३ ।

प्रभूतादिभ्यो द्वितीयान्तेभ्यो ब्रुवत्यर्थे इकण् भवति । प्रभूतं ब्रूते प्राभूतिकः, पर्याप्तं ब्रवीति पार्याप्तिकः । वैपुलिकः ।

## समूहार्थात् समवेते । ६ । ४ । ४६ ।

समूहवाचिभ्यो द्वितीयान्तेभ्य· समवेतेऽर्थे इकण् भवति । समूहं समवैति सामूहिकः । समाजं समवैति सामाजिकः । 'पर्षदो ण्यः' पर्षदि समवैति पार्षद्यः ।

**धर्माधर्माच्चरति । ६ । ४ । ४९ ।**

आभ्यां द्वितीयान्ताभ्यां चरत्यर्थे इकण् भवति । धर्मं चरति धार्मिकः, अधर्मं चरति आधर्मिकः ।

**षष्ठ्या धर्म्ये । ६ । ४ । ५० ।**

षष्ठ्यन्ताद् धर्म्येऽर्थे इकण् भवति । 'न्यायानुवृत्त आचारो धर्मः, तस्मादनपेतं धर्म्यम्' शुल्कशालाया धर्म्यं शौल्कशालिकम् ।

**अवक्रये । ६ । ४ । ५३ ।**

षष्ठ्यन्तादवक्रयेऽर्थे इकण् भवति । अवक्रयो भाटकम्, आपणस्यावक्रय आपणिकः । शकटस्यावक्रयः शाकटिकः ।

**तदस्य पण्यम् । ६ । ४ । ५४ ।**

तदिति प्रथमान्तादस्येति षष्ठ्यर्थे इकण् भवति । तच्चेत् प्रथमान्तं पण्यं भवेत् । अपूपाः पण्यं विक्रेयमस्य आपूपिकः ।

**शिल्पम् । ६ । ४ । ५७ ।**

प्रथमान्तात् षष्ठ्यर्थे इकण् भवति । तच्चेत् प्रथमान्तं शिल्पं भवेत् । नृत्तं शिल्पमस्य स नार्तिकः । अध्यापनं शिल्पमस्य स आध्यापनिकः ।

**शीलम् । ६ । ४ । ५९ ।**

प्रथमान्ताच्छीलार्थात् षष्ठ्यर्थे इकण् भवति । पठनं शीलमस्य पाठनिकः । ईर्ष्या शीलमस्य स ऐर्ष्यिको ब्राह्मणः । क्षमा शीलमस्य स क्षामिको जैनमुनिः ।

**प्रहरणम् । ६ । ४ । ६२ ।**

प्रथमान्तात् षष्ठ्यर्थे इकण भवति । तच्चेत् प्रहरणं प्रथमान्तं भवेत् । असिः प्रहरणमस्यासौ आसिकः, चाक्रिकः, मौष्टिकः, धानुष्कः । 'शक्तियष्टिभ्या तु टीकण् वाच्यः' शक्तिः प्रहरणमस्यासौ शाक्तीकी एवं याष्टीकी । ' नास्तिकास्तिकदैष्टिकानि तदस्येत्यर्थे निपात्यानि' नास्ति स्वर्गपुण्यादि इत्येव मतिर्यस्यासौ नास्तिको जगन्मिथ्यावादी । आस्तिको जैनमुनिः, दैष्टिकः ।

**भक्ष्यं हितमस्मै । ६ । ४ । ६९ ।**

प्रथमान्तादस्मै इति चतुर्थ्यर्थे इकण् भवति । तच्चेत् प्रथमान्तं भक्ष्यं हितं भवेत् । अपूपा भक्ष्यं हितमस्मै आपूपिकः, शाष्कुलिकः, ताक्रिकः ।

**नियुक्तं दीयते । ६ । ४ । ७० ।**

प्रथमान्तादस्मै इति चतुर्थ्यर्थे इकण् भवति । तच्चेत् प्रथमान्तं नियुक्तं दीयते । अग्रभोजनं नित्यं दीयतेऽस्मै स आग्रभोजनिकः ।

**तत्र नियुक्ते । ६ । ४ । ७४ ।**

सप्तम्यन्ताद् नियुक्ते इकण् भवति । शुल्कशालायां नियुक्तः शौल्कशालिकः । साधारणद्रव्यरक्षायां नियुक्तः साधारणद्रव्यरक्षिकः देवद्रव्यरक्षाया नियुक्तो दैवद्रव्यरक्षिकः, रक्षा नाम योग्यस्थाने स्थापनम् ।

**विकट्यादिषु वसति । ६ । ४ । ७७ ।**

सप्तम्यन्तेभ्य एभ्यो वसत्यर्थे इकण् भवति । अरण्ये वसति

आरण्यिकः । उपाश्रये वसति औपाश्रयिकः । वृक्षमूले वसति वार्क्षमूलिकः । 'सतीर्थ्य इति तु निपातनात्' समाने तीर्थे—गुरौ वसति सतीर्थ्यः ।

चन्द्रायणं च चरति । ६ । ४ । ८२ ।

अतो गोदानादिभ्यश्च द्वितीयान्तेभ्यश्चरत्यर्थे इकण् भवति । चन्द्रायणं चरति चान्द्रायणिकः । गोदानं चरति गौदानिकः । आदित्यव्रतिकः ।

क्रोशयोजनपूर्वाच्छताद् योजनाच्चा-
भिगमार्हे । ६ । ४ । ८६ ।

क्रोशशत—योजनशताभ्यां योजनाच्च पञ्चम्यन्तादभिगमार्हेऽर्थे इकण् भवति । क्रोशशतादभिगमनमर्हति क्रौशशतिकः, योजनशतादभिगमनमर्हति यौजनशतिको जैनभिक्षुः, योजनादभिगमनमर्हति यौजनिकः ।

संशयं प्राप्ते ज्ञेये । ६ । ४ । ९३ ।

संशयमिति द्वितीयान्तात् प्राप्तेऽर्थे इकण् भवति, प्राप्तं चेद् ज्ञेयं भवेत् । संशयं प्राप्तः सांशयिको दिगम्बरशिवभूतेरर्थः ।

तस्मै योगादेः शक्ते । ६ । ४ । ९४ ।

योगादिभ्यश्चतुर्थ्यन्तेभ्यः शक्तेऽर्थे इकण् भवति । योगाय शक्तो यौगिको जयन्तविजयो मुनिः, सन्तापाय शक्तः सान्तापिको ज्वरः ।

**यज्ञानां दक्षिणायाम् । ६ । ४ । ९६ ।**

यज्ञवाचिभ्यः षष्ठ्यन्तेभ्यो दक्षिणायामर्थे इकण् भवति अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी । वाजपेयिकी ।

**काले कार्ये च भववत् । ६ । ४ । ९८ ।**

कालवाचिनः सप्तम्यन्ताद् देये कार्ये चार्थे भववत् प्रत्यया भवन्ति । वर्षासु भवमित्यत्र यथा ' वर्षाकालेभ्य ' इतीकण् , एवं वर्षासु देयं वा कार्यं तत्रार्थेऽपि वार्षिकं देय कार्यं वा ।

**तेन हस्ताद् यः । ६ । ४ । १०१ ।**

तृतीयान्ताद् हस्तशब्दाद् देये कार्ये चार्थे यो भवति हस्तेन देयं कार्यं वा हास्त्यम् ।

**शोभमाने । ६ । ४ । १०२ ।**

तृतीयान्ताच्छोभमाने इकण् भवति। शीलेन शोभते शैलिकी राजीमती । कर्णवेष्टकाभ्यां शोभते कार्णवेष्टकिकम् । वाखयुगिकं शरीरम् ।

**कालात् परिजय्यलभ्यकार्यसुकरे । ६ । ४ । १०४ ।**

तृतीयान्तात् कालविशेषवाचिनः परिजय्ये लभ्ये कार्ये सुकरे चार्थे इकण् भवति। मासेन परिजय्यो रोगो मासिकः। मासेन लभ्यं वेतनं मासिकं वेतनम्। मासेन कार्यः प्रासादो मासिकः । मासेन सुकरं मासिकं व्रतम् । संवत्सरेण कार्यो ग्रन्थः सांवत्सरिको ग्रन्थः ।

**निर्वृत्ते । ६ । ४ । १०५ ।**

तृतीयान्ताद् निर्वृत्तेऽर्थे इकण् भवति । अह्ना निर्वृत्तमाह्निकम् । मासिकम् ।

**तं भाविभूते । ६ । ४ । १०६ ।**

द्वितीयान्तात् कालार्थाद् भाविनि भूते चार्थे इकण् भवति । मासं भावी मासिक उत्सवः, मासं भूतो मासिको व्याधि. ।

**तस्मै भृताधीष्टे च । ६ । ४ । १०७ ।**

चतुर्थ्यन्तात् कालवाचिनो भृतेऽधीष्टे चार्थे इकण भवति । मासाय भृतो मासिकः, मासायाधीष्टो मासिकोऽध्यापकः । वेतनेन क्रीतो भृत उच्यते, सत्कारपूर्वं व्यापारितस्त्वधीष्ट· कथ्यते ।

**सोऽस्य ब्रह्मचर्यतद्वतोः । ६ । ४ । ११६ ।**

प्रथमान्तात् कालविशेषवाचिनोऽस्येति षष्ठ्यर्थे इकण् भवति ब्रह्मचर्ये ब्रह्मचारिणि चार्थे । मासोऽस्य ब्रह्मचर्यस्य तद् मासिकं ब्रह्मचर्यम्, एवं वार्षिकम्, मासोऽस्य ब्रह्मचारिणो मासिको ब्रह्मचारी । वार्षिको ब्रह्मचारी ।

**प्रयोजनम् । ६ । ४ । ११७ ।**

प्रथमान्तादस्येति षष्ठ्यर्थे इकण् भवति । प्रथमान्तं प्रयोजनं चेत् । जिनमहः प्रयोजनमस्य तद् जैनमहिकं देवागमनम्, जिनशासनोद्धारः प्रयोजनमस्याः सा जैनशासनोद्धारिकी इदानीन्तनी देवद्रव्यचर्चा विजयधर्मसूरीणाम् ।

**समयात् प्राप्तः । ६ । ४ । १२४ ।**

प्रथमान्तात् समयादस्येति षष्ठ्यर्थे इकण् भवति। प्रथमान्तं चेत् प्राप्तं भवति। समयः प्राप्तोऽस्यासौ सामयिको विवादः।

**त्रिंशद्विंशतेर्डकोऽसंज्ञायामार्हदर्थे । ६ । ४ । १२९ ।**

त्रिंशद्विंशतिशब्दाभ्यामाअर्हदर्थाद् योऽर्थो वक्ष्यते तत्र डकप्रत्ययो भवति, असञ्ज्ञाविषये। त्रिंशता क्रीतं त्रिंशकम्। विंशत्या क्रीतं विंशति+डक इति स्थिते—

**विंशतेस्तेर्डिति । ७ । ४ । ६७ ।**

अपदस्यास्य तेर्डिति परे तद्धिते लुग् भवति। विंशकम्।

**सङ्ख्याडतेश्चाशत्तिष्टेः कः । ६ । ४ । १३० ।**

शदन्त-त्यन्त-ष्टयन्तवर्जितायाः सङ्ख्याया डत्यन्तात् त्रिंशद्विंशतिभ्या चार्हदर्थे को भवति। द्वाभ्या क्रीतं द्विकम्, बहुभ्यां क्रीतं बहुकम्, एवं यावत्कम्, कतिकम्, त्रिंशत्कम्, विंशतिकम्। अशत्तिष्टेरिति किम्—चात्वारिंशत्कम्, साप्ततिकम्, षाष्टिकम्। 'वातोरिकः' यावतिकमपि। 'शतशब्दाद् येकौ वाच्यौ' शतेन क्रीतः शत्यः, शतिकः। 'सूर्पात् तु वाऽञ् वक्तव्यः' सूर्पेण क्रीतं सौर्पं सौर्पिकम्।

**अनाम्न्यद्विः प्लुप् । ६ । ४ । १४१ ।**

द्विगोरार्हदर्थे जातस्य प्रत्ययस्य लुब् भवति स च पित्, अनाम्नि न तु द्विः। द्वाभ्यां कंसाभ्यां क्रीतं द्विकंसम्। अनाम्नीति किम्—पञ्चभिः लोहितैः क्रीतं पाञ्चलोहितिकम्। अद्वि-

रिति किम्—द्वाभ्यां सूर्पाभ्यां क्रीतं द्विसूर्पमत्राञ इकणो वा लुब् जातः, पुनश्च द्विसूर्पेण क्रीतं द्विसौर्पिकमत्र न लुब्।

**मूल्यैः क्रीते । ६ । ४ । १५० ।**

मूल्यार्थात् तृतीयान्तात् क्रीतेऽर्थे यथाविहितमिकणादयो भवन्ति । प्रस्थेन क्रीतं प्रास्थिकम्, त्रिंशता क्रीतं त्रिंशकम् ।

**तस्य वापे । ६ । ४ । १५१ ।**

षष्ठ्यन्ताद् वापेऽर्थे यथाविहितं प्रत्ययो भवति, वापः क्षेत्रम्। प्रस्थस्य वापः प्रास्थिकं क्षेत्रम्, द्रोणस्य वापः द्रोणिकम् ।

**हेतौ संयोगोत्पाते । ६ । ४ । १५३ ।**

षष्ठ्यन्ताद् हेत्वर्थे यथोक्तमिकणादयो भवन्ति । यो हेतुः स चेत् संयोग उत्पातो वा। संयोग—सम्बन्धः, उत्पातः शुभाशुभसूचको भूविकार. । शतस्य हेतु शत्य. शतिको वा राजसंयोगः। सोमग्रहणस्य हेतुरुत्पातः सौमग्रहणिको भूमिकम्पः । 'पुत्राद्येयौ' पुत्रस्य हेतुः संयोग उत्पातो वा पुत्र्य, पुत्रीय. ।

**वातपित्तश्लेष्मसन्निपाताच्छमनकोपने । ६ । ४ । १५२ ।**

एभ्यः षष्ठ्यन्तेभ्यः शमने कोपने चार्थे यथोक्तमिकण् भवति। वातस्य शमनं कोपनं वा वातिकम्, एवं पैत्तिकम्, श्लैष्मिकम्, सान्निपातिकम् ।

**लोकसर्वलोकात् ज्ञाते । ६ । ४ । १५७ ।**

षष्ठ्यन्ताभ्यां ज्ञातेऽर्थे यथोक्तं प्रत्ययो भवति । लौकिकः, सर्वलोकस्य ज्ञातः सार्वलौकिकः ।

द्रोणाद् वाऽञ् । ६ । ४ । १६१ ।

द्रोणशब्दात् पचत्यर्थेऽञ् वा भवति । द्रोणं द्रौणिकी ।

सम्भवदवहरतोश्च । ६ । ४ । १६२ ।

द्वितीयान्ताद् नाम्नः सम्भवति अवहरति पचत्यर्थे चेकणादयो भवन्ति । आधेयस्य प्रमाणानतिरेकेण धारणं सम्भवः, अतिरेकेण धारणमवहरः । प्रस्थं सम्भवति अवहरति पचति वा प्रास्थिकः कटारः । खारीकः । कौडविक. ।

वंशादेर्भाराद् हरद्वहदावहत्सु । ६ । ४ । १६६ ।

वंशादिपराद् भारशब्दाद् हरति वहति आवहति चार्थे यथाविहितं प्रत्यया भवन्ति । वंशभारं हरति वहति आवहति वांशभारिकः, एवं कौटभारिकः ।

मानम् । ६ । ४ । १६९ ।

प्रथमान्तात् षष्ठ्यर्थे यथाविहितं प्रत्यया भवन्ति । प्रथमान्तं चेद् मानं भवेत् । प्रस्थः मानमस्य प्रास्थिको राशिः, एवं द्रौणिकः, खारीकः ।

तमर्हति । ६ । ४ । १७७ ।

द्वितीयान्तादर्हत्यर्थे पूर्वोक्ताः प्रत्यया भवन्ति। श्वेतपटमर्हति श्वैतपटिकः। सहस्रमर्हति साहस्रः। शिक्षामर्हति शैक्षिकः।

इकणधिकारः समाप्तः।

---

यः। ७। १। १।

इत ऊर्ध्वं यदनुक्रमिष्यामस्तत्र ईयप्रत्ययादर्वाग् योऽधिकारो वेदितव्यः।

वहति रथयुगप्रासङ्गात्। ७। १। २।

एभ्यो द्वितीयान्तेभ्यो वहत्यर्थे यो भवति। रथं वहति रथ्यः। युगं वहति युग्य.। प्रासङ्गं वहति प्रासङ्ग्यः। 'धुरो येयण्' धुरं वहति धुर्यः, धौरेयः।

हलसीरादिकण्। ७। १। ६।

आभ्यां वहत्यर्थे इकण् भवति। हलं वहति हालिकः, एवं सैरिकः। 'शाकटशब्दादण् वाच्यः' शकटं वहति शाकटो गौः।

विध्यत्यनन्येन। ७। १। ८।

द्वितीयान्ताद् विध्यत्यर्थे यो भवति, न चेदात्मनोऽन्येन करणेन विध्येत्। पादौ विध्यति पद्यः कण्टकः। अनन्येनेति किम्-चौरं विध्यति चैत्रः।

धनगणाल्लब्धरि। ७। १। ९।

द्वितीयान्ताभ्यामाभ्यां लब्धर्यर्थे यो भवति । धनं लब्धा धन्यः, एवं गण्यः ।

**न्यायार्थादनपेते । ७ । १ । १३ ।**

पञ्चम्यन्ताभ्यामाभ्यामनपेतेऽर्थे यो भवति । न्यायादनपेतं न्याय्यम्, एवमर्थ्यम् । 'मतमदाभ्यां षष्ठ्यन्ताभ्यां करणे यो वाच्यः' मतस्य मदस्य वा करणं मत्यं मद्यम् ।

**तत्र साधौ । ७ । १ । १५ ।**

सप्तम्यन्तात् साधावर्थे यो भवति । सभायां साधुः सभ्यः ।

**ईयः । ७ । १ । २८ ।**

आ तदो वक्ष्यमाणेष्वर्थेषु ईयोऽधिकृतो वेदितव्यः ।

**उवर्णयुगादेर्यः । ७ । १ । ३० ।**

उवर्णान्ताद् युगादेश्चातदोऽर्थेषु यो भवति । शङ्कवे हितं शङ्कव्यम् । युगाय हितं युग्यम्, हविषे हितं हविष्यम् ।

**तस्मै हिते । ७ । १ । ३५ ।**

चतुर्थ्यन्ताद् हितेऽर्थे यथाधिकृतं प्रत्ययो भवति । वत्साय हितं वत्सीयम्, युगाय हितं युग्यम् । 'पाद्यार्घ्यौ तु तदर्थे यान्तौ निपात्यौ' पादार्थं पाद्यमुदकम्, अर्घार्थमर्घ्यं रत्नम् ।

**अव्यजात् थ्यप् । ७ । १ । ३८ ।**

आभ्यां तस्मै हितेऽर्थे थ्यब् भवति । अवये हितमविथ्यम् । अजायै हितमजथ्यम् ।

## पञ्चसर्वविश्वाज्जनात् कर्मधारये । ७ । १ । ४१ ।

पञ्चादिपराज्जनात् कर्मधारयवृत्तेस्तस्मै हितेऽर्थे ईनो भवति । सर्वे च ते जनाश्च सर्वजनाः, तेभ्यो हितं सर्वजनीनम् । एवं पञ्चजनीनम् । विश्वजनीनम् । 'महत्सर्वादिकण्' महांश्चासौ जनश्च महाजनः, तस्मै हितं माहाजनिकम्, एवं सार्वजनिकम् । 'सर्वशब्दात् तस्मै हितेऽर्थे णो वा वाच्यः' सर्वस्मै हितः सार्वः, सर्वीयो वा ।

## परिणामिनि तदर्थे । ७ । १ । ४४ ।

चतुर्थ्यन्ताच्चतुर्थ्यर्थे परिणामिनि यथाविहितं प्रत्ययो भवति । अङ्गाराय परिणमति आङ्गारीयं काष्ठम् । शङ्कव्यं दारु ।

## परिखाऽस्य स्यात् । ७ । १ । ४८ ।

स्यन्तादतः षष्ठ्यर्थे परिणामिनि एयण् भवति । परिखा आसां स्यात् पारिखेय्य इष्टकाः ।

## अत्र च । ७ । १ । ४९ ।

परिखायाः स्यादिति सम्भाव्यायाः प्रथमान्ताया अत्रेति सप्तम्यर्थे एयण् भवति । परिखा अस्यां स्यात् पारिखेयी भूः ।

## तद् । ७ । १ । ५० ।

स्यादिति सम्भाव्यात् प्रथमान्तात् षष्ठ्यर्थे परिणामिनि सप्तम्यर्थे च यथाविहितं प्रत्यया भवन्ति । प्राकार आसां स्यात्

प्राकारीया इष्टकाः, परशुरस्य स्यात् परशव्यमयः, प्रासादोऽस्मिन् स्यात् प्रासादीयो देशः ।

ईयाधिकारः समाप्तः ।

---

तस्यार्हे क्रियायां वत् । ७ । १ । ५१ ।

तस्येति षष्ठ्यन्तादर्हेऽर्थे वत् भवति, अर्हं चेत् क्रिया भवेत् । राज्ञोऽर्हं राजवद् वृत्तम्, साधोरर्हं साधुवत् ।

स्यादेरिवे । ७ । १ । ५२ ।

स्याद्यन्तादिवार्थे सादृश्ये वत् भवति । तच्चेत् सादृश्यं क्रियाविषयं भवति । श्वान इव युध्यन्ते श्ववद् युध्यन्ते, देवमिव देववत् पश्यति मुनिम् ।

तत्र । ७ । १ । ५३ ।

सप्तम्यन्तादिवार्थे वद् भवति । वाराणस्यामिव वाराणसीवत् प्रयागे प्रासादः ।

तस्य । ७ । १ । ५४ ।

तस्येति षष्ठ्यन्तादिवार्थे वद् भवति । रत्नलालस्येव रत्नलालवत् मंगुलालस्य स्वभावः ।

भावे त्वतल् । ७ । १ । ५५ ।

षष्ठ्यन्ताद् भावेऽर्थे त्वतलौ भवतः । शब्दस्यार्थे प्रवृत्तिहेतुर्गुणो भावः । स च जातिगुणक्रियाद्रव्यस्वरूपादिरूपः । गोत्वम्, शुक्लत्वम्, कारकत्वम्, दण्डित्वम्, खत्वम् । गोता, शुक्लता, कारकता, दण्डिता, खता ।

**पृथ्वादेरिमन् वा। ७। १। ५८।**

पृथु इत्येवमादिभ्यः षष्ठयन्तेभ्यो भावेऽर्थे इमन् वा भवति। पृथोर्भावः पृथु+इमन् इति स्थिते—

**पृथुमृदुभृशकृशदृढपरिवृढस्य ऋतो रः। ७। ४। ३९।**

एषामृकारस्येम्नि ण्यादौ च परे रो भवति। प्रथु+इमन् इति स्थिते—

**त्र्यन्तस्वरादेः। ७। ४। ४३।**

तृप्रत्ययस्यान्त्यस्वरादेश्चांशस्येम्नि णौ इष्ठे ईयसौ च परे लुग् भवति। उकारलोपे प्रथिमा, पृथुत्वम्, पृथुता, पार्थवम्। एवं म्रदिमा, मृदुत्वम्, मृदुता, मार्दवम्। बहुलस्य भावः बहुल+इमन् इति स्थिते—

**प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घवृद्धवृन्दारकस्येमनि च प्रास्थास्फावरगरवंहत्रपद्राघवर्षवृन्दम्। ७। ४। ३८।**

प्रियादीनां यथासम्भवमिमनि ण्यादौ च यथासंख्यं प्राइत्याद्यादेशा भवन्ति। वंहिमा। एवं प्रियस्य भावः प्रेमा, स्थिरस्य भावः स्थेमा, वरिमा, गरिमा, त्रपिमा, द्राघिमा, वर्षिमा, वृन्दिमा। बहोर्भावः बहु+इमन् इति स्थिते—

**भूर्लुक्चेवर्णस्य। ७। ४। ४१।**

होरीयसौ इमनि च परे भूरादेशो भवति। अनयोरिवर्णस्य

लुक् च । भूमा । पक्षे सर्वत्र त्वतलौ । 'वर्णदृढादिभ्यष्ट्यण् वा' शुक्लस्य भावः शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता । शितेर्भावः शैत्यम्, शितिमा, शितित्वम्, शितिता, शैतम् । दृढस्य भावः दार्ढ्यम्, द्रढिमा, दृढत्वम्, दृढता ।

**पतिराजान्तगुणाङ्गराजादिभ्यः कर्मणि च । ७ । १ । ६० ।**

पत्यन्ताद् राजान्ताद् गुणोऽङ्गं प्रवृत्तौ हेतुर्येषां तेभ्यो राजादेश्च भावे क्रियायां च ट्यण् भवति । अधिपतेर्भावः कर्म वा आधिपत्यम्, अधिपतित्वम्, अधिपतिता । एवमाधिराज्यम्, अधिराजत्वम्, अधिराजता । मौढ्यम्, मूढत्वम्, मूढता । राज्यम्, राजत्वम्, राजता । काव्यम्, कवित्वम्, कविता ।

**अर्हतस्तो न्त् च । ७ । १ । ६१ ।**

अतस्तस्य भावे कर्मणि च ट्यण भवति । तद्योगे तस्य न्तादेशः । अर्हतो भाव आर्हन्त्यम्, अर्हत्त्वम्, अर्हत्ता । 'सहायशब्दात्तु वा ट्यण् बोध्यः' साहाय्यम्, साहायकम्, सहायत्वम्, सहायता ।

**युवादेरण् । ७ । १ । ६७ ।**

एभ्यो भावे कर्मणि चाण् भवति । यूनो भावः यौवनम्, युवत्वम्, युवता ।

**ऋवर्णाल्लघ्वादेः । ७ । १ । ६९ ।**

समीपे येषाम् इउऋवर्णानां तदन्तेभ्यस्तस्य भावे कर्मणि

14

चाण् भवति । शुचेर्भावः कर्म वा शौचम्, शुचित्वम्, शुचिता । पटोर्भावः कर्म वा पाटवम्, पटुत्वम्, पटुता । बन्धोर्भावो वा कर्म बान्धवम्, बन्धुत्वम्, बन्धुता । पितुर्भावः कर्म वा पैत्रम्, पितृत्वम्, पितृता ।

**योपान्त्याद् गुरूपोत्तमादसुप्रख्यादकञ् । ७ । १ । ७२ ।**

त्र्यादीनामन्त्यमुत्तमम्, तत्समीपमुपोत्तमम्, तद् गुरु यस्य तस्माद् युपान्त्यात् सुप्रख्यवर्जात् तस्य भावे कर्मणि चाकञ् भवति । रमणीयस्य भावः कर्म वा रामणीयकम्, रमणीयत्वम्, रमणीयता । एवम् आचार्यकम्, आचार्यत्वम्, आचार्यता ।

**शाकटशाकिनौ क्षेत्रे । ७ । १ । ७८ ।**

षष्ठ्यन्तात् क्षेत्रेऽर्थे एतौ भवतः । इक्षूणा क्षेत्रम् इक्षुशाकटम्, इक्षुशाकिनम्, शाकस्य क्षेत्रं शाकशाकटम्, शाकशाकिनम् । 'धान्यवाचिभ्यः षष्ठ्यन्तेभ्यस्तु क्षेत्रे ईनञ् वाच्यः' मुद्गानां क्षेत्रं मौद्गीनम्, एवं कौलत्थीनम्, कौद्रवीणम् । 'व्रीहिशालिभ्यामेयण्' व्रीहीणा क्षेत्रं व्रैहेयम्, शालीना क्षेत्रं शालेयम् ।

**यवयवकषष्टिकाद् यः । ७ । १ । ८१ ।**

एभ्यस्तस्य क्षेत्रेऽर्थे यो भवति । यवानां क्षेत्रं यव्यम्, एवं यवक्यम्, षष्टिक्यम् । 'वाऽणुमाषात्' अणूनां क्षेत्रमाणवीनम्, अणव्यम्, माषाणां क्षेत्रं माष्यम्, माषीणम्, यो वा भवनात् पक्षे ईनञ् ।

अलाब्वाश्च कटो रजसि । ७ । १ । ८४ ।

अलाबूशब्दात् चकारादुमाभङ्गातिलेभ्यश्च तस्य रजस्यर्थे कटो भवति । अलाबूना रजः अलाबूकटम्, एवमुमाकटम्, भङ्गाकटम्, तिलकटम ।

पील्वादेः कुणः पाके । ७ । १ । ८७ ।

षष्ठयन्तेभ्यः पील्वादिभ्य पाकेऽर्थे कुणो भवति । पीलूनां पाकः पीलुकुणः, एवं शमीकुणः, कर्कन्धूकुणः ।

कर्णादेर्मूले जाहः । ७ । १ । ८८ ।

षष्ठयन्तेभ्यः कर्णादिभ्यस्तस्य मूलेऽर्थे जाहःप्रत्ययो भवति । कर्णयोर्मूलं कर्णजाहम्, एवमक्षिजाहम् । 'कुलशब्दाज्जल्पेऽर्थे ईनञ् वाच्यः' कुलस्य जल्पः कौलीनः । 'पक्षशब्दात् मूलेऽर्थे तिर्वाच्यः' पक्षस्य मूलं पक्षतिः ।

हिमादेलुः सहे । ७ । १ । ९० ।

अतस्तस्य सहेऽर्थे एलुर्भवति । हिमं सहमानो हिमेलु ।

शीतोष्णतृषादालुरसहे । ७ । १ । ९२ ।

एभ्यस्तस्यासहमानेऽर्थे आलुर्भवति । शीतस्यासहः शीतालुः, एवमुष्णालुः, तृषालुः ।

वेर्विस्तृते शालशङ्कटौ । ७ । १ । १२३ ।

अतो विस्तृतेऽर्थे शालशङ्कटौ भवतः । विस्तृतः विशालः, विशङ्कटः । कटोऽपि विकटः ।

**संप्रोन्नेः संकीर्णप्रकाशाधिकसमीपे । ७ । १ । १२५ ।**

समः संकीर्णेऽर्थे, प्रात् प्रकाशेऽर्थे, उतोऽधिके, नेः समीपे च कटो भवति । संकटः संकीर्णः, प्रकटः प्रकाश, उत्कटोऽधिकः, निकटः समीप इत्यर्थः ।

**अवात् कुटारश्चावनते । ७ । १ । १२६ ।**

अवशब्दादवनतेऽर्थे कुटारकटौ भवतः। अवनत इति अवकुटारः, अवकटः ।

**नासानतितद्वतोष्टीटनाटभ्रटम् । ७ । १ । १२७ ।**

अवाद् नासानतौ तद्वति चार्थे टीटनाटभ्रटा भवन्ति । नासाया नमनम्—अवटीटम्, अवनाटम्, अवभ्रटम्, तद्योगाद नासिका, पुरुषोऽपि तथोच्यते—अवटीटा, अवनाटा, अवभ्रटा नासिका । अवटीटः, अवनाटः, अवभ्रटः पुरुषः ।

**नेरिनपिटकाश्चिक्चिचिकश्चास्य । ७ । १ । १२८ ।**

निशब्दाद् नासानतौ तद्वति चार्थे इन पिट क इत्येते प्रत्यया भवन्ति । तद्योगे च नेर्यथासंख्यं चिक चि चिक इत्येते आदेशा भवन्ति । चिकिनम्, चिपिटम्, चिक्कं नासानमनम् । चिकिना चिपिटा, चिक्का नासिका । चिकिनः, चिपिटः, चिक्कः पुरुषः । 'निशब्दाद् नीरन्ध्रेऽर्थे नासानतितद्वतोश्चार्थे बिडबिरीसौ प्रत्ययौ वाच्यौ' निबिडाः, निबिरीसाः केशाः । निबिडम्, निबिरीसम् नासिकानमनम्, निबिडा निबिरीसा नासिका, निबिडः निबिरीसो नरः अवनतनासिकावानित्यर्थः ।

**क्लिन्नाल्लश्चक्षुषि चिल्पिल्चुल् चास्य । ७ । १ । १३० ।**

क्लिन्नशब्दाच्चक्षुष्यर्थे लो भवति । तत्सन्नियोगे च क्लिन्नशब्दस्य चिल् पिल् चुल् इत्येते आदेशा भवन्ति । चिल्लम्, पिल्लम्, चुल्लं चक्षुः ।

**अवेः संघातविस्तारे कटपटम् । ७ । १ । १३२ ।**

अतः षष्ठ्यन्तात् संघाते विस्तारे चार्थे यथासंख्यं कटपटौ भवतः । अवीनां संघातोऽविकटः । अवीनां विस्तारोऽविपटः । 'उपत्यकाधित्यके निपात्यौ' उपत्यका पर्वतासन्ना भूः, अधित्यका पर्वताधिरूढा भूः ।

**पशुभ्यः स्थाने गोष्ठः । ७ । १ । १३३ ।**

पशुवाचिभ्यः षष्ठ्यन्तेभ्यः स्थानेऽर्थे गोष्ठो भवति । अश्वानां स्थानमश्वगोष्ठम् । महिषीगोष्ठम् ।

**तिलादिभ्यः स्नेहे तैलः । ७ । १ । १३६ ।**

षष्ठ्यन्तेभ्यस्तिलादिभ्यः स्नेहेऽर्थे तैलो भवति । तिलानां स्नेहः तिलतैलम्, सर्षपतैलम्, एरण्डतैलम् । 'कर्मणि घटते इत्यर्थे कर्मठः' ।

**तदस्य संजातं तारकादिभ्य इतः । ७ । १ । १३८ ।**

प्रथमान्तेभ्यस्तारकादिभ्यः षष्ठ्यर्थे इतः प्रत्ययो भवति । तारका संजाता अस्येति तारकितं नभः । पुष्पाणि संजातान्यस्य पुष्पितस्तरुः ।

**प्रमाणान् मात्रट् । ७ । १ । १४० ।**

प्रथमान्तात् प्रमाणवाचिनः षष्ठ्यर्थे मात्रड् भवति । जानुनी प्रमाणमायामोऽस्य जानुमात्रमुदकम् । एवं रज्जुमात्री, तन्मात्री भूमिः । 'हस्तिपुरुषाभ्यामणपि वाच्यः' हस्ती प्रमाणमस्य हस्तिमात्रम्, हास्तिनम्, हस्तिदघ्नम्, हस्तिद्वयसम् । पुरुषमात्रम्, पौरुषम्, पुरुषदघ्नम्, पुरुषद्वयसम् ।

**वोर्ध्वे दघ्नट्द्वयसट् । ७ । १ । १४२ ।**

ऊर्ध्वं यत् प्रमाणं तदर्थात् प्रथमान्ताद् षष्ठ्यर्थे दघ्नट्द्वयसटौ वा भवतः, पक्षे मात्रट् । ऊरुः प्रमाणमस्य ऊरुदघ्नम्, ऊरुद्वयसम्, ऊरुमात्रं जलम् । ऊर्ध्वमिति किम्—रज्जुः प्रमाणमस्या रज्जुमात्री भूमिः ।

**मानादसंशये लुप् । ७ । १ । १४३ ।**

यः प्रसिद्धो मानवाची शब्दो हस्तवितस्त्यादिर्न तु रज्ज्वादिः, स लक्षणया प्रमाणे वर्तते; तस्मात् परस्य मात्रडादेः प्रत्ययस्यासंशये गम्ये लुब् भवति । हस्तः प्रमाणमस्य हस्तः, एवं वितस्तिः । मानादिति किम्—ऊरुमात्रम् । असंशय इति किम्—हस्तमात्रं स्यात् । 'मानार्थान्ताद् द्विगोस्तु संशयेऽसंशये च लुब् वाच्यः' द्विप्रस्थः, द्विप्रस्थः स्यात् ।

**मात्रट् । ७ । १ । १४५ ।**

प्रथमान्ताद् मानवाचिनः षष्ठ्यर्थे मात्र भवति संशयेऽर्थे। प्रस्थमात्रं स्यात्।

**इदंकिमोऽतुरियकिय् चास्य । ७ । १ । १४८ ।**

मानार्थे वर्तमानाभ्यामाभ्या षष्ठ्यर्थे मेयेऽतुर्भवति। तद्योगे चानयोर्यथासख्यमियकियौ। इदं मानमस्य इयान्, कि मानमस्य कियान् पट.।

**यत्तदेतदो डावादिः । ७ । १ । १४९ ।**

मानवृत्तिभ्यः प्रथमान्तेभ्य एभ्यः षष्ठ्यर्थेऽतुप्रत्ययो भवति, स च डावादिः। यत् तद् एतत् प्रमाणमस्य स यावान्, तावान्, एतावान्।

**यत्तत्किमः संख्याया डतिर्वा । ७ । १ । १५० ।**

संख्यारूपमानार्थवृत्तिभ्यः प्रथमान्तेभ्यो यत् तत् किम् इत्येतेभ्यः षष्ठ्यर्थे डतिर्वा भवति। या सा का संख्या मानमेषां यति तति कति, पक्षे यावन्तः तावन्तः कियन्तः।

**अवयवात् तयट्। ७ । १ । १५१ ।**

अवयववाचिनः सख्यार्थात् स्यन्तात् षष्ठ्यर्थे तयट् भवति। चत्वारोऽवयवा अस्याः सा चतुष्टयी, एवं पञ्चतयी। 'द्वित्रिभ्यामयड् वा' द्वाववयवावस्य तद् द्वयं, द्वितयम्। त्रयोऽवयवा अस्य त्रयं, त्रितयम्।

**संख्यापूरणे डट्। ७ । १ । १५५ ।**

संख्यावाचिनः संख्या पूर्यते येनेत्यर्थे डट् प्रत्ययो भवति । एकादशाना पूरणः एकादशः, एवं द्वादशः । द्वादशी, त्रयोदशी, चतुर्दशी ।

विंशत्यादेर्वा तमट् । ७ । १ । १५६ ।

संख्यावाचिनो विंशत्यादेः संख्यापूरणे तमड् भवति वा । विंशतेः पूरणः विंशः, विंशतितमः । त्रिंशत्तमः, त्रिंश । एकविंशतितमः, एकविंशः ।

षष्ट्यादेरसङ्ख्यादेः । ७ । १ । १५८ ।

नास्ति संख्यावाची आदिरवयवो यस्य तस्मात् षष्ट्यादेः संख्यापूरणे तमड् भवति । षष्टेः पूरणः षष्टितमः । सप्ततेः पूरणः सप्ततितमः । असख्यादेरिति किम्—एकषष्टः ।

नो मट् । ७ । १ । १५९ ।

असंख्यादेर्नान्तसंख्याया. संख्यापूरणे मड् भवति । पञ्चानां पूरकः पञ्चमः । एवं सप्तमः, अष्टमः, नवमः, दशमः । असंख्यादेरित्येव—द्वादश ।

पित् तिथट् बहुगणपूगसङ्घात् । ७ । १ । १६० ।

बहुगणपूगसंघेभ्यः पूरणेऽर्थे तिथट् प्रत्ययो भवति स च पित् । बहूनां पूरकः बहुतिथ, एवं गणतिथः, पूगतिथः, सङ्घतिथः।

अतोरिथट् । ७ । १ । १६१ ।

अत्वन्तात् संख्यापूरणे इथट् प्रत्ययो भवति, स च पित् । इयतां पूरणः इयतिथः, तावतिथी, यावतिथः ।

**षट्कतिकतिपयात् थट् । ७ । १ । १६२ ।**

एभ्यः संख्यापूरणे थट भवति । षण्णां पूरणी षष्ठी, एवं कतिथः, कतिपयथः ।

**चतुरः । ७ । १ । १६३ ।**

अतः संख्यापूरणे थट् भवति । चतुर्णां पूरकः चतुर्थः । चतुर्थी तिथिः ।

**येयौ चलुक् च । ७ । १ । १६४ ।**

चतुरः संख्यापूरणे येयो भवतः, तद्योगे चस्य लुक् । चतुर्णां पूरणः तुर्यः, तुरीयः ।

**द्वेस्तीयः । ७ । १ । १६५ ।**

द्विशब्दात् संख्यापूरणे तीयो भवति । द्वयोः पूरकः द्वितीयः ।

**त्रेस्तृ च । ७ । १ । १६६ ।**

त्रिशब्दात् पूरणेऽर्थे तीयो भवति, तद्योगे च त्रेस्तृरादेशः । त्रयाणां पूरकः तृतीयः ।

**पूर्वमनेन सादेश्चेन् । ७ । १ । १६७ ।**

पूर्वमित्यमन्तात् केवलात् सपूर्वाच्चानेनेति टार्थे कर्तरीन् भवति । कृतः पूर्वमनेनेति कृतपूर्वी कटम्, भुक्तं पूर्वमनेनेति भुक्तपूर्वी धनम् । पीतपूर्वी पयः ।

**इन्द्रियम् । ७ । १ । १७४ ।**

इन्द्रशब्दादियो निपात्यते । इन्द्रस्य लिङ्गमिन्द्रियम् ।

**तेन वित्ते चञ्चुचणौ । ७ । १ । १७५ ।**

तृतीयान्ताद् वित्तेऽर्थे चञ्चुचणौ भवतः । विद्यया वित्तः विद्याचञ्चुः, विद्याचणः ।

**पूरणाद् ग्रन्थस्य ग्राहके को लुक् चास्य । ७ । १ । १७६ ।**

पूरणप्रत्ययान्तात् तृतीयान्ताद् ग्रन्थस्य ग्राहकेऽर्थे को भवति। तद्योगे च पूरणप्रत्ययस्य लुक् । द्वितीयेन रूपेण ग्रन्थस्य ग्राहकः द्विकः शिष्यः ।

**सोऽस्य मुख्यः । ७ । १ । १९० ।**

प्रथमान्तात् षष्ठ्यर्थे को भवति । प्रथमान्तं चेद मुख्यं भवेत् । रत्नलालो मुख्योऽस्य स रत्नलालकः तीर्थप्रवासः । उन्मनस्यर्थे उत्कः, उत्सुकः । साक्षाद् द्रष्टा साक्षी ।

**तदस्यास्त्यस्मिन्निति मतुः । ७ । २ । १ ।**

तदिति प्रथमान्तादस्येति षष्ठ्यथऽस्मिन्निति सप्तम्यर्थे वा मतुः प्रत्ययो भवति । यत् प्रथमान्तं तच्चेदस्तीति । गावोऽस्य सन्तीति गोमान् जिनदत्तः, वृक्षा अस्मिन् सन्तीति वृक्षवान् पर्वतः, एवं धनवान्, प्लक्षवान् । अस्तीति वतमानकालोपादानेन

भतभविष्यतोर्न भवति । गावोऽस्याऽऽसन् भविष्यन्ति वेति वाक्य-मेव । इतिकरणाद् विषयनियमः—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायिनि ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ १ ॥

भूम्नि गोमान्, निन्दाया कुष्ठी, प्रशंसाया रूपवती कन्या, नित्ययोगे क्षीरिणो वृक्षा, अतिशायिनि उदरिणी स्त्री, संसर्गे दण्डी । भूमादिविषयनियमोऽपि प्रायिकः तेन व्याघ्रवान् पर्वत इत्यादौ सत्तामात्रेऽपि । मत्वर्थान्ताद् मत्वर्थीयप्रत्ययो न भवति तथा चाहुः—

शैषिकाच्छैषिको नेष्टः स्वरूपः प्रत्ययः क्वचित् ।
समानवृत्तौ मत्वर्थाद मत्वर्थीयोऽपि नेष्यते ॥ १ ॥

विरूपप्रत्ययस्तु भवत्येव दण्डिमती शाला । विरूपप्रत्ययोऽपि समानवृत्तौ न भवति—दण्डोऽस्त्यस्य दण्डिकः स सोऽस्ति अस्येति इन्मतू न स्याताम् । 'असञ्ज्ञाभूतात् कर्मधारयात् मत्वर्थीयो न भवति' वीराश्च ते पुरुषाश्च वीरपुरुषास्ते सन्ति यस्मिन् ग्रामे । 'गुणे गुणिनि चार्थे ये शब्दा वर्तन्ते तेभ्योऽपि मत्वर्थीयो न भवति' शुक्लो वर्णोऽस्यास्तीति प्रत्ययमन्तरेण तेषामभिधाने सामर्थ्यदर्शनाद्, गुणमात्रवृत्तिभ्यस्तु भवत्येव रूपवती सीता ।

**मावर्णान्तोपान्तापञ्चमवर्गान् मतोर्मो वः ।२।१।९४।**

मश्चावर्णश्चेति मावर्णौ तौ प्रत्येकमन्तोपान्तौ यस्य तस्मात् पञ्चमवर्जवर्गान्ताच्च नाम्नः परस्य मतोर्मो वो भवति । किमस्या-

स्तीति किंवान् । मकारोपान्त्याद्—शमीवान् । अवर्णान्तात्—वृक्ष-वान् । अवर्णोपान्त्यात्—अहर्वान् । अपञ्चमवर्गात्—मरुत्वान् ।

न स्तं मत्वर्थे । १ । १ । २३ ।

सान्तं तान्तं च मत्वर्थे परे पदं न भवति । मरुत्वान्, यशस्वी ।

नाम्नि । २ । १ । ९५ ।

सञ्ज्ञायां मतोर्मकारस्य वो भवति । अहीवती, ऋषीवती नाम नद्यौ । 'चर्मण्वत्यादयः सञ्ज्ञायां निपात्यन्ते' चर्मण्वती, अष्ठीवान्, चक्रीवान्, कक्षीवान्, रुमण्वान् । 'उदकशब्दस्य मत्वन्तस्याब्धौ वाच्ये सञ्ज्ञाया च उदन्वान् निपात्यः' उदन्वान् घटः, समुद्रः, मेघश्च । उदन्वान् ऋषिः, आश्रमश्च । 'राजन्वान् सुराज्ञि' राजन्वत्यः प्रजाः ।

नावादेरिकः । ७ । २ । ३ ।

नौरित्यादिभ्यो मत्वर्थे इको भवति । नाविकः पक्षे आ यविधेः मतोरप्यधिकाराद् नौमान् ।

शिखादिभ्य इन् । ७ । २ । ४ ।

शिखादिभ्यो मत्वर्थे इन् भवति । शिखी, शिखावान् । माली, मालावान् ।

व्रीह्यादिभ्यस्तौ । ७ । २ । ५ ।

व्रीह्यादिभ्यो मत्वर्थे इन्इकौ भवतः । व्रीहिकः, व्रीही, व्रीहिमान् ।

**अतोऽनेकस्वरात् । ७ । २ । ६ ।**

अकारान्तादनेकस्वराद् मत्वर्थे इनिकौ भवतः । दण्डिकः, दण्डी, दण्डवान् । एवं छत्री, छत्रिक, छत्रवान् ।

**व्रीह्यर्थतुन्दादेरिलश्च । ७ । २ । ९ ।**

व्रीहिवाचिभ्यस्तुन्दादिभ्यश्च मत्वर्थे इल इकेनौ च भवतः । शालिल., शालिक., शाली, शालिमान् । तुन्दिलः, तुन्दिकः, तुन्दी, तुन्दवान् । 'विवृद्धोपाधिकात् स्वाङ्गात् मत्वर्थे पूर्वोक्ताः प्रत्यया वाच्याः' महान्तौ कणा स्तोऽस्य कर्णिलः, कर्णिकः, कर्णी, कर्णवान् । एवमोष्ठिलः, ओष्ठिकः, ओष्ठी, ओष्ठवान् । 'वृन्दशब्दादारको वाच्य' वृन्दारकः, वृन्दवान् ।

**फलबर्हाच्चेनः । ७ । २ । १३ ।**

आभ्यां शृङ्गाच्च मत्वर्थे इनो भवति । फलानि सन्त्यस्य फलिनः, फलवान् । बर्हिणः, बर्हवान् । शृङ्गिणः, शृङ्गवान्, शृङ्गात्तु आरकोऽपि शृङ्गारकः ।

**मरुत्पर्वणस्तः । ७ । २ । १५ ।**

मरुत्पर्वभ्यां मत्वर्थे तः प्रत्ययो भवति । मरुत्तः, मरुत्वान् । पर्वतः, पर्ववान् ।

**वलिवटितुण्डेर्भः । ७ । २ । १६ ।**

मत्वर्थे एभ्यो भो भवति । वलिभः, वटिभः, तुण्डिभः । वलिमान्, वटिमान्, तुण्डिमान् ।

ऊर्णाऽहंशुभमो युस् । ७ । २ । १७ ।

एभ्यो मत्वर्थे युस् भवति । ऊर्णाऽस्यास्तीति ऊर्णायुः, एवमहंयुः, शुभंयुः ।

कंशंभ्यां युस्तियस्तुतवभम् । ७ । २ । १८ ।

आभ्यां मत्वर्थे युस् ति यस् तु त व भ इत्येते प्रत्यया भवन्ति । कंयुः, कंतिः, कंयः, कंतुः, कंवः, कंभः । शंयु, शंतिः, शंयः, शन्तुः, शन्तः, शंवः, शंभः ।

प्राण्यङ्गादातो लः । ७ । २ । २० ।

आकारान्तात् प्राण्यङ्गवाचिनो मत्वर्थे लो भवति । चूडाऽस्यास्तीति चूडालः, चूडावान् । शिखालः, शिखावान् ।

बलवातदन्तललाटादूलः । ७ । २ । १९ ।

एभ्यो मत्वर्थे ऊलो भवति । बलमस्यास्तीति बलूलः, बलवान्, वातूल, वातवान् । दन्तूलः, दन्तवान् । ललाटूलः, ललाटवान् ।

सिध्मादिक्षुद्रजन्तुरुग्भ्यः । ७ । २ । २१ ।

सिध्मादिगणात् क्षुद्रजन्तुवाचिभ्यो रुगर्थाच्च मत्वर्थे लो भवति । सिध्मानि सन्त्यस्य सिध्मलः, सिध्मवान् । क्षुद्रजन्तुः—यूकालः, यूकावान् । रुक्—मूर्च्छालः, मूर्च्छावान् ।

प्रज्ञापर्णोदकफेनाल्लेलौ । ७ । २ । २२ ।

एभ्यो मत्वर्थे लइलौ भवतः । प्रज्ञालः, प्रज्ञिलः, प्रज्ञावान् । पर्णलः पर्णिलः, पर्णवान् । उदकलः, उदकिलः, उदकवान् । फेनलः, फेनिलः, फेनवान् ।

वाच आलाटौ । ७ । २ । २४ ।

क्षेपे गम्ये मत्वर्थे वाक्शब्दादेतौ भवतः । वाचालः, वाचाटः ।

ग्मिन् । ७ । २ । २५ ।

वाक्शब्दाद् मत्वर्थे ग्मिन् भवति । वाग्मी, वाग्वान् ।

मध्वादिभ्यो रः । ७ । २ । २६ ।

एभ्यो मत्वर्थे रः प्रत्ययो भवति । मधुरः स्वरः । महत् खं कण्ठोऽस्त्यस्य खरः । मुखरः ।

कृष्यादिभ्यो वलच् । ७ । २ । २७ ।

एभ्यो मत्वर्थे वलच् भवति । कृषीवलः कुटुम्बी । आसुतीवलः । कल्पपालः ।

लोमपिच्छादेः शेलम् । ७ । २ । २८ ।

लोमादिभ्यः पिच्छादिभ्यश्च यथासंख्यं मत्वर्थे श इलश्च भवति । लोमानि सन्त्यस्येति लोमशः, लोमवान् । एवं गिरिशः, गिरिमान् । पिच्छिलः, पिच्छवान् । उरसिलः, उरस्वान् ।

नोऽङ्गादेः । ७ । २ । २९ ।

अङ्ग इत्यादिभ्यो मत्वर्थे नो भवति । अङ्गना । पामनः । वामनः ।

**प्रज्ञाश्रद्धार्चावृत्तेर्णः । ७ । २ । ३३ ।**

एभ्यो मत्वर्थे णो भवति । प्रज्ञाऽस्त्यस्य प्राज्ञः, प्रज्ञावान् । श्राद्धः, श्रद्धावान् । आर्चः, अर्चावान् । वार्त्तः, वृत्तिमान् । 'उन्नतोपपदिकाद् दन्ताद् उरो वाच्यः' उन्नता दन्ताः सन्त्यस्य दन्तुरः ।

**मेधारथाद् नवेरः । ७ । २ । ४१ ।**

आभ्या मत्वर्थे इरो वा भवति । मेधिरः, मेधावान्, मेधावी । रथिरः, रथिकः, रथी, रथवान् । 'कृपाहृदयाभ्यामालुर्वाच्यः' कृपालुः, कृपावान् । हृदयालुः, हृदयवान्, हृदयिकः, हृदयी । 'केशाद् मत्वर्थे वो वा वाच्यः' केशाः सन्त्यस्य केशवः, केशी, केशवान्, केशिकः ।

**अस्तपोमायामेधास्रजो विन् । ७ । २ । ४७ ।**

असन्तेभ्यः तपसादेश्च मत्वर्थे विन् भवति । तेजस्वी, यशस्वी, तपस्वी, मायावी, मेधावी, स्रग्वी, तेजस्वान् इत्यादि ।

**आमयाद् दीर्घश्च । ७ । २ । ४८ ।**

अतो मत्वर्थे विन् भवति । [illegible] आमयवान् ।

ईशोऽर्थे मत्वर्थेऽतो मिन् भवति, प्रकृतेश्च दीर्घः। स्वमस्त्यस्येति स्वामी, अन्यस्तु स्ववान्। 'गोः' गोमी, गोमान्।

**गुणादिभ्यो यः। ७। २। ५३।**

गुणादिशब्देभ्यो मत्वर्थे यो भवति। गुणाः सन्त्यस्य गुण्यः, गुणवान्। हिम्य, हिमवान् पर्वतः। इनः पक्षे मतुर्न भवति। 'पूर्णमासोऽण्' पूर्णमासोऽस्यामस्तीति पौर्णमासी। नात्र पक्षे मतुः। 'मालाशब्दात् क्षेपे इन् वाच्यः' माली, क्षेपाभावे मालावान्।

**वर्णाद् ब्रह्मचारिणि। ७। २। ६९।**

वर्णशब्दाद् मत्वर्थे इन् भवति, ब्रह्मचारिणि अभिधेये। वर्णो ब्रह्मचर्यमस्यास्तीति वर्णी ब्रह्मचारी।

**इति मत्वर्थाधिकारः।**

---

**प्रकारे जातीयर्। ७। २। ७५।**

प्रथमान्तात् षष्ठ्यर्थे जातीयर् भवति, यत् प्रथमान्तं तच्चेत् प्रकारो भवेत्। पटुः प्रकारोऽस्य पटुजातीयः। एवं मृदुजातीयः। नानाजातीयः।

**कोऽण्वादेः। ७। २। ७६।**

एभ्यः प्रथमान्तेभ्यः षष्ठ्यर्थे को भवति, प्रथमान्तं चेत् प्रकारः। अणु प्रकारोऽस्य अणुकः, स्थूलकः।

**भूतपूर्वे प्चरट्। ७। २। ७८।**

भूतपूर्वार्थे वर्तमानात् स्वार्थे चरट् भवति, स च पित्। पूर्वं

भूतो भूतपूर्वः, भूतपूर्वे आढ्य आढ्यचरः । पकारः पुंवद्भावार्थः भूतपूर्वा आढ्या आढ्यचरी ।

**षष्ठ्या रूप्यप्चरट् । ७ । २ । ८० ।**

षष्ठ्यन्ताद् भूतपूर्वेऽर्थे एतौ भवतः । जिनदत्तस्य भूतपूर्वः जिनदत्तरूप्यः, जिनदत्तचरः ।

**व्याश्रये तसुः । ७ । २ । ८१ ।**

षष्ठ्यन्ताद् व्याश्रये गम्ये तसुर्भवति । नानापक्षाश्रयो व्याश्रयः । विद्वांसो धर्मसूरितोऽभवन् देवद्रव्यचर्चायां—धर्मसूरिपक्षावलम्बिनो विद्वास इत्यर्थः ।

**रोगात् प्रतीकारे । ७ । २ । ८२ ।**

षष्ठ्यन्ताद्रोगार्थात् प्रतीकारेऽर्थे तसुः प्रत्ययो भवति । प्रवाहिकाया अपनयनं प्रवाहिकात कुरु । एवं प्रच्छर्दिकातः कुरु- रोगस्य चिकित्सां कुर्वित्यर्थः ।

**पर्यभेः सर्वोभये । ७ । २ । ८३ ।**

सर्वोभयार्थे यथासंख्यमाभ्या तसुर्भवति । परितः सर्वत इत्यर्थः । अभितः उभयत इत्यर्थः ।

**आद्यादिभ्यः । ७ । २ । ८४ ।**

संभवद्विभक्त्यन्तेभ्य आद्यादिभ्यस्तसुर्भवति । आदौ आदेः आदये आदिना वेति आदितः । एवं मध्यतः, अन्ततः, अग्रतः, पार्श्वतः, पृष्ठतः, मुखतः ।

**किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित् तस् । ७ । २ । ८९ ।**

किंशब्दाद् द्व्यादिवर्जितेभ्यः सर्वादिभ्योऽवैपुल्यार्थाद् बहोश्च पञ्चम्यन्तात् तस्, स च पिद् भवति । कस्मादिति कुतः । सर्वस्मात् सर्वतः । विश्वतः । बहुभ्यो बहुतः ।

**इतोऽतःकुतः । ७ । २ । ९० ।**

एते तस्प्रत्ययान्ता निपातनीयाः । अस्मादिति इदंशब्दस्य 'इ' आदेशो इतः । एतस्मादिति एतच्छब्दस्य अकारादेशो अतः । कस्मादिति किंशब्दस्य 'कु' आदेशो कुतः ।

**भवत्वायुष्मद्दीर्घायुर्देवानांप्रियैकार्थाद् । ७ । २ । ९१ ।**

भवतु आयुष्मद् दीर्घायुस् देवानांप्रिय इत्येतैः सह समानाधिकरणेभ्यः किमद्व्यादिसर्वाद्यवैपुल्यबहुभ्यः सर्वस्याद्यन्तेभ्यः पित् तस् वा भवति । स भवान्, ततो भवान् । ते भवन्तः, ततो भवन्त । स आयुष्मान्, तत आयुष्मान् । तमायुष्मन्तम्, तत आयुष्मन्तम् । तेनायुष्मता, तत आयुष्मता । तस्मै आयुष्मते, तत आयुष्मते । तस्मादायुष्मतः, तत आयुष्मतः । तस्यायुष्मतः, तत आयुष्मतः । तस्मिन्नायुष्मति, तत आयुष्मति । स दीर्घायु, ततो दीर्घायु. । स देवानांप्रियः, ततो देवानां प्रिय इत्यादिः । 'एवमेभ्यस्त्रप्प्रत्ययोऽपि वा बोध्य.' स भवान्, तत्र भवान् । तं भवन्तम्, तत्र भवन्तम् । स आयुष्मान्, तत्रायुष्मान् । स दीर्घायुः, तत्र दीर्घायुः । स देवानांप्रियः, तत्र देवानांप्रिय इत्यादिः ।

**क्वकुत्रात्रेह । ७ । २ । ९३ ।**

क्व कुत्र अत्र इह इत्येते शब्दाः त्रबन्ता निपात्यन्ते। कस्मिन्निति क्व, कुत्र । एतस्मिन्निति अत्र । अस्मिन्निति इह ।

**सप्तम्याः । ७ । २ । ९४ ।**

सप्तम्यन्तेभ्यः किमद्द्वयादिसर्वाद्यवैपुल्यबहुभ्यः त्रप् भवति । कस्मिन्निति कुत्र । सर्वस्मिन्निति सर्वत्र । तस्मिन्निति तत्र । बहुषु इति बहुत्र ।

**किंयत्तत्सर्वैकान्यात् काले दा । ७ । २ । ९५ ।**

एभ्यः सप्तम्यन्तेभ्यः कालेऽभिधेये दाप्रत्ययो भवति कस्मिन् काले कदा, एवं यदा, तदा, सर्वदा, एकदा, अन्यदा ।

**सदाऽधुनेदानींतदानीमेतर्हि । ७ । २ । ९६ ।**

काले वाच्ये एते निपात्यन्ते । सर्वस्मिन् काले सदा। अस्मिन् कालेऽधुना, इदानीम् । तस्मिन् काले तदानीम् । एतस्मिन् काले एतर्हि ।

**सद्योऽद्यपरेद्यव्यह्नि । ७ । २ । ९७ ।**

एते काले निपात्यन्ते । समानेऽह्नि सद्यः । अस्मिन्नहनि अद्य । परस्मिन्नह्नि परेद्यवि ।

**पूर्वापराधरोत्तरान्यान्यतरेतरादेद्युस् । ७ । २ । ९८ ।**

एभ्यः सप्तम्यन्तेभ्योऽह्नि कालेऽर्थे एद्युस् भवति । पूर्वस्मि-

ऽहनि पूर्वेद्युः, एवमपरेद्युः, अधरेद्युः, उत्तरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युः । 'उभयशब्दाद् द्युसेद्युसौ वाच्यौ' उभयद्युः, उभयेद्युः । 'वर्षेऽर्थे एषमः परुत् परारि एते त्रयो निपात्याः' ।

अनद्यतने र्हिः । ७ । २ । १०१ ।

सप्तम्यन्तादनद्यतनकालार्थात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः र्हिः प्रत्ययो भवति, अनद्यतने । कस्मिन् काले इति कर्हि, एवं यर्हि, एतर्हि, तर्हि, अमुर्हि, बहुर्हि ।

प्रकारे था । ७ । २ । १०२ ।

प्रकारार्थे वर्तमानात् संभवत्स्याद्यन्तात् किमद्व्यादिसर्वाद्यवैपुल्यबहोर्था भवति । सर्वप्रकारेणेति सर्वथा, एवं यथा, तथा, उभयथा, अन्यथा, अपरथा । 'कथमित्थम्' केन प्रकारेण कथम्, अनेन प्रकारेण इत्थम् ।

संख्याया धा । ७ । २ । १०४ ।

प्रकारे वर्तमानात् संख्यावाचिनो धाप्रत्ययो भवति । एकेन प्रकारेण एकधा । कतिभिः प्रकारैः कतिधा । द्वेधा, त्रेधा । 'एकशब्दाद् ध्यमञपि' ऐकध्यम्—एकेन प्रकारेणेत्यर्थः ।

विचाले च । ७ । २ । १०५ ।

एकस्यानेकीभावोऽनेकस्य चैकीभावो विचालः, तस्मिन् गम्यमाने संख्यावाचिनो धा वा भवति । एको राशिः द्वौ द्विधा

वा क्रियते अनेकमेकमेकधा वा करोति । 'एकाद् ध्यमञपि' अनेकमेकमैकध्य करोति ।

द्वित्रेर्धमञेधौ वा । ७ । २ । १०७ ।

प्रकारे वर्तमानाभ्यां द्वित्रिभ्यां विचाले च गम्ये एतौ वा भवतः । द्वैधम्, द्वेधा, द्विधा, त्रैधम्, त्रेधा, त्रिधा भुङ्क्ते । एकराशिं द्वौ करोति द्वैधं, द्वेधा, द्विधा वा करोति । एवं त्रैधं, त्रेधा, त्रिधा ।

तद्वति धण् । ७ । २ । १०८ ।

प्रकारवति विचालवति चार्थे द्वित्रिभ्यां धण् भवति । द्वैधानि, त्रैधानि ।

वारे कृत्वस् । ७ । २ । १०९ ।

वारे वर्तमानात् संख्यार्थाद् वारवति धात्वर्थे कृत्वस् भवति । पौनःपुन्य वार. । पञ्चवारं भुङ्क्ते पञ्चकृत्वो भुङ्क्ते । एवं षट्कृत्वः इत्यादि ।

द्वित्रिचतुरः सुच् । ७ । २ । ११० ।

वारेऽर्थे वर्तमानेभ्य एभ्य. सुच् भवति । द्विः, त्रिः, चतुर्भुङ्क्ते ।

एकात् सकृच्चास्य । ७ । २ । १११ ।

वारार्थादेकशब्दात् सुच् भवति, प्रकृतेश्च सकृदादेशः । एकवारमिति सकृद् भुङ्क्ते, करोति, गच्छति ।

**ऊर्ध्वाद्रिरिष्टातावुपश्चास्य । ७ । २ । ११४ ।**

दिग्देशकालेषु वर्तमानादूर्ध्वशब्दात् प्रथमा-पञ्चमी-सप्तम्यन्ताद् रिरिष्टातौ प्रत्ययौ भवतः, ऊर्ध्वस्य चोपादेशः । ऊर्ध्वा दिग्, ऊर्ध्वो देशः कालो वा रमणीयः, उपरि उपरिष्टाद् रमणीयः । ऊर्ध्वाया दिशः, ऊर्ध्वाद् देशात् कालाद् वाऽऽगतः उपरि आगतः उपरिष्टाद् वा। ऊर्ध्वाया दिशि, ऊर्ध्वे देशे काले वा वसति उपरि उपरिष्टाद् वसति ।

**पूर्वावराधरेभ्योऽसस्तातौ पुरवधश्चैषाम् । ७ । २ । ११५ ।**

दिग्देशकालवृत्तिभ्य प्रथमापञ्चमीसप्तम्यन्तेभ्य एभ्य अस् अस्ताच्च भवति, यथासंख्यं चैषा पुर् अव् अध् चादेशाः । पूर्वा दिग् देशः कालो वेत्यादि पुर, अव, अधः, पुरस्ताद्, अवस्ताद्, अधस्ताद् रम्यमागतो वासो वा ।

**परावरात् स्तात् । ७ । २ । ११६ ।**

आभ्यां दिगादिवृत्तिभ्यां प्रथमाद्यन्ताभ्य। स्तात् प्रत्ययो भवति । परस्ताद् रमणीयम्, परस्तादागतः, परस्ताद् वसति । एवम् अवरस्तात् ।

**दक्षिणोत्तराच्चातस् । ७ । २ । ११७ ।**

आभ्यां पूर्वोक्तार्थाभ्या स्वार्थेऽतस् भवति । दक्षिणतः, उत्तरतः ।

**अधरापराच्चात् । ७ । २ । ११८ ।**

आभ्यां पूर्वोक्तार्थाभ्यां स्वार्थे आत् भवति, चकाराद् दक्षिणोत्तराभ्यां च । अपरस्य पश्चादेशः । अधरात्, पश्चात्, दक्षिणात्, उत्तरात् ।

आही दूरे । ७ । २ । १२० ।

दूरदिग्देशार्थात् प्रथमासप्तम्यन्ताद् दक्षिणादा आहिश्च भवति । दक्षिणा, दक्षिणाहि रम्यं वासो वा । 'उत्तराद् वा वाच्यौ' उत्तरा, उत्तराहि पक्षे उत्तरत उत्तराद् रम्यं वासो वा ।

अदूरे एनः । ७ । २ । १२२ ।

अवधेरदूरे वर्तमानाद् दिगाद्यर्थे वर्तमानाच्च प्रथमासप्तम्यन्ताद् दिक्शब्दाद् एनो भवति । पूर्वेणास्य रमणीयम् ।

कृभ्वस्तिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वे च्विः ।७।२।१२६।

कर्मार्थात् करोतिना योगे कर्त्रर्थाच्च भ्वस्तिभ्यां योगेऽभूततद्भावे गम्यमाने च्विः प्रत्ययो भवति । अशुक्लं शुक्लं करोति शुक्लीकरोति पटम् । अशुक्लः शुक्लो भवति शुक्लीभवति पटः । शुक्लीस्याद् वस्त्रम् ।

ईश्चावर्णस्यानव्ययस्य । ४ । ३ । १११ ।

अव्ययवर्जितस्यावर्णान्तस्य च्वौ परे ईर्भवति । मालीस्यात् ।

अरुर्मनश्चक्षुश्चेतोरहोरजसां लुक् च्वौ । ७ । २ । १२७ ।

एषां च्वौ परेऽन्तस्य लुग् भवति । अनरुः अरुः करोति

अरूकरोति ' दीर्घश्च्वियङ्यक्येषु च ' इति दीर्घः । अरूस्यात्, अरूभवति । एवमुन्मनीभवति, स्यात्, करोति । चक्षूस्यात्, चेतीभवति, रहीस्यात्, रजीस्यात् । 'इसुसन्तस्य च्वौ बहुलं लुग् वाच्य.' सर्पीकरोति, सर्पीभवति, सर्पीस्यात् । धनूकरोति, धनूभवति, धनूस्यात् । क्वचिच्च न भवति—सर्पिर्भवति इत्यादिः ।

व्यञ्जनस्यान्त ईः । ७ । २ । १२९ ।

व्यञ्जनान्तस्य च्वौ परे बहुलमीकारोऽन्तो भवति । दृषदीभवति ।

व्याप्तौ स्सात् । ७ । २ । १३० ।

च्विविषये सादिः सात् प्रत्ययो भवति । अभूततद्भावस्य चेत् सर्वात्मना द्रव्येण सह सम्बन्धो गम्येत । सर्वं काष्ठमनग्निमग्नि करोति अग्निसात् करोति काष्ठम् । एवमग्निसाद् भवति, अग्निसात् स्यात् सर्वं काष्ठमनग्निरग्निर्भवति, स्याद् वेत्यर्थः ।

तत्राधीने । ७ । २ । १३२ ।

सप्तम्यन्तादधीनेऽर्थे कृभ्वस्तिसंपद्योगे स्सात् प्रत्ययो भवति । राज्ञि आयतं राजसात् करोति, राजसाद् भवति, राजसात् स्यात्, राजसात् संपद्यते । ' देये त्रा च ' राज्ञि अधीनं देयं करोति राजत्रा करोति, देवत्रा करोति ।

तीयशम्बबीजात् कृगा कृषौ डाच् । ७ । २ । १३५ ।

तीयान्ताच्छम्बबीजाभ्यां च कृञा योगे कृषौ विषये डाच् भवति। द्वितीयाकरोति द्वितीयवारं कर्षतीत्यर्थः। शम्बाकरोति क्षेत्रम्—अनुलोमकृष्टं पुनस्तिर्यक् कर्षतीत्यर्थः। बीजाकरोति—उप्ते सति पश्चाद् बीजैः कर्षतीत्यर्थः।

प्रियसुखादानुकूल्ये। ७। २। १४०।

आभ्यां कृञा योगे आनुकूल्ये गम्ये डाच् भवति। प्रियाकरोति, सुखाकरोति गुरम्। 'दुःखात् प्रातिकूल्ये डाच् वाच्य.' दुःखाकरोति शत्रुम्।

बह्वल्पार्थात् कारकादिष्टानिष्टे पशस्। ७। २ १५०।

कारकवाचिभ्या बह्वल्पार्थाभ्यां यथासङ्ख्यमिष्टेऽनिष्टे च विषये पित् शस् वा भवति। बहु अतिथिभ्यो ददाति बहुशो ददाति धनम्। अल्पं ददाति अल्पशो ददाति धनं चण्डालाय। ग्रामे बहु बहुशो ददाति। श्राद्धे अल्पमल्पशो ददाति।

संख्यैकार्थाद् वीप्सायां शस्। ७। २। १५१।

संख्यावाचिन एकत्वविशिष्टार्थवाचिनश्च कारकार्थाद् वीप्सायां शस् वा भवति। एकैकं ददाति एकशो ददाति। द्वौ द्वौ ददाति द्विशो ददाति। त्रिशो ददाति। माषं माषं ददाति माषशो ददाति। संख्यैकार्थादिति किम्—माषौ माषौ दत्ते।

वर्णाव्ययात् स्वरूपे कारः। ७। २। १५६।

स्वरूपार्थवृत्तिभ्यो वर्णवाचिभ्योऽव्ययेभ्यश्च कारो भवति । अकारः, इकारः, ओँकारः, चकारः, नमस्कारः । 'रशब्दादेफो वा वाच्यः' रेफः, रकारः ।

**नामरूपभागाद्द्धेयः । ७ । २ । १५८ ।**

स्वार्थे धेय प्रत्ययो भवति । नामधेयम्, रूपधेयम्, भागधेयम् । 'नवशब्दात् स्वार्थे ईन तन त्न य इत्येते प्रत्यया नवशब्दस्य च नू आदेशो वाच्यः' नवीनम्, नूतनम्, नूत्नम्, नव्यम् । 'देवशब्दात् स्वार्थे तल्' देवता ।

**प्रज्ञादिभ्योऽण् । ७ । २ । १६५ ।**

एभ्यः स्वार्थेऽण् भवति । प्रज्ञ एव प्राज्ञ, वणिगेव वाणिजः

**विनयादिभ्यः । ७ । २ । १६९ ।**

एभ्य इकण् स्वार्थे भवति । विनय एव वैनयिकः । सामायिकम् ।

---

**प्रकृते मयट् । ७ । ३ । १ ।**

प्राचुर्येण प्राधान्येन वा कृतं प्रकृतम् । तदर्थे वर्तमानात् स्वार्थे मयड् भवति । प्रचुरमन्नमन्नमयम् । प्रचुरं प्रधानं वा दधि दधिमयम् । पूजामयम् ।

**अस्मिन् । ७ । ३ । २ ।**

प्रकृतेऽर्थे वर्तमानादस्मिन्नित्यर्थे मयड् भवति । प्रकृतमन्नमस्मिन् अन्नमयं भोजनम् । प्रधाना अपूपा यस्मिन् तद् अपूपमयं पर्व ।

निन्द्ये पाशप् । ७ । ३ । ४ ।

निन्द्येऽर्थे वर्तमानात् स्वार्थे पाशब् भवति । निन्द्यो वैयाकरणो वैयाकरणपाशः । नैयायिकपाशः ।

प्रकृष्टे तमप् । ७ । २ । ५ ।

प्रकृष्टेऽर्थे वर्तमानाद् नाम्नः तमप् प्रत्ययो भवति । अयमेषां प्रकृष्टः शुक्लः शुक्लतमः । एवं साधकतमः, कारकतमः, उपकारकतमः ।

द्वयोर्विभज्ये च तरप् । ७ । ३ । ६ ।

द्वयोर्गुणयोरर्थयोर्मध्ये यः प्रकृष्टस्तस्मिन् द्वयोर्विभज्ये च वर्तमानात् तरप् प्रत्ययो भवति । अनयोरयं प्रकृष्ट. पटुः पटुतरः, सुकुमारतरः, साङ्काश्येभ्यः पाटलिपुत्रका आढ्यतराः । क्वचित् स्वार्थेऽपि अभिन्नमेवाभिन्नतरकम्, उच्चैस्तराम् ।

गुणाङ्गाद् वेष्ठेयसू । ७ । ३ । ९ ।

गुण एवाङ्गं प्रवृत्तौ हेतुर्यस्य तस्मात् तमप्तरपोर्विषये यथासंख्यमिष्ठ ईयसुश्च भवतः । अयमेषामतिशयेन पटुरिति पटिष्ठः, पटुतमः । अयमनयोरतिशयेन पटुरिति पटीयान् , पटुतरः । अयमेषामनयोर्वाऽतिशयेन प्रशस्य इति इष्ठेयसौ परे—

प्रशस्यस्य श्रः । ७ । ४ । ३४ ।

अस्य णीष्ठेयस्सुषु परेषु श्रादेशो भवति । श्रेष्ठः, श्रेयान् ।

**वृद्धस्य च ज्यः । ७ । ४ । ३८ ।**

अस्य प्रशस्यस्य च णीष्ठेयस्सुषु ज्यादेशो भवति । ज्येष्ठः । अयमेषामतिशयेन वृद्धः ज्येष्ठ । 'ईयसौ तु अनयोः ज्यायान् इति निपात्यः' अयमनयोरेषां वाऽतिशयेनान्तिक इति इष्ठेयसौ परे—

**बाढान्तिकयोः साधनेदौ । ७ । ४ । ३७ ।**

अनयोर्ण्यादौ परे यथासंख्यं साधनेदावादेशौ भवतः । नेदीयान्, नेदिष्ठः । अयमेषामनयोर्वाऽतिशयेन युवा इति इष्ठेयसौ परे—

**अल्पयूनोः कन् वा । ७ । ४ । ३३ ।**

अनयोर्णीष्ठेयस्सुषु परेषु कन् वा भवति । कनिष्ठः, कनीयान् । पक्षे युवन्+इष्ठ इति स्थिते—

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्यान्तस्थादेर्गुणश्च नामिनः।७।४।४२।**

एषामिमनि णीष्ठेयस्सुषु च परेषु अन्तस्थादेरवयवस्य लुग् नामिनश्च गुणो भवति । यविष्ठः, यवीयान् । एवं स्थविष्ठः, स्थवीयान् । दविष्ठः, दवीयान् । ह्रसिष्ठः ह्रसीयान् । क्षेपिष्ठः क्षेपीयान् । क्षोदिष्ठः, क्षोदीयान् । 'णीष्ठेयस्सुषु विन्मतोर्लुब् वाच्यः' अयमेषामनयोर्वाऽतिशयेन स्रग्वी स्रजिष्ठः, स्रजीयान् । एवं त्वचिष्ठः, त्वचीयान् । अतिशयेन गुरुः गरिष्ठः, गरीयान् ।

त्यादेश्च प्रशस्ते रूपप् । ७ । ३ । १० ।

त्याद्यन्ताद् नाम्नश्च प्रशस्तेऽर्थे रूपप् भवति । प्रशस्तो वैयाकरणो वैयाकरणरूपः । नैयायिकरूपः । पचतिरूपम् । पश्यतिरूपम् ।

अतमबादेरीषदसमाप्ते कल्पप्देश्यप्देशीयर् । ७ । ३ । ११ ।

ईषदपरिसमाप्तावर्थे वर्तमानात् तमबाद्यन्तवर्जितात् त्याद्यन्ताद् नाम्नश्च कल्पप् देश्यप् देशीयर् प्रत्यया भवन्ति । ईषदपरिसमाप्तं पचति—पचतिकल्पम् , पचतिदेश्यम्, पचतिदेशीयम् । ईषदपरिसमाप्ता पट्वी—पटुकल्पा, पटुदेश्या, पटुदेशीया ' क्यङ्मानिपित्तद्धिते ' इति पुंवद्भावः । 'ईषदपरिसमाप्तेऽर्थे नाम्नः प्राक् बहुप्रत्ययो वाच्यः' ईषदसमाप्त. पटु: बहुपटुः ।

त्यादिसर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक् । ७ । ३ । २९ ।

त्याद्यन्तस्य सर्वादीनां च स्वराणां मध्ये योऽन्त्यः स्वरः तस्मात् पूर्वोऽक् भवति । कुत्सितमज्ञातमल्पं वा पचति पचतकि । सर्वकः ।

युष्मदस्मदोऽसोभादिस्यादेः । ७ । ३ । ३० ।

अनयोः शब्दयोः सकारौकारभकारादिवर्जितस्याद्यन्तयोः स्वराणां मध्येऽन्त्यात् स्वरात् प्रागक् भवति । त्वयका, मयका । युष्माककम्, अस्माककम् । असोभादिस्यादेरिति किम्—युष्मकासु, युवकयोः, युवकाभ्याम् ।

अव्ययस्य को द् च । ७ । ३ । ३१ ।

अव्ययस्य स्वराणां मध्येऽन्त्यात् स्वरात् प्राक् कप्रत्ययो भवति, तद्योगे को द् च भवति । उच्चकैः, नीचकैः, धकिद् ।

**कुत्सिताल्पाज्ञाते । ७ । ३ । ३३ ।**

एष्वर्थेषु वर्तमानाद् नाम्नो यथायोगं कबादयो भवन्ति । कुत्सितोऽल्पोऽज्ञातो वा अश्वः अश्वकः, गर्दभकः । अनुकम्पायां तद्युक्तनीतौ च गम्यमानाया नाम्नो यथायोगं कबादयो भवन्ति । अनुकम्पित पुत्रः पुत्रकः । स्वपिषकि पुत्रक । एहकि कर्दमकेन दिग्धकोऽसि पुत्रक ।

**अजातेर्नृनाम्नो बहुस्वरादियेकेलं वा । ७ । ३ । ३५ ।**

अजातिमनुष्यनाम्नो बहुस्वरादनुकम्पायां एते प्रत्यया वा भवन्ति । देवदत्तियः, देवदत्तिकः, देवदत्तिलः, देवदत्तकः ।

**पूर्वपदस्य वा । ७ । ३ । ४५ ।**

अनुकम्पायां स्वरादौ प्रत्यये परे पूर्वपदस्य लुग्वा भवति । दत्तियः, देवियः, एवं देविकः, देविलः 'द्वितीयात्स्वरादूर्ध्वम्' इति लुकि सत्याम् । 'ह्रस्वेऽर्थे यथायोगं कबादयो वाच्याः' ह्रस्वः पटः पटकः । एवं पुस्तककम् ।

**वैकाद् द्वयोर्निर्धार्ये डतरः । ७ । ३ । ५२ ।**

समुदायादेकदेशो जातिगुणक्रियाद्रव्यैर्बुद्ध्या पृथक् क्रियमाणो निर्धार्यः । द्वयोरेकस्मिन् निर्धार्येऽर्थे एकशब्दाद् डतरो वा

भवति । भवतोः एकतरः कठः पटुर्गन्ता मैत्रो दण्डी वा, पक्षे एककः ।

**यत्तत्किमन्यात् । ७ । ३ । ५३ ।**

एभ्यो द्वयोरेकस्मिन् निर्धार्येऽर्थे वर्तमानेभ्यो डतरः प्रत्ययो भवति । यतरो भवतो कठः ततरो भवतोः पटुः । कतरो भवतो गन्ता । अन्यतरो भवतो देवदत्तो दण्डी वा ।

**बहूनां प्रश्ने डतमश्च वा । ७ । ३ । ५४ ।**

बहूनां मध्ये निर्धार्येऽर्थे वर्तमानेभ्य एभ्यो डतमो वा भवति, डतरश्च । यतमो यतरो वा भवतां कठस्ततमस्ततरो वाऽऽगच्छतु । कतरः, कतमः, अन्यतमः, अन्यतर । पक्षे यकः, सकः, ककः, अन्यकः ।

। इति तद्धितप्रकरणं समाप्तम् ।

इति पूर्वार्धः



अर्हम्

# धमदीपिकाव्याकरणस्य

## सूत्रानुक्रमणिका—



### ( पूर्वार्धस्य )



## य


धर्मदीपिकायाः पूर्वार्धस्य
सूत्रानुक्रमणिका समाप्ता।

# पूर्वार्धस्य शुद्धिपत्रकम्।



| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| सद्भ | सद्भू | १ | १० |
| चवर्ण | चवर्ग | ४ | १७ |
| दीघः | दीर्घः | ९ | १७ |
| स्वरे- | स्वैर- | १० | ६ |
| —त्रर्णस्थ | —वर्णस्य | १२ | ३ |
| वाक | वाक् | १४ | ४ |
| वाङ | वाङ् | १४ | ९ |
| वर्तमानात | वर्तमानात् | १४ | ११ |
| तत | तत् | १४ | १२ |
| स्यात | स्यात् | १४ | १८ |
| वतमानस्य | वर्तमानस्य | १६ | २ |
| हेः | टेः | १२ | १२ |
| शकारः | षकारः | १९ | ३ |
| ० | भवाञ्शूरः, भवाञ्छूरः | १६ | ३ |
| कोलिलः | पुंस्कोकिलः | १७ | ३ |
| गणनां | ङणनां | १७ | १२ |

| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| लुफ् | लुक् | २२ | ७ |
| अघोर् अत्र | अघोर अत्र | २३ | ५ |
| ० | १।१।२७। | २४ | २५ |
| पर्वः | पूर्वः | २८ | १९ |
| क्रोष्ट्वोः | क्रोष्ट्रोः क्रोष्ट्वोः | ४० | २० |
| तचोऽभावाद् | तृचोऽभावाद् | ४१ | १ |
| धति | धृति | ४५ | १८ |
| श्रिय | श्रियं | ४७ | १३ |
| श्रिय | श्रियै | ४७ | १८ |
| भ्रः | भ्रूः | ४८ | २ |
| भ्रवः | भ्रुवः | ४८ | ५ |
| भ्रभ्यः | भ्रूभ्यः | ४८ | ६ |
| ० | प्रियाष्टा॰ प्रियाष्टानः | ६४ | ६ |
| यत्र | ० | ६५ | १४ |
| नसादेशः | नैसादेश. | ६५ | १७ |
| क्वीबन्ते | क्विबन्ते | ७१ | २ |
| दीघः | दीर्घः | ७४ | २ |
| ऋद्वद् | ऋद्वद् | ८१ | ३ |
| काय | कार्य | ९४ | १६ |
| यवनी | यवानी | १०५ | ४ |

| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| तुरंगमेण ब्राह्मणः | तुरङ्गमं ब्राह्मणः | ११९ | २ |
| बहुषु साधुषु | बहुष्वसाधुषु | १२८ | ९ |
| द्वितीयभार्यः | द्वितीयाभार्यः | १४३ | १८ |
| कब्जेन दृष्टं | कुब्जेन दृष्टं | १७२ | ९ |
| तण्या | तृण्या | १७४ | १३ |
| ०द्यथ० | ०द्यर्थ० | १७७ | १७ |
| पाच्यं | प्राच्यं | १८३ | १३ |
| ध्रवेऽर्थे | ध्रुवेऽर्थे | १८४ | ६ |
| ममीपे यषां | लध्वादिः समीपे येषां | २०९ | २० |
| परणी | पूरणी | २१७ | ४ |
| षष्ठ्यथ | षष्ठ्यर्थे | २१८ | १६ |
| मत्वथ | मत्वर्थे | २२४ | ११ |
| पयभेः | पर्यभेः | २२६ | १३ |
| कि द्व्यादि सर्वाद्यो० | किमद्व्यादिसर्वाद्यवै० | २२९ | ५ |

॥ अर्हम् ॥

नमो नमः श्रीप्रभुधर्मसूरये ।

# ❁ धर्मदीपिका ❁

## उत्तरार्द्धम् ।

### अथाख्यातप्रक्रिया निरूप्यते—

**क्रियार्थो धातुः । ३ । ३ । ३ ।**

क्रिया प्रवृत्तिर्व्यापार इत्यर्थः, सोऽर्थो येषां तेषा धातुसञ्ज्ञा भवति । ते च त्रिविधाः परस्मैपदिन आत्मनेपदिन उभयपदिनश्चेति ।

**न प्रादिरप्रत्ययः । ३ । ३ । ४ ।**

चाद्यन्तर्गणो यः प्रादिः स धातोरवयवो न भवति ।

**इङितः कर्तरि । ३ । ३ । २२ ।**

इकारेतो ङकारेतश्च धातोः फलवति कर्तरि सति आत्मनेपदं भवति ।

**ईगितः । ३ । ३ । ९५ ।**

ईकारेतो गकारेतश्च धातोः कर्तर्यात्मनेपदं वा भवति ।

**शेषात् परस्मै । ३ । ३ । १०० ।**

पूर्वोक्तनिमित्तरहिताद् धातोः कर्तरि परस्मैपदं भवति ।

**नवाऽऽद्यानि शतृक्वसू च परस्मैपदम् । ३ । ३ । १९ ।**

सर्वासां विभक्तीनां मध्ये आद्यानि नव नव वचनानि शतृ-क्वसू च प्रत्ययौ परस्मैपदं भवति ।

**पराणि कानानशौ चात्मनेपदम् । ३ । ३ । २० ।**

सर्वासां विभक्तीनां मध्ये पराणि नव नव वचनानि काना-नशौ च प्रत्ययौ आत्मनेपदं भवति ।

**वर्तमाना—**

**तिव्, तस्, अन्ति; सिव्, थस्, थ; मिव्, वस्, मस्।**
**ते, आते, अन्ते; से, आथे, ध्वे; ए, वहे, महे । ३ । ३ । ६ ।**

तिवादीनां वर्तमानासञ्ज्ञा भवति, केषांचिद् मते एषां सञ्ज्ञा लट् । प्रारब्धापरिसमाप्तो वर्तमानस्तदर्थाद् धातोर्वर्तमाना विधेया ।

**त्रीणि त्रीण्यन्ययुष्मदस्मदि । ३ । ३ । १७ ।**

सर्वासां विभक्तीनां त्रीणि त्रीणि वचनानि अन्यस्मिन्नर्थे युष्मदर्थेऽस्मदर्थे च वाच्ये यथाक्रमं भवन्ति । प्रथमपुरुष—मध्यम-पुरुषोत्तमपुरुष इति अन्य—युष्मदस्मदां यथाक्रमं नामान्तराणि । अन्यस्मिन् वाच्ये— स पचति, तौ पचतः, ते पचन्ति । युष्मदि—

त्वं पचसि, युवां पचथः, यूयं पचथ। अस्मदर्थे—अहं पचामि, आवां पचावः, वयं पचामः। एवं सर्वत्र। द्वयोः त्रयाणां वा युगपद् योगे सूत्रापेक्षया पराश्रितमेव वचनम्—स च त्वं च पचथः, अत्र पचत इति न भवति, सूत्रे युष्मद् परपठितत्वेन तदाश्रितस्यैव द्विवचनस्य भवनात्। स च त्वं चाहं च पचामः।

## एकद्विबहुषु। ३। ३। १८।

अन्यादिषु यानि त्रीणि त्रीण्युक्तानि तानि एकद्विबहुष्वर्थेषु यथासंख्यं भवन्ति। अर्थादेकस्मिन्नर्थे एकवचनं द्वयोर्द्विवचनं बहुषु च बहुवचनम्। 'भू सत्तायाम्' भू इति परस्मैपदिनो धातोः कर्तरि तिवादयो भवन्ति। तत्रैकत्वविवक्षायां भू+तिव् इति स्थिते वकारो वित्कार्यार्थः।

## कर्तर्यनद्भ्यः शव्। ३। ४। ७१।

अदादिवर्जाद् धातोः कर्तरि शव् प्रत्ययो भवति शिति परे। शकारवकारौ शिद्वित्कार्यार्थौ। भू+अ+ति इति स्थिते—

## गुणोऽरेदोत्। ३। ३। २।

अर् एत् ओत् एते प्रत्येकं गुणसञ्ज्ञका भवन्ति।

## नामिनो गुणोऽक्ङिति। ४। ३। १।

क्िद्ङिद्वर्जिते प्रत्यये परे नाम्यन्तस्य धातोर्गुणो भवति, स चासन्नः। भो+अ+ति अवादेशो भवति। द्वित्वविवक्षायां भवतः। बहुत्वे भव+अन्ति 'लुगस्यादेत्यपदे' भवन्ति। मध्यमपुरुषैकव-

चने भवसि, द्विवचने भवथः, बहुवचने भवथ । उत्तमपुरुषैकवचने भव+मि इति स्थिते—

मव्यस्याः । ४ । २ । ११३ ।

धातोर्विहिते वादौ मादौ प्रत्यये परेऽकारस्याकारो भवति । भवामि, भवावः, भवामः । अन्यपुरुषेऽन्यत्वं युष्मदस्मच्छब्दापेक्षं तथा च भवच्छब्देनोच्यमानो न युष्मदर्थः । भवान् भवति, भवन्तौ भवतः, भवन्तो भवन्ति ।

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थने । ५ । ४ । २८ ।

विधिः क्रियायां प्रेरणा, यस्या प्रेरणाया प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम्, यस्या प्रेरणायां प्रत्याख्याने कामचारस्तदामन्त्रणम्, सत्कारपूर्विका प्रेरणा अधीष्टम्, संप्रधारणा संप्रश्नः, याञ्चा प्रार्थनम् । विध्यादिविशिष्टेषु कर्त्तृकर्मभावेषु प्रत्ययार्थेषु सप्तमीपञ्चम्यौ भवेताम् ।

सप्तमी यात् यातां युस्, यास् यातं यात, यां याव याम । ईत ईयाताम् ईरन्, ईथास् ईयाथाम् ईध्वम्, ईय ईवहि ईमहि । ३ । ३ । ७ ।

यातादीनां सप्तमीसञ्ज्ञा भवति, अन्येषां मते विधिलिङ्सञ्ज्ञा । भव+यात् इति स्थिते—

यः सप्तम्याः । ४ । २ । १२२ ।

अकारात् परस्य सप्तम्या याशब्दस्य इकारादेशो भवति ।

'अवर्णस्येवर्णादिना' इति भवेत्, भवेताम्। भव+युस् इति स्थिते—

याम्युसोरियमियुसौ। ४। २। १२३।

अकारात् परयोर्यामियुसोर्यथासंख्यमियमियुसौ भवतः। भवेयुः। भवेः, भवेतम्, भवेत। भवेयम्, भवेव, भवेम।

---

पञ्चमी तुव्, ताम्, अन्तु; हि, तम्, त; आनिव्, आवव्, आमव्। ताम्, आताम्, अन्ताम्; स्व, आथाम्, ध्वम्; ऐव्, आवहैव्, आमहैव्। ३। ३। ८।

तुवादीनां पञ्चमीसञ्ज्ञा भवति। वकारा वित्कार्यार्थाः। भवतु।

आशिषि तुह्योस्तातङ्। ४। २। ११९।

आशीरर्थयोस्तुह्योस्तातङ् वा भवति। भवतात्, भवताम्, भवन्तु।

अतः प्रत्ययाल्लुक्। ४। २। ८५।

धातोः परो योऽदन्तप्रत्ययस्तस्मात् परस्य हेर्लुग् भवति। भव, भवतात्, भवतम्, भवत। भवानि, भवाव, भवाम। प्र+भवानि, अन्तर्+भवानि इति स्थिते—

अदुरुपसर्गान्तरो णहिनुमीनानेः। २। ३। ७७।

दुर्वर्जितोपसर्गस्थादन्त.शब्दस्थाच्च रषृवर्णात् परस्य णोपदेशस्य धातोः हिनुमीनानीनां च नकारस्य णो भवति । प्रभवाणि, अन्तर्भवाणि । दुर्वर्जनात् दुर्भवानि । प्र+नि+भवति इति स्थिते—

**अकखाद्यषान्ते पाठे वा । २ । ३ । ८० ।**

पाठे धातूपदेशे ककारादिः खकारादिः षकारान्तश्च यो धातुस्तदन्यस्मिन् धातौ परे अदुरुपसर्गान्तःस्थाद्रादेः परस्य नेर्नकारस्य णो वा भवति । प्रणिभवति पक्षे प्रनिभवति ।

**प्रैषाऽनुज्ञाऽवसरे कृत्यपञ्चम्यौ । ५ । ४ । २९ ।**

न्यत्कारपूर्विका प्रेरणा प्रैषः, कामचारोऽनुज्ञा, अवसरः प्राप्तकालता । एष्वर्थेषु धातोः कृत्यप्रत्ययाः पञ्चमी च भवति ।

**अनद्यतने ह्यस्तनी । ५ । २ । ७ ।**

आन्याय्यादुत्थानादान्याय्याच्च संवेशनादहरुभयतः सार्धरात्रं वाऽद्यतनकालः तस्मिन्नसति भूतेऽर्थे वर्तमानाद् धातोः ह्यस्तनी विभक्तिर्भवति ।

**ह्यस्तनी दिव्, ताम्, अन्; सिव्, तम्, त; अम्व्, व, म । त, आताम्, अन्त; थास्, आथाम्, ध्वम्; इ, वहि, महि । ३ । ३ । ९ ।**

इमानि वचनानि ह्यस्तनी भवन्ति, पाणिनीये त्वेषां संज्ञा लङ् । एकत्वविवक्षायां भू+अ+दि इति स्थिते—

**अड् धातोरादिर्ह्यस्तन्यां चामाङा । ४ । ४ । २९ ।**

ह्यस्तन्यामद्यतन्यां क्रियातिपत्तौ च परे धातोरादिरड् भवति । न तु माङो योगे । अ+भू+अ+दि इति स्थिते गुणे अभवद्, अभवताम्, अभवन्। अभवः, अभवतम्, अभवत । अभवम्, अभवाव, अभवाम ।

**एताः शितः । ३ । ३ । १० ।**

वर्तमाना सप्तमी पञ्चमी ह्यस्तनी एताः शितो भवन्ति शकारानुबन्धा वेदितव्या इत्यर्थः । तेन जुहोतीत्यादयः सिद्धाः ।

**परोक्षे । ५ । २ । १२ ।**

भूतानद्यतनपरोक्षार्थाद् धातोः परा परोक्षा भवति ।

**परोक्षा णव, अतुस्, उस्; थव, अथुस्, अ; णव्, व, म । ए, आते, इरे; से, आथे, ध्वे; ए, वहे, महे । ३ । ३ । १२ ।**

एते णवादयः प्रत्ययाः परोक्षासञ्ज्ञा भवन्ति, पाणिनीये तु लिट्सञ्ज्ञा । भू+णव् इति स्थिते णकारवकारौ णिद्वित्कार्यार्थौ ।

**द्विर्धातुः परोक्षाङे प्राक्तु स्वरे स्वरविधेः । ४ । १ । १ ।**

परोक्षायां ङे च प्रत्यये धातुर्द्विर्भवति । स्वरादौ द्वित्वनिमित्ते प्रत्यये परे तु स्वरस्य कार्यात् प्रागेव । भू+भू+अ इति स्थिते—

**द्वितीयतुर्ययोः पूर्वौ । ४ । १ । ४२ ।**

धातोर्द्वित्वे सति पूर्वस्य द्वितीयस्य प्रथमे आद्यः, तुर्यस्य च

स्थाने तृतीयश्च आसन्नो भवति । इति भकारस्य बकारे बू+भू+अ इति स्थिते—

**भूस्वपोरदुतौ । ४ । १ । ७० ।**

भूस्वपोः परोक्षायां द्वित्वे सति पूर्वस्य यथासंख्यमदुतौ भवतः । ब+भू+अ इति स्थिते 'धातोरिवर्णोवर्ण-' इत्यादिना उवादेशे सति—

**भुवो वः परोक्षाऽद्यतन्योः । ४ । २ । ४३ ।**

वकारान्तस्य भुव उपान्त्यस्य परोक्षायामद्यतन्यां च ऊद् भवति । बभूव ।

**इन्ध्यसंयोगात् परोक्षा किद्वत् । ४ । ३ । २१ ।**

इन्धेरसंयोगान्ताच्च धातोः परा याऽवित् परोक्षा सा किद्वद् भवति । बभूवतुः, बभूवुः । ब+भू+थव् इति स्थिते—

**स्क्रसृवृभृस्तुद्रुश्रुस्रोर्व्यञ्जनादेः परोक्षायाः । ४ । ४ । ८१ ।**

स्क्रगः स्त्रादिवर्जेभ्यः सर्वधातुभ्यश्च व्यञ्जनादेः परोक्षाया इड् भवति । शेषं पूर्ववत् बभूविथ, बभूवथु बभूव । बभूव, बभूविव, बभूविम ।

**आशिष्याशीः–पञ्चम्यौ । ५ । ४ । ३८ ।**

आशीर्विशिष्टार्थाद् धातोराशीः पञ्चमी च भवति ।

**आशीः क्यात्, क्यास्ताम्, क्यासुस्; क्यास्, क्यास्तम्, क्यास्त; क्यासम्, क्यास्व, क्यास्म । सीष्ट, सीयास्ताम्, सीरन्; सीष्ठास्, सीयास्थाम्, सीध्वम्; सीय, सीवहि, सीमहि ।३।३।१३।**

इमानि वचनानि आशीः भवन्ति, पाणिनीये शास्त्रे आशीर्लिङसञ्ज्ञा। कित्त्वाद् गुणाभावः। भूयात्, भूयास्ताम्, भूयासुः; भूयाः; भूयास्तम्, भूयास्त, भूयासम्, भूयास्व, भूयास्म।

**अनद्यतने श्वस्तनी। ५। ३। ५।**

नास्त्यद्यतनो यस्मिन् तस्मिन् वत्स्यर्त्यर्थे वर्तमानाद् धातोः परा श्वस्तनी भवति।

**श्वस्तनी ता, तारौ, तारस्; तासि, तास्थस्, तास्थ; तास्मि, तास्वस्, तास्मस्। ता, तारौ, तारस्; तासे, तासाथे, ताध्वे; ताहे, तास्वहे, तास्महे। ३। ३। १४।**

इमानि वचनानि श्वस्तनी भवन्ति, पाणिनीये मते लुट् सञ्ज्ञा। भू+ता इति स्थिते—

**स्ताद्यशितोऽत्रोणादेरिट्। ४। ४। ३२।**

धातो. परस्य सादेः तादेश्चाशित आदिरिड् भवति। गुणेऽवादेशे च भविता, भवितारौ, भवितारः। भवितासि, भवितास्थः, भवितास्थ, भवितास्मि, भवितास्वः, भवितास्मः।

**भविष्यन्ती। ५। ३। ४।**

वत्स्यर्दर्थाद् धातोः परा भविष्यन्ती भवति।

**क्रियायां क्रियार्थायां तुम् णकच् भविष्यन्ती। ५।३।१३।**

यस्माद् धातोस्तुमादिविधानं तद्धातुवाच्या क्रिया अर्थः

प्रयोजनं यस्याः तस्यां क्रियायामुपपदे वत्स्यर्दर्थाद् धातोः तुम्—णक-च्—भविष्यन्त्यो भवन्ति ।

**भविष्यन्ती स्यति, स्यतस्, स्यन्ति; स्यसि, स्यस्थस्, स्यथ; स्यामि, स्यावस्, स्यामस । स्यते, स्येते, स्यन्ते; स्यसे, स्येथे, स्यध्वे; स्ये, स्यावहे, स्यामहे । ३ । ३ । १५।**

भविष्यति, भविष्यतः, भविष्यन्ति । भविष्यसि, भविष्यथः, भविष्यथ । भविष्यामि, भविष्यावः, भविष्यामः ।

**सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः । ५ । ४ । ९ ।**

सप्तम्या अर्थो निमित्तं हेतुफल-कथनादिसामग्री । कुतश्चिद् वैगुण्यात् क्रियाया अनभिनिवृत्तिः क्रियातिपत्तिः, तस्यां सत्यां भविष्यदर्थाद् धातोः सप्तम्यर्थे क्रियातिपत्तिर्भवति ।

**क्रियातिपत्तिः स्यत्, स्यताम्, स्यन्; स्यस्, स्यतम्, स्यत; स्यम्, स्याव, स्याम। स्यत, स्येताम्, स्यन्त; स्यथास्, स्येथाम्, स्यध्वम्; स्ये, स्यावहि, स्यामहि ।३।३।१६।**

इमानि वचनानि क्रियातिपत्तिः भवन्ति, पाणिनीये ऌङ् इति सञ्ज्ञा। 'अड् धातोरादिः' इति अडागमे इटि गुणेऽवादेशे च अभविष्यत्, अभविष्यताम्, अभविष्यन्। अभविष्यः, अभविष्यतम्, अभविष्यत ।अभविष्यम्, अभविष्याव, अभविष्याम ।

अभविष्यद् युद्धशान्तिरिदानीं समर्घ्यं वस्तु समागमिष्यत् ।

अद्यतनी । ५ । २ । ४ ।

भूतेऽर्थे वर्तमानाद् धातोरद्यतनी भवति ।

अद्यतनी दि, ताम्, अन्; सि, तम्, त; अम्, व, म । त, आताम्, अन्त; थास्, आथाम्, ध्वम्; इ, वहि, महि । । ३ । ३ । ११ ।

इमे प्रत्यया अद्यतनी भवन्ति, पाणिनीये तन्त्रे एषां लुङिति सञ्ज्ञा । भू+दि इति स्थिते—

सिजद्यतन्याम् । ३ । ४ । ५३ ।

धातोः परः सिच् भवति, अद्यतन्यां परस्याम् । भू+स्+दि इति स्थिते—'अड् धातोरादिः' इत्यादिनाऽडागमे अभू+स्+दि इति स्थिते—

पिबैतिदाभूस्थः सिचो लुप् परस्मै न चेट् । ४ । ३ । ६६ ।

देति दासञ्ज्ञा धातवो ग्राह्याः । पिब् इण् दा भू स्था इत्येतेभ्यः परस्य परस्मैपदस्य सिचो लुब् भवति । लुब्योगे न चेट् । सिचो लुपि गुणे प्राप्ते—

भवतेः सिज्लुपि । ४ । ३ । १२ ।

भुवः सिचो लुपि गुणो न भवति । अभूत्, अभूताम्, अभू+अन् इति स्थिते उवादेशे उपान्त्यस्योत्त्वे अभूवन् । अभूः, अभूतम्, अभूत । अभूवम्, अभूव, अभूम । 'भूङ् प्राप्तौ' इति त्वात्मनेपदीति भवते, भव+आते इति स्थिते—

**आतामाते आथामाथे आदिः । ४ । २ । १२१ ।**

अकारात् परेषामेषामात इः भवति । 'अवर्णस्येवर्णादिना' इत्येकारे भवेते, भवन्ते । भवसे, भवेथे भवध्वे । भवे, भवावहे, भवामहे । सप्तम्यां भवेत भवेयाताम् भवेरन् । भवेथाः भवेयाथाम्, भवेध्वम् । भवेय, भवेवहि, भवेमहि । पञ्चम्यां भवताम्, भवेताम्, भवन्ताम् । भवस्व, भवेथाम्, भवध्वम् । भवै, भवावहै, भवामहै । ह्यस्तन्याम्—अडागमे अभवत, अभवेताम्, अभवन्त । अभवथाः, अभवेथाम्, अभवध्वम् । अभवे, अभवावहि, अभवामहि । परोक्षायाम्—बभूवे, बभूवाते, बभूविरे । बभूविषे 'स्क्रसृवृ—' इतीट, बभूवाथे, बभूविध्वे पक्षे

**हान्तस्थाञ्जीड्भ्यां वा । २ । १ । ८१ ।**

हकारादन्तस्थायाश्च परो यो ञिरिट् च ताभ्यां परासां परोक्षाऽद्यतन्याशिषां धो ढ् वा भवति । बभूविढ्वे । बभूवे, बभूविवहे, बभूविमहे । आशिषि भविषीष्ट, भविषीयास्ताम्, भविषीरन् । भविषीष्ठाः, भविषीयास्थाम्, भविषीढ्वम्, भविषीध्वम् । भविषीय, भविषीवहि, भविषीमहि । श्वस्तन्या—भविता, भवितारौ, भवितारः । भवितासे, भवितासाथे, भविताध्वे । भविताहे, भवितास्वहे, भवितास्महे । भविष्यन्त्याम्—भविष्यते, भविष्येते, भविष्यन्ते । भविष्यसे, भविष्येथे, भविष्यध्वे । भविष्ये, भविष्यावहे, भविष्यामहे । क्रियातिपत्तौ—अभविष्यत, अभविष्ये-

ताम्, अभविष्यन्त। अभविष्यथाः, अभविष्येथाम्, अभविष्यध्वम्। अभविष्ये, अभविष्यावहि, अभविष्यामहि । अद्यतन्याम्—अडागमे सिचि इटि गुणे च अभविष्ट, अभविषाताम्, अभविष्+अन्त इति स्थिते—

अनतोऽन्तोऽदात्मने । ४ । २ । ११४ ।

अनत परस्यात्मनेपदस्यान्तोऽद् भवति । अभविषत । अभविष्ठाः, अभविषाथाम्, अभविध्वम् अभविढ्वम्। अभविषि, अभविष्वहि,अभविष्महि । 'पां पाने' परस्मैपदी, वर्तमानकालविवक्षायां वर्तमानायां शवि पा+अ+ति इति स्थिते—

श्रौतिकृवुधिवुपाघ्राध्मास्थाम्नादाम्दृश्यर्तिशदसदः शृकृधिपिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदम् । ४। २ ।१०८।

अत्यादौ शिति परे श्रौत्यादिनां शृ इत्यादयो यथाक्रममादेशा भवन्ति । पिबादेशे पिबति, पिबतः, पिबन्ति । पिबसि, पिबथः, पिबथ । पिबामि, पिबावः, पिबामः । सप्तम्यां पिबेत्, पिबेताम्, पिबेयुः। पिबेः, पिबेतम्, पिबेत । पिबेयम्, पिबेव, पिबेम ।पञ्चम्यां पिबतु पिबतात्, पिबताम्, पिबन्तु । पिबतात् पिब, पिबतम्, पिबत । पिबानि, पिबाव, पिबाम । ह्यस्तन्याम्—अपिबत्, अपिबताम्, अपिबन् । अपिबः, अपिबतम्, अपिबत। अपिबम्, अपिबाव, अपिबाम । परोक्षायां पा+णव् इति स्थिते द्वित्वे पा+पा+णव् इति स्थिते—

**ह्रस्वः । ४ । १ । ३९ ।**

धातोर्द्वित्वे सति पूर्वस्य ह्रस्वो भवति । प+पा+णव् इति स्थिते—

**आतो णव औः । ४ । २ । १२० ।**

आकारान्तधातोः परस्य णव औ इत्यादेशो भवति । पपौ । प+पा+अतुस् इति स्थिते—

**इडेत्पुसि चातो लुक् । ४ । ३ । ९४ ।**

क्ङित्यशिति स्वरे इटि एति पुसि च परे आदन्तस्य धातोराकारस्य लुग् भवति । पपतुः, पपुः । पपा+थ इति स्थिते—

**सृजिदृशिस्कृस्वरात्वतस्तृजनित्यानिटस्थवः । ४ । ४ । ७८ ।**

सृजिदृशिभ्यां स्कृगः स्वरान्तादत्वतश्च तृचि नित्यानिटो विहितस्य थव आदिरिड् वा भवति । आकारलुकि पपिथ पक्षे पपाथ, पपथुः, पप । पपौ, पपिव, पपिम । आशिषि—पा+यात् इति स्थिते—

**गापास्थासादामाहाकः । ४ । ३ । ९६ ।**

एषामन्तस्य क्ङित्याशिषि परे एः भवति । पेयात्, पेयास्ताम्, पेयासुः । पेयाः, पेयास्तम्, पेयास्त । पेयासम्, पेयास्व, पेयास्म । श्वस्तन्यां पा+ता इति स्थिते, इटि प्राप्ते—

**एकस्वरादनुस्वारेतः । ४ । ४ । ५६ ।**

एकस्वरादनुस्वारेतो धातोर्विहितस्य स्ताद्यशित आदिरिड् न भवति । पाता, पातारौ, पातारः । पातासि, पातास्थः, पातास्थ । पातास्मि, पातास्वः, पातास्मः । भविष्यन्त्याम्—पास्यति, पास्यतः, पास्यन्ति । पास्यसि, पास्यथः, पास्यथ । पास्यामि, पास्यावः, पास्यामः । क्रियातिपत्तौ—अपास्यत्, अपास्यताम्, अपास्यन् । अपास्यः, अपास्यतम्, अपास्यत । अपास्यम्, अपास्याव, अपास्याम । अद्यतन्यां दिप्रे सिचि अडागमे सिचो लुपि इडाभावे च अपात्, अपाताम्, अपा+अन् इति स्थिते—

सिज्विदोऽभुवः । ४ । २ । ९२ ।

सिचः प्रत्ययाद् विदश्च धातोः परस्यान. पुस् भवति । न तु भुवः । अपुः । अपाः, अपातम्, अपात । अपाम्, अपाव, अपाम । अथ शिष्यबुद्धिवैशद्यार्थमनिट्प्रकरणमुच्यते—

श्विश्रिडीशीयुरुक्षुक्ष्णुणुस्नुभ्यश्च वृगो वृङः ।
ऊद्दृदन्तयुजादिभ्यः स्वरान्ता धातवोऽपरे ॥ १ ॥
पाठ एकस्वराः स्युर्येऽनुस्वारेत इमे स्मृताः ।
द्विविधोऽपि शकिश्चैवं वचिर्विचिरिची पचिः ॥ २ ॥
सिञ्चतिर्मुचिरतोऽपि पृच्छति भ्रस्जिमस्जिभुजयो युजिर्यजिः ।
स्वञ्जिरञ्जिरुजयो निजिर्विजूः षञ्जिभञ्जिभजयः सृजत्यजी ॥ ३ ॥
स्कन्दिविद्यविद्लृवित्तयो नुदिः स्विद्यतिः शदिसदी भिदिच्छिदी ।
तुद्यदी पदिहदी खिदिक्षुदी राधिसाधिसुधयो युधिव्यधी ॥ ४ ॥

बन्धिबुध्यरुधयः क्रुधिक्षुधी सिध्यतिस्तदनु हन्तिमन्यती ।
आपिना तपिशपिक्षिपिछुपो लुम्पतिः सृपिलिपी वपिस्वपी ॥ ५ ॥
यभिरभिलभियमिरमिनमिगमयः क्रशिलिशिरुशिरिशिदिशतिदशयः ।
स्पशिमृशतिविशतिदशिशिष्लशुषयस्त्विषिपिपिविष्लकृषितुषिदुषि-
पुषयः ॥ ६ ॥
श्लिष्यतिर्द्विषिरतो घसिवसती रोहतिर्लुहिरिही अनिड् गदितौ ।
देग्धिदोग्धिलिहयो मिहिवहती नह्यतिर्दहिरिति स्फुटमनिटः ॥७॥

अनिट्कारिकायाः संक्षेपतोऽर्थ. प्रदर्श्यते—दर्शितात् परे ये स्वरान्ता धातवस्ते सर्वेऽनिट: स्युः, ये च दर्शिताः श्वि आदयस्ते सेटः, दीर्घोकारान्ते दीर्घकारान्ते च युजादौ च सर्वे सेटः । पाठे—धातुपाठेऽर्थादुपदेशावस्थायां ये एकस्वरा अनुस्वारेतश्च धातवस्ते सर्वेऽनिटो भवन्ति । व्यञ्जनान्ते तु ये दर्शितास्ते सर्वेऽनिटः स्युरन्ये सेट: स्युरिति ।

घ्रां गन्धोपादाने—वर्तमानकालविवक्षाया तिवि शवि 'श्रौति-कृवु' इत्यादिना जिघ्रादेशे जिघ्रति, जिघ्रत, जिघ्रन्ति। जिघ्रसि, जिघ्रथः, जिघ्रथ । जिघ्रामि, जिघ्रावः, जिघ्रामः। सप्तमी जिघ्रत्। पञ्चमी जिघ्रतु । ह्यस्तनी अडागमे अजिघ्रत्, अजिघ्रताम्, अजिघ्रन्। अजिघ्रः,अजिघ्रतम्, अजिघ्रत । अजिघ्रम्, अजिघ्राव, अजिघ्राम । परोक्षा—घ्रा+णव् द्वित्वे पूर्वस्य ह्रस्वे 'द्वितीयतुर्ययोः पूर्वौ' इति घकारस्य गकारे—

## गहोर्जः । ४ । १ । ४० ।

द्वित्वे सति पूर्वस्य गकारहकारयोर्जादेशो भवति । जघ्रा+णव् इति स्थिते 'आतो णव औ' इति णवः स्थाने औकारादेशे जघ्रौ । 'इडेत्पुसि चातो लुक्' इत्याकारस्य लुकि जघ्रतुः, जघ्रुः। जघ्रिथ जघ्राथ, जघ्रथुः, जघ्र । जघ्रौ, जघ्रिव, जघ्रिम । आशिषि— घ्रा+यात् इति स्थिते—

## संयोगादेर्वाऽऽशिष्येः । ४ । ३ । ९५ ।

संयोगादेरादन्तस्य धातोः क्ङिति आशिषि एकारो वा भवति । घ्रेयात्, घ्रेयास्ताम्, घ्रेयासुः । घ्रेयाः घ्रेयास्तम्, घ्रेयास्त । घ्रेयासम्, घ्रेयास्व, घ्रेयास्म । पक्षे घ्रायात, घ्रायास्ताम्, घ्रायासुः । श्वस्तनी—घ्राता, घ्रातारौ, घ्रातारः । घ्रातासि घ्रातास्थः घ्रातास्थ । घ्रातास्मि घ्रातास्वः घ्रातास्मः । भविष्यन्ती— घ्रास्यति, घ्रास्यतः, घ्रास्यन्ति । घ्रास्यसि, घ्रास्यथः, घ्रास्यथ । घ्रास्यामि, घ्रास्यावः, घ्रास्यामः । क्रियातिपत्तिः—अघ्रास्यत्, अघ्रास्यताम्, अघ्रास्यन् । अघ्रास्यः, अघ्रास्यतम्, अघ्रास्यत । अघ्रास्यम्, अघ्रास्याव, अघ्रास्याम । अद्यतन्याम्—

## धेघ्राशाच्छासो वा । ४ । ३ । ६७ ।

एभ्यः परस्य सिचो लुब् वा भवति परस्मैपदे । लुब्योगे चेड् न भवति । अघ्रात्, अघ्राताम्, 'सिजविदोऽभुवः' अघ्रुः । अघ्राः अघ्रातम्, अघ्रात । अघ्राम्, अघ्राव, अघ्राम । पक्षे—

**यमिरमिनम्यातः सोऽन्तश्च । ४ । ४ । ८६ ।**

एभ्य आकारान्तेभ्यश्च परस्य परस्मैपदे सिच आदिरिड् भवति । एषां च सोऽन्तः । अडागमे अघ्रा+स+इ+स+द् इति स्थिते—

**सः सिजस्तेर्दिस्योः । ४ । ३ । ६९ ।**

सिजन्तादस्तेश्च सकारान्ताद् धातोः परयोः दिस्योरादिरीकारो भवति ।

**इट ईति । ४ । ३ । ७१ ।**

इटः परस्य सिज ईति परे लुग् भवति । दीर्घे च कृते अघ्रासीद्, अघ्रासिष्टाम्, अघ्रासिषुः । अघ्रासीः, अघ्रासिष्टम्, अघ्रासिष्ट । अघ्रासिषम्, अघ्रासिष्व, अघ्रासिष्म । 'ध्मां शब्दाग्निसंयोगयोः'—धमादेशे धमति । धमेत् । धमतु । अधमत् । अध्मासीत्, अध्मासिष्टाम्, अध्मासिषुः । परोक्षायां द्वित्वे अनादिव्यञ्जनस्य लुकि ह्रस्वे चतुर्थस्य तृतीये णवश्चौकारे दध्मौ, आकारलोपे दध्मतुः, दध्मुः । दध्मिथ, दध्माथ, दध्मथुः, दध्म । दध्मौ, दध्मिव, दध्मिम । ध्मेयात्, ध्मायात् । ध्माता । ध्मास्यति । अध्मास्यत् । 'ष्ठां गतिनिवृत्तौ'—'श्रौतिकृवु—' इत्यादिना तिष्ठादेशे तिष्ठति । तिष्ठेत् । तिष्ठतु । अतिष्ठत । परोक्षायां 'षः सोऽष्ट्यैष्ठिवृष्वष्कः' इति सत्वे स्था+स्था+णव् इति स्थिते—

**अघोषे शिटः । ४ । १ । ४५ ।**

द्वित्वे सति पूर्वस्य शिटस्तत्सम्बन्धिन्येवाघोषे परे लुग् भवति। थकारस्य तकारे तस्थौ, तस्थतुः, तस्थुः। तस्थिथ तस्थाथ, तस्थथुः, तस्थ। तस्थौ, तस्थिव, तस्थिम। स्थेयात्। स्थाता। स्थास्यति। अस्थास्यत्। अद्यतन्याम्—अस्थात्, अस्थाताम्, अस्थुः। अस्थाः, अस्थातम्, अस्थात। अस्थाम्, अस्थाव, अस्थाम। ‘ म्नां अभ्यासे ’ मनादेशे मनति। मनेत्। मनतु। अमनत्। अम्नासीत्, अम्नासिष्टाम्, अम्नासिषु। अम्नासीः, अम्नासिष्टम्, अम्नासिष्ट। अम्नासिषम्, अम्नासिष्व, अम्नासिष्म। मम्नौ, मम्नतुः, मम्नुः। मम्निथ मम्नाथ। म्नायात्, म्नेयात्। म्नाता। म्नास्यति। अम्नास्यत्। ‘दां दाने’ यच्छादेशे यच्छति। यच्छेत्। यच्छतु। अयच्छत्। अद्यतन्या सिज्लुकि अदात्, अदाताम्, अदुः। अदाः, अदातम्, अदात। अदाम्, अदाव, अदाम। ददौ, ददतुः, ददुः। ददिथ ददाथ, ददथुः, दद। ददौ, ददिव, ददिम। देयात्, देयास्ताम्, देयासुः। दाता। दास्यति। अदास्यत्। ‘ जि ज्रि अभिभवे ’—जयति। जयेत्। जयतु। अजयत्। अद्यतन्याम् सिचि अडागमे ईति च कृते

**सिचि परस्मै समानस्याङिति। ४। ३। ४४।**

समानान्तस्य धातोः वृद्धिर्भवति, ङिद्भिन्ने परस्मैपदविषये च सिचि परे। षत्वे अजैषीत्, अजैष्टाम्, अजैषुः। अजैषीः, अजैष्टम्, अजैष्ट। अजैषम्, अजैष्व, अजैष्म। परोक्षायां द्वित्वे

जेर्गिः सन्परोक्षयोः । ४ । १ । ३५ ।

द्वित्वे सति पूर्वस्मात् परस्य जेर्गिर्भवति सन्परोक्षयोः परयोः । जि+गिं+अ इति स्थिते—

नामिनोऽकलिहलेः । ४ । ३ । ५१ ।

कलिहलिवर्जितस्य नाम्यन्तस्य ञिति णिति प्रत्यये परे वृद्धिर्भवति । जिगाय, जिग्यतुः, जिग्युः । जिगयिथ जिगेथ जिग्यथुः, जिग्य । जिगाय, जिगय जिग्यिव जिग्यिम ।

दीर्घश्च्वियङ्यक्क्येषु च । ४ । ३ । १०८ ।

धातोरन्त्यस्वरस्य दीर्घो भवति, च्वौ यङि यकि क्येषु यकारादावाशिषि च परेषु । जीयात्, जीयास्ताम्, जीयासुः । जेता, जेतारौ, जेतारः । जेष्यति, जेष्यतः, जेष्यन्ति । अजेष्यत्, अजेष्यताम्, अजेष्यन् । ज्रयति । ज्रयेत् । ज्रयतु । अज्रयत् । अज्रैषीत् । जिज्राय जिज्रियतुः जिज्रियुः । ज्रीयात् । ज्रेता । ज्रेष्यति । अज्रेष्यत् । 'क्षि क्षये' क्षयति । क्षयेत् । क्षयतु । अक्षयत् । अक्षैषीत्, अक्षैष्टाम्, अक्षैषुः । चिक्षाय चिक्षियतुः चिक्षियुः । क्षीयात् । क्षेता । क्षेष्यति । अक्षेष्यत् । 'इं गतौ' अयति । अयेत् । अयतु ।

स्वरादेस्तासु । ४ । ४ । ३१ ।

स्वरादेर्धातोर्वृद्धिर्भवति । अद्यतनी-ह्यस्तनी-क्रियातिपत्तिषु

परासु । आयत् आयताम् आयन् । ऐषीत्, ऐष्टम्, ऐषुः ।

परोक्षायां द्वित्वे—

पूर्वस्यास्वे स्वरे य्वोरियुव् । ४ । १ । ३७ ।

द्वित्वे सति यः पूर्वस्तत्सम्बन्धिनोरिवर्णोवर्णयोरस्वे स्वरे परे इयुवौ भवत. । इयाय ' योऽनेकस्वरस्य ' इयतुः, इयुः । इययिथ, इयेथ, इयथुः, इय । इयाय, इयय इयिव, इयिम । एता । एष्यति । ऐष्यत् । 'दुं द्रुं शुं स्रुं गतौ' । दवति । दवेत् । दवतु । अदवत् । दुदाव, दुदुवतुः, दुदुवु । दुदविथ दुदोथ । दूयात् । दोता । दोष्यति । अदोष्यत् । अदौषीत् । एवं द्रवति । द्रवेत् । द्रवतु । अद्रवत् । दुद्राव । द्रूयात् । द्रोता । द्रोष्यति । अद्रोष्यत् ।

अद्यतन्याम्—

णिश्रिद्रुस्रुकमः कर्तरि ङः । ३ । ४ । ५८ ।

ण्यन्तात् श्रिद्रुस्रुकमुभ्यश्च धातोः कर्तर्यद्यतन्यां ङो भवति । अदुद्रुवत् अदुद्रुवताम्, अदुद्रुवन् । अदुद्रुवः, अदुद्रुवतम्, अदुद्रुवत । अदुद्रुवम्, अदुद्रुवाव, अदुद्रुवाम । शवति । शवेत् । शवतु । अशवत् । शुशाव । शूयात् । शोता । शोष्यति । अशोष्यत् । अशौषीत् । स्रवति । स्रवेत् । स्रवतु । अस्रवत् । सुस्राव । स्रूयात् । स्रोता । स्रोष्यति । अस्रोष्यत् । असुस्रुवत, असुस्रुवताम्, असुस्रुवन् । 'ध्रुं स्थैर्ये' । ध्रवति । ध्रवेत् । ध्रवतु । अध्रवत् । दुध्राव । ध्रूयात् । ध्रोता । ध्रोष्यति । अध्रोष्यत् । अध्रौषीत् । 'सुं प्रसवैश्वर्ययोः' ।

सवति। सवेत्। सवतु। असवत्। सुसाव। सूयात्। सोता।
सोष्यति। असोष्यत्। अद्यतन्याम्—

धूगसुस्तोः परस्मै। ४। ४। ८५।

एभ्यः परस्य परस्मैपदविषये सिच आदिरिड् भवति। असावीत्, असाविष्टाम्, असाविषुः। असावीः, असाविष्टम्, असाविष्ट। असाविषम्, असाविष्व, असाविष्म। 'स्मृं चिन्तायाम्'—स्मरति। स्मरेत्। स्मरतु। अस्मरत्। परोक्षायां द्वित्वे

ऋतोऽत्। ४। १। ३८।

द्वित्वे सति पूर्वस्य ऋकारस्यादित्यादेशो भवति। सस्मार।

संयोगादृदर्त्तेः। ४। ३। ९।

संयोगात् परो य ऋत् तदन्तस्यार्तेश्च धातोः परोक्षायां गुणो भवति। न तु कोपलक्षितायाम्। सस्मरतुः। सस्मरुः।

ऋतः। ४। ४। ७९।

ऋदन्तात् तृजनित्यानिटो विहितस्य थव आदिरिड् न भवति। सस्मर्थ, सस्मरथुः, सस्मर। सस्मार सस्मर, सस्मरिव, सस्मरिम।

क्ययङाशीर्ये। ४। ३। १०।

संयोगात् परो य ऋकारस्तदन्तस्यार्त्तेश्च धातोः क्ये यङि

आशीर्ये च परे गुणो भवति । स्मर्यात्, स्मर्यास्ताम्, स्मर्यासुः । स्मर्ता ।

हनृतः स्यस्य । ४ । ४ । ४९ ।

हन्तेः ऋदन्ताच्च धातोः परस्य स्यप्रत्ययस्यादिरिड् भवति । स्मरिष्यति । अस्मरिष्यत् । अद्यतन्यां सिचि 'सिचि परस्मै समानस्याङिति' इति वृद्धौ अस्मार्षीत्, अस्मार्ष्टाम्, अस्मार्षुः । अस्मार्षीः, अस्मार्ष्टम्, अस्मार्ष्ट । अस्मार्षम्, अस्मार्ष्व, अस्मार्ष्म । 'गॄ घॄ सेचने' । गरति । गरेत् । गरतु । अगरत् । जगार, जग्रतुः, जग्रुः । जगर्थ, जग्रथुः, जग्र । जगार जगर, जग्रिव जग्रिम ।

रिः शक्याशीर्ये । ४ । ३ । ११० ।

ऋदन्तस्य धातोः ऋतः शे क्ये आशीर्ये च परे रिः भवति । ग्रियात् । गर्ता । गरिष्यति । अगरिष्यत् । अगार्षीत् । घरति । घरेत् । घरतु । अघरत् । जघार । घ्रियात् । घर्ता । घरिष्यति । अघरिष्यत् । अघार्षीत् । 'औस्वॄं शब्दोपतापयोः' । स्वरति । स्वरेत् । स्वरतु । अस्वरत् । सस्वार, सस्वरतुः, सस्वरिथ, सस्वरिव सस्वरिम । स्वर्यात्, स्वर्यास्ताम्, स्वर्यासुः ।

धूगौदितः । ४ । ४ । ३८ ।

धूग्धातोरौदितश्च परस्य स्ताद्यशित आदिरिड् वा भवति । स्वरिता स्वर्ता । स्यप्रत्यये तु परत्वाद् नित्यमिड् । स्वरिष्यति । अस्वरिष्यत् । अद्यतन्यामिडागमे अस्वारीत्, अस्वारिष्टाम्,

अस्वारिषुः । इडभावे अस्वार्षीत्, अस्वार्ष्टाम्, अस्वार्षुः इत्यादयः। 'ध्वृं वरणे'। ध्वरति। ध्वरेत्। ध्वरतु। अध्वरत्। दध्वार, दध्वरतुः, दध्वरुः। दध्वर्थ। दध्वरिव। दध्वरिम। ध्वर्यात्। ध्वर्ता। ध्वरिष्यति। अध्वरिष्यत्। ३ ध्वार्षीत्। 'सृं गतौ' सरति। सरेत्। सरतु। असरत्। ससार। स्रियात्। सर्ता। सरिष्यति। असरिष्यत्।

**सर्त्यर्त्तेर्वा । ३ । ४ । ६१ ।**

आभ्यामङ् वा भवति कर्तर्यद्यतन्यां परायाम्। असरत्, असरताम्, असरन्। असरः, असरतम्, असरत। असरम्, असराव, असराम। पक्षे असार्षीत्, असार्ष्टाम्, असार्षुः। असार्षीः, असार्ष्टम्, असार्ष्ट। असार्षम्, असार्ष्व, असार्ष्म। 'ऋं प्रापणे च' अरति। अरेत्। अरतु। आरत्। परोक्षायां द्वित्वे 'ऋतोऽत्' इत्यत्त्वे

**अस्यादेराः परोक्षायाम् । ४ । १ । ६८ ।**

परोक्षाया द्वित्वे पूर्वस्यादेरकारस्याऽऽकारो भवति। उत्तरस्य वृद्धौ 'समानानाम्' इति दीर्घे आर। आरतुः, आरुरित्यादौ तु गुणः।

**ऋवृव्येऽद इट् । ४ । ४ । ८० ।**

एभ्यः परस्य थव आदिरिड् भवति। आरिथ, आरथुः, आर। अर्यात। अर्ता। अरिष्यति। आरिष्यत्। अद्यतन्यां

' सर्त्यर्त्तेर्वा ' आरत्, आरताम्, आरन् । पक्षे आर्षीत्, आर्ष्टाम्, आर्षुः । 'तॄ प्लवनतरणयोः' । तरति । तरेत् । तरतु । अतरत् । ततार ।

स्कच्छृतोऽकि परोक्षायाम् । ४ । ३ । ८ ।

स्कृ-ऋच्छ-ऋदन्तानां धातूनां सम्बन्धिनो नामिनो गुणो भवति परोक्षायां, न तु कोपलक्षितायाम् । तर्+अतुस्

तॄत्रपफलभजाम् । ४ । १ । २५ ।

एषां स्वरस्यैद् भवति अवित्परोक्षायां सेट्थवि च परे, न तु द्विः । तेरतुः । तेरुः । तेरिथ, तेरथुः, तेर । ततार, ततर तेरिव तेरिम ।

ॠतां क्ङितीर् । ४ । ४ । ११६ ।

ॠदन्तस्य धातोः किति ङिति च परे ईरादेशो भवति । तीर्यात्, तीर्यास्ताम् ।

वृतो नवाऽनाशीःसिच्परस्मै च । ४ । ४ । ३५ ।

वृभ्यामृदन्तेभ्यश्च परस्येटो दीर्घो वा भवति, परोक्षायामाशिषि परस्मैपदे सिचि च परे न स्यात् । तरीता, तरिता । तरीष्यति, तरिष्यति । अतरिष्यत्, अतरीष्यत् । अतारीत्, अतारिष्टाम्, अतारिषुः । 'ट्धे पाने' । धयति । धयेत । धयतु । अधयत ।

## आत् सन्ध्यक्षरस्य । ४ । २ । १ ।

सन्ध्यक्षरस्य धातोराद् भवति ।

## न शिति । ४ । २ । २ ।

सन्ध्यक्षरस्य धातोः शिद्विषये आ न भवति । दधौ । 'इडेत्पुसि चातो लुक्' दधतुः, दधुः । दधिथ दधाथ । दधिव । दधिम । 'गापास्थासादामाहाकः' धेयात् । धाता । धास्यति । अधास्यत् । अद्यतन्या 'ट्धेघ्राशाच्छासो वा' अधात्, अधाताम्, अधुः । अधाः, अधातम्, अधात । अधाम्, अधाव, अधाम । सिज्लुगभावे अधासीत्, अधासिष्टाम्, अधासिषुः । अधासीः, अधासिष्टम्, अधासिष्ट । अधासिषम्, अधासिष्व, अधासिष्म ।

## ट्धेश्वेर्वा । ३ । ४ । ५९ ।

आभ्यां कर्तर्यद्यतन्या ङो वा भवति । अदधत्, अदधताम्, अदधन् । अदधः, अदधतम्, अदधत । अदधम्, अदधाव, अदधाम । पक्षे पूर्ववत् । 'दैव् शोधने' । दायति । दायेत् । दायतु । अदायत् । ददौ, ददतुः, ददुः । ददिथ ददाथ । दासञ्ज्ञाऽभावादेत्त्वाभावः । दायात् । दाता । दास्यति । अदास्यत् । अदासीत् । 'ध्यै चिन्तायाम्' ध्यायति । ध्यायेत् । ध्यायतु । अध्यायत् । दध्यौ । ध्यायात्, ध्येयात् । ध्याता । ध्यास्यति । अध्यास्यत् । अध्यासीत् । 'ग्लै हर्षक्षये' । ग्लायति । ग्लायेत् । ग्लायतु । अग्लायत् । जग्लौ,

जग्लतुः, जग्लुः । ग्लायात्, ग्लेयात् । ग्लाता । ग्लास्यति । अग्लास्यत् । अग्लासीत् । 'म्लै गात्रविनामे'। म्लायति । म्लायेत् । म्लायतु । अम्लायत् । मम्लौ । म्लायात्, म्लेयात् । म्लाता । म्लास्यति । अम्लास्यत् । अम्लासीत् । 'द्यै न्यङ्करणे' । द्यायति । द्यायेत् । द्यायतु । अद्यायत् । दद्यौ । द्यायाद्, द्येयात् । द्याता । द्यास्यति । अद्यास्यत् । अद्यासीत् । एवं 'द्रै स्वप्ने' । 'ध्रै तृप्तौ' । 'कै गै रै शब्दे' । कायति । कायेत् । कायतु । अकायत् । चकौ । कायात् । काता । कास्यति । अकास्यत् । अकासीत् । गायति । गायेत् । रायति । रायेत् । 'ष्ट्यै स्त्यै संघाते च' प्रथम षोपदेश, द्वितीयस्त्वसोपदेशः। स्त्यायति । स्त्यायेत् । स्त्यायतु । अस्त्यायत् । तस्त्यौ । प्रष्ट्यायात, प्रष्ट्येयात । प्रस्त्यायात, प्रस्त्येयात् । 'क्षै जैं सै क्षये' । क्षायति । क्षायेत् । क्षायतु । अक्षायत् । चक्षौ । क्षायात्, क्षेयात् । क्षाता । क्षास्यति । अक्षास्यत् । अक्षासीत् । एवं 'श्रै सै पाके' । श्रायति । श्रायेत् । श्रायतु । अश्रायत् । शश्रौ । श्रायात्, श्रेयात् । श्राता । श्रास्यति । अश्रास्यत् । अश्रासीत् । 'पै ओवैं शोषणे' पायति । पायेत । पायतु । अपायत् । पपौ । पेयात् । पाता । पास्यति । अपास्यत् । अपासीत् । वायति । वायेत् । वायतु । अवायत् । ववौ । वायात् । वाता । वास्यति । अवास्यत । अवासीत् । 'ष्णै वेष्टने' । स्नायति । सस्नौ । अस्नासीत् । 'फक्क नीचैर्गतौ' । फक्कति । फक्केत् । फक्कतु । अफक्कत् । पफक्क, पफक्कतुः, पफक्कुः । फक्क्यात । फक्किता । फक्किष्यति । अफक्किष्यत ।

अफक्कीत् । 'तक हसने' । तकति । तकेत् । तकतु । अतकत् । तताक ।

**अनादेशादेरेकव्यञ्जनमध्येऽतः । ४ । १ । २४ ।**

अनादेशादिर्यो धातुस्तत्सम्बन्धिनः स्वरस्यातोऽसहायव्यञ्जनमध्यगतस्य अवित्परोक्षायां सेटि थवि च परे एकारो भवति । तेकतुः । तेकुः । तेकिथ तेकथुः तेक । तताक, ततक तेकिव तेकिम । तक्यात् । तकिता । तकिष्यति । अतकिष्यत् । अद्यतन्याम्—

**व्यञ्जनादेर्वोपान्त्यस्यातः । ४ । ३ । ४७ ।**

व्यञ्जनादेर्धातोरुपान्त्यस्यात. परस्मैपदे सेटि सिचि परे वृद्धिर्वा भवति । अताकीत्, अतकीत्, अतकिषुः । 'तकु कृच्छ्रजीवने'—

**उदितः स्वरान्नोऽन्तः । ४ । ४ । ९८ ।**

उदितो धातोः स्वरात् परो नोऽन्तो भवति । तङ्कति । तङ्केत् । तङ्कतु । अतङ्कत् । ततङ्क, ततङ्कतुः, ततङ्कुः । तङ्क्याद् उदित्त्वाद् 'नो व्यञ्जनस्यानुदितः' इति लुग् न भवति । तङ्किता । तङ्किष्यति । अतङ्किष्यत् । अतङ्कीत् । 'शुक गतौ' । शुकति । शुशोक शुशुकतुः शुशुकुः । अशोकीत् । 'बुक्क भषणे' बुक्कति । अबुक्कीत् । 'उखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः'—

## लघोरुपान्त्यस्य । ४ । ३ । ४ ।

धातोरुपान्त्यस्य लघोर्नामिनो गुणो भवति, अकिति अङिति च प्रत्यये परे। ओखति । ओखेत् । ओखतु । औखत् । उवोख ऊखतु· ऊखु· । उवोखिथ । ऊखथुः । उख्यात् । ओखिता ओखिष्यति । औखिष्यत् । औखीत्, औखिष्टम्, औखिषुः । ऋदित्करणं मा भवानोखिखत् इत्यादौ ह्रस्व भावार्थम् । लाखति । लाखेत् । लाखतु । अलाखत् । ललाख । लाख्यात् । लाखिता । लाखिष्यति । अलाखिष्यत् । अलाखीत । 'शाखृ श्लाखृ व्याप्तौ'। शाखति । शाखेत् । शाखतु । अशाखत् । शशाख । शाख्यात् । शाखिता । शाखिष्यति । अशाखिष्यत । अशाखीत् । 'उख नख णख वख मख रख लख मखु रखु लखु रिखु इख ईखु गतौ' । नखधातुर्नोपदेशस्तेन प्रनखति । णखधातुस्तु णोपदेशस्तस्य 'पाठे धात्वादेर्णो नः' इति नखति । नखेत् । नखतु । प्रणखति । प्रणखेत् । प्रणखतु । 'अंदुरुपसर्गान्तरो णहिनुमीनानेः' इति णत्वम् । प्राणखत् ।

## ञ्णिति । ४ । ३ । ५० ।

धातोरुपान्त्यस्यातोऽकारस्य वृद्धिर्भवति, ञिति णिति च प्रत्यये । ननाख । प्रणनाख । नेखतुः । नेखुः । प्रणेखतुः । प्रणेखुः । प्रणख्यात् । प्रणखिता । प्रणखिष्यति । प्राणखिष्यत । प्राणखीत् । अनखीत, अनाखीत् । प्राणाखीत् । मङ्खति । मङ्खेत् ।

मङ्खतु । अमङ्खत् । ममङ्ख । मङ्ख्यात् । मङ्खिता । मङ्खिष्यति । अमङ्खिष्यत् । अमङ्खीद् । ईङ्खति । ईङ्खेत् । ईङ्खतु । ऐङ्खत् । परोक्षायाम्—ईङ्ख+णव् इति स्थिते

**गुरुनाम्यादेरनृच्छूर्णोः । ३ । ४ । ४८ ।**

गुरुर्नामी आदिर्यस्य तस्मादृच्छूर्णुवर्जाद् धातोः परस्याः परोक्षाया आम् भवति । आमन्ताच्च परे परोक्षान्ताः कृभ्वस्तयः प्रयुज्यन्ते ।

**आमः कृगः । ३ । ३ । ७५ ।**

आमः परादनुप्रयुक्तात् कृग आम एव प्राग् यो धातुस्तस्माद्दिव कर्तर्यात्मनेपदं भवति । भवति च न भवती यर्थः । आमः प्राक् धातुर्यदि परस्मैपदी तदाऽनुप्रयुज्यमानात् कृगः परस्मैपदं, यदि चात्मनेपदी तदाऽऽत्मनेपदं, यद्युभयपदी तदोभयं भवतीत्यर्थः । ईङ्ख्+आम्+कृ+कृ+णव् इति स्थिते 'ऋतोऽत्' इत्यत्त्वे 'कङश्चञ्' इति चत्वे वृद्धौ ईङ्खाञ्चकार, ईङ्खाञ्चक्रतुः, ईङ्खाञ्चक्रुः । ईङ्खाञ्चकर्थ, ईङ्खाञ्चक्रथुः, ईङ्खाञ्चक्र । ईङ्खाञ्चकार, ईङ्खाञ्चकर, ईङ्खाञ्चकृव ईङ्खाञ्चकृम । भुव्यनुप्रयुज्यमाने ईङ्खाम्बभूव, ईङ्खाम्बभूवतुः, ईङ्खाम्बभूवुः । ईङ्खाम्बभूविथ, ईङ्खाम्बभूवथुः, ईङ्खाम्बभूव । ईङ्खाम्बभूव, ईङ्खाम्बभूविव, ईङ्खाम्बभूविम । अस्त्यनुप्रयुज्यमाने—ईङ्खामास, ईङ्खामासतुः ईङ्खामासुः । ईङ्खामासिथ, ईङ्खामासथुः, ईङ्खामास । ईङ्खामास, ईङ्खामासिव,

ईङ्खामासिम । ईङ्ख्यात् । ईङ्खिता । ईङ्खिष्यति । ऐङ्खिष्यत् । ऐङ्खीद् । 'वल्ग रगु लगु तगु श्रगु श्लगु अगु वगु मगु स्वगु इगु उगु रिगु लिगु गतौ' । वल्गति । वल्गेत् । वल्गतु । अवल्गत् । ववल्ग । वल्ग्यात् । वल्गिता । वल्गिष्यति । अवल्गिष्यत् । अवल्गीत् । रङ्गति । रङ्गेत् । रङ्गतु । अरङ्गत् । ररङ्ग । रङ्ग्यात् । रङ्गिता । रङ्गिष्यति । अरङ्गिष्यत् । अरङ्गीत । इङ्गति । इङ्गेत । इङ्गतु । ऐङ्गत् । परोक्षाया गुरुनाम्यादित्वाद् इङ्गाञ्चकार, इङ्गाञ्चक्रतुः, इङ्गाञ्चक्रुः । इङ्गाम्बभूव । इङ्गामास । इङ्ग्यात् । इङ्गिता । इङ्गिष्यति । ऐङ्गिष्यत । ऐङ्गीत् । उङ्गति । उङ्गेत् । उङ्गतु । औङ्गत् । उङ्गाञ्चकार । उङ्गाम्बभूव । उङ्गामास । उङ्ग्यात् । उङ्गिता । उङ्गिष्यति औङ्गिष्यत् । औङ्गीत । अत्र सर्वत्र उदित्त्वान्नोन्ते कृते नकारस्य 'म्ना धुड्वर्गे' इति निमित्तस्यैवाऽन्त्यो भवति, केषांचिन्मतेऽनुस्वारोऽपि । तङ्गति । तङ्गेत् । तङ्गतु । अतङ्गत् । ततङ्ग । तङ्ग्यात । तङ्गिता । तङ्गिष्यति । अतङ्गिष्यत् । अतङ्गीत् । 'त्वगु कम्पने च' । त्वङ्गति । अत्वङ्गत । तत्वङ्ग । अत्वङ्गीत । 'युगु जुगु वुगु वर्जने' । युङ्गति । युङ्गेत् । युङ्गतु । अयुङ्गत । युयुङ्ग । युङ्ग्यात । युङ्गिता । युङ्गिष्यति । अयुङ्गिष्यत् । अयुङ्गीत् । 'गग्घ हसने' । गग्घति । गगग्घ । अगग्घीत् । 'दघु पालने' । दङ्घति । दङ्घेत् । दङ्घतु । अदङ्घत् । ददङ्घ । दङ्घ्यात् । दङ्घिता । दङ्घिष्यति । अदङ्घिष्यत् । अदङ्घीत् । 'शिघु आघ्राणे' । 'मघु मण्डने' ।

लघ लघु शोषणे । शिङ्घति । शिङ्घेत् । शिङ्घतु । अशिङ्घत् । मङ्घति । लङ्घति । लघति । लघेत । लघतु । अलघत् । ललाघ, लेघतुः, लेघुः । लेघिथ, लेघथुः, लेघ । ललाघ ललघ, लेघिव, लेघिम । लघ्यात् । लघिता । लघिष्यति । अलघिष्यत् । अलाघीत्, अलघीत । शुच शोके । शोचति । शोचेत् । शोचतु । अशोचत । शुशोच । शुच्यात । शोचिता । शोचिष्यति । अशोचिष्यत् । अशोचीत् । 'कुच शब्दतारे' । 'क्रुञ्च गतौ' । क्रुञ्चति । चक्रुञ्च । अक्रुञ्चीत् । क्रुच्यात । 'कुञ्च कौटिल्याल्पीभावयोः' । 'लुञ्च अपनयने' अपनयनम्—केशादीना दूरीकरणम् । लुञ्चति । लुञ्चेत् । लुञ्चतु । अलुञ्चत् । लुलुञ्च ।

**इन्ध्यसंयोगात् परोक्षा किद्वत् । ४ । ३ । २१ ।**

इन्धिधातोरसंयोगान्ताच्च परा विद्भिन्ना परोक्षा किद्वद् भवति । लुलुञ्चतुः, लुलुञ्चुः । लुलुञ्चिथ । लुच्यात् । लुञ्चिता । लुञ्चिष्यति । अलुञ्चिष्यत । अलुञ्चीत् । 'अर्च पूजायाम्' । अर्चति । अर्चेत् । अर्चतु । आर्चत् । परोक्षायाम्—

**अनातो नश्चान्त ऋदाद्यशौसंयोगस्य । ४ । १ । ६९ ।**

ऋदादेरश्नातेः संयोगान्तस्य च परोक्षायां द्वित्वे सति पूर्वस्यात्स्थानादन्यस्यास्य आ भवति, कृताकाराद् नोऽन्तश्च । आनर्च, आनर्चतुः, आनर्चुः । आनर्चिथ, आनर्चथुः । आनर्च । आनर्चिव,

आनर्चिम । अर्च्यात् । अर्चिता । अर्चिष्यति । आर्चिष्यत् । आर्चीत् । अञ्चू गतौ । ऊदित्करणात् क्त्वाप्रत्यये इड्विकल्पः । अञ्चति । अञ्चेत् । अञ्चतु । आञ्चत् । आनञ्च, आनञ्चतुः, आनञ्चुः । अच्यात् । अञ्चिता । अञ्चिष्यति । आञ्चिष्यत् । आञ्चीत् । वञ्चू चञ्चू तञ्चू त्वञ्चू मञ्चू मुञ्चू म्रुञ्चू म्रुचू म्लुचू ग्लुचू ग्लुञ्चू षस्ज गतौ । वञ्चति । वञ्चेत् । वञ्चतु । अवञ्चत् । ववञ्च, ववञ्चतु, ववञ्चु । वच्यात् । वञ्चिता । वञ्चिष्यति । अवञ्चिष्यत् । अवञ्चीत् । चञ्चति । तञ्चति । त्वञ्चति । मञ्चति । मुञ्चति । म्रुञ्चति । म्रोचति । म्रोचेत् । म्रोचतु । अम्रोचत् । मुम्रोच । म्रुच्यात् । म्रोचिता । म्रोचिष्यति । अम्रोचिष्यत् । अद्यतन्याम्—

ऋदिच्छ्विस्तम्भूम्रुचूम्लुचूग्रुचूग्लुचूग्लुञ्चूञो वा ॥ ३ । ४ । ६५ ॥

ऋदितो धातोः श्व्यादेश्च कर्तर्यद्यतन्यां परस्मैपदेऽङ् वा भवति । अम्रुचत् । अम्रोचीत् । म्लोचति । म्लोचेत् । म्लोचतु । अम्लोचत् । मुम्लोच । म्लुच्यात् । म्लोचिता । म्लोचिष्यति । अम्लोचिष्यत् । अम्लुचत्, अम्लोचीत् । ग्लोचति । ग्लोचेत् । ग्लोचतु । अग्लोचत् । जुग्लोच । ग्लुच्यात् । ग्लोचिता । ग्लोचिष्यति । अग्लोचिष्यत् । अग्लुचत्, अग्लोचीत् । ग्लुञ्चति । ग्लुञ्चेत् । ग्लुञ्चतु । अग्लुञ्चत् । जुग्लुञ्च । ग्लुच्यात् । ग्लुञ्चिता ।

ग्लुञ्चिष्यति । अग्लुञ्चिष्यत् । अङि अग्लुचत् अग्लुञ्चीत् । ग्रुचू ग्लुचू स्तेये । ग्रोचति । ग्रोचेत् । ग्रोचतु । अग्रोचत् । जुग्रोच । ग्रुच्यात् । ग्रोचिता । ग्रोचिष्यति । अग्रोचिष्यत् । अग्रुचत्, अग्रोचीत् । म्लेच्छ अव्यक्तायां वाचि । म्लेच्छति । म्लेच्छेत् । म्लेच्छतु । अम्लेच्छत् । मम्लेच्छ । म्लेच्छ्यात् । म्लेच्छिता । म्लेच्छिष्यति । अम्लेच्छिष्यत् । अम्लेच्छीत् । लच्छ लाच्छि लक्षणे । लच्छति । लच्छेत् । लच्छतु । अलच्छत् । ललच्छ । लच्छ्यात् । लाञ्छति । लाञ्छेत् । लाञ्छतु । अलाञ्छत् । ललाञ्छ । अलाञ्छीत् । वाछि वाञ्छायाम् । वाञ्छति । वाञ्छेत् । वाञ्छतु । अवाञ्छत् । ववाञ्छ । वाञ्छ्यात् । वाञ्छिता । वाञ्छिष्यति । अवाञ्छिष्यत् । अवाञ्छीत् । आछि आयामे । आञ्छति । आञ्छेत् । आञ्छतु । आञ्छत् । आञ्छ, आञ्छतुः, आञ्छुः । आञ्छ्यात् । आञ्छीत् । ह्रीच्छ लज्जायाम् । ह्रीच्छति । ह्रीच्छेत् । ह्रीच्छतु । अह्रीच्छत् । जिह्रीच्छ । अह्रीच्छीत् । मूर्च्छा मोहनसमुच्छ्राययोः । मूर्च्छति । मूर्च्छेत् । मूर्च्छतु । अमूर्च्छत् । मुमूर्च्छ । मूर्च्छ्यात् । मूर्च्छिता । मूर्च्छिष्यति । अमूर्च्छिष्यत् । अमूर्च्छीत् । स्फूर्च्छा स्मूर्च्छा विस्मृतौ । युछ प्रमादे । युच्छति । युच्छेत् । युच्छतु । अयुच्छत् । युयुच्छ । युच्छ्यात् । युच्छिता । युच्छिष्यति । अयुच्छिष्यत् । अयुच्छीत् । इति छान्ता धातवः । धृज धृजि ध्वज ध्वजि ध्रज ध्रजि वज व्रज षस्ज गतौ । धर्जति । धर्जेत् । धर्जतु ।

अधर्जीत् । दधर्ज । धृज्यात् । धर्जिता । धर्जिष्यति । अधर्जिष्यत् । अधर्जीत् । धृञ्जति । धृञ्जेत् । धृञ्जतु । अधृञ्जत् । दधृञ्ज । धृञ्ज्यात् । धृञ्जिता । धृञ्जिष्यति । अधृञ्जिष्यत् । अधृञ्जीत् । ध्वजति । दध्वज । अध्वाजीत् अध्वजीत् । ध्वञ्जति । अध्वञ्जीत् । ध्रजति । अध्रजीत् अध्राजीत् । ध्रञ्जति । अध्रञ्जीत् । वजति । वजतु । ववाज, ववजतु, ववजुः । अवाजीत् अवजीत् । व्रजति । व्रजेत् । व्रजतु । अव्रजत् । वव्राज, वव्रजतुः, वव्रजुः । व्रज्यात् । व्रजिता । व्रजिष्यति । अव्रजिष्यत् । अद्यतन्यां 'व्यञ्जनादेर्वोपान्त्यस्यातः' इति वा वृद्धौ प्राप्तायाम्—

वदव्रजलः । ४ । ३ । ४८ ॥

वदव्रजोर्लकाररकारान्तयोश्च धातोरुपान्त्यस्याकारस्य परस्मैपदे सेटि सिचि परे वृद्धिर्भवति । अव्राजीत्, अव्राजिष्टाम्, अव्राजिषुः । अव्राजीः, अव्राजिष्टम्, अव्राजिष्ट । अव्राजिषम्, अव्राजिष्व, अव्राजिष्म । सज्जति । सज्जेत् । सज्जतु । असज्जत् । ससज्ज । सज्ज्यात् । सज्जिता । सज्जिष्यति । असज्जिष्यत् । असज्जीत् । अज क्षेपणे च । अजति । अजेत् । अजतु । आजत् ।

अघञ्क्यबलच्यजेर्वी । ४ । ४ । २ ।

घञ्-क्यबलच्वर्जितेऽशिति विषये अजेर्वी इत्यादेशो भवति । अनुस्वारः इड्निषेधार्थः । विवाय, विव्यतुः, विव्युः । विवयिथ

विवेथ, विव्यथुः, विव्य । विवाय विवय । विव्यिव । विव्यिम । वीयात् । वेता । वेष्यति । अवेष्यत् । अवैषीत् । तृप्रत्यये अनप्रत्यये च परे 'त्रने वा' इति विकल्पः—प्रवेता प्राजिता । अन्ये तु अनप्रत्यये यकाररहिते व्यञ्जनादौ च सर्वत्र विकल्पमिच्छन्ति। तन्मते थवि आजिथ विवयिथ विवेथ । आजिव, विव्यिव । आजिम, विव्यिम । अजिता, वेता । अजिष्यति, वेष्यति इत्यादौ रूपद्वयम् । कुजू खुजू स्तेये । कोजति । कोजेत् । कोजतु । अकोजत् । चुकोज । अकोजीत् । खोजति । चुखोज । अखोजीत् । अर्ज सर्ज अर्जने । अर्जति । आनर्ज । आर्जीत् । सर्जति । ससर्ज । असर्जीत् । कर्ज व्यथने । खर्ज मार्जने च । खर्जति । चखर्ज । अखर्जीत् । खज मन्थे । खजु गतिवैकल्ये । खञ्जति । खञ्जतु । अखञ्जत् । चखञ्ज । खञ्ज्यात् । खञ्जिता । खञ्जिष्यति । अखञ्जिष्यत् । अखञ्जीत् । एजृ कम्पने एजति । एजेत् । एजतु । ऐजत् । एजाञ्चकार । एजाम्बभूव । एजामास । एज्यात् । एजिता । एजिष्यति । ऐजिष्यत् । ऐजीत् । टुओस्फूर्जा वज्रनिर्घोषे । ट्वित्करणमथुप्रत्ययार्थम् । ओदित्करणं क्तप्रत्ययस्य नत्वार्थम् । स्फूर्जति । स्फूर्जेत् । स्फूर्जतु । अस्फूर्जत् । अस्फूर्जीत् । क्षीज कूज गुज गुजु अव्यक्तशब्दे । गुञ्जति । गुञ्जेत् । गुञ्जतु । अगुञ्जत् । जुगुञ्ज । गुञ्ज्यात् । गुञ्जिता । गुञ्जिष्यति । अगुञ्जिष्यत् । अगुञ्जीत् । लज लजु तर्ज भर्त्सने । तर्जति । तर्जेत् । तर्जतु । अतर्जत् । ततर्ज । अतर्जीत् । लाज लाजु भर्जने च । लाजति । ललाज । अलाजीत् ।

लाञ्जति । लाञ्जेत् । लाञ्जतु । अलाञ्जत् । ललाञ्ज । लाञ्ज्यात् । लाञ्जिता । लाञ्जिष्यति । अलाञ्जिष्यत् । अलाञ्जीत् । जज जजु युद्धे । जजति । जजाज । अजाजीत् ,अजजीत् । जञ्जति । जञ्जेत् । जजञ्ज । अजञ्जीत् । तुज हिंसायाम् । तुजु बलने च । तुञ्जति । तुतुञ्ज । अतुञ्जीत् । गर्ज गजु गृज गृजु मुज मुजु मृज मृजु मज शब्दे । गज मदने च । त्यजं हानौ । त्यजति । त्यजेत् । त्यजतु । अत्यजत् । तत्याज । तत्यजिथ, तत्यक्थ । त्यज्यात् । त्यक्ता त्यक्तारौ, त्यक्तारः । त्यक्तासि, त्यक्तास्थः, त्यक्तास्थ । त्यक्ष्यति । अत्यक्ष्यत् अत्यक्ष्यताम् अत्यक्ष्यन् ।

व्यञ्जनानामनिटि । ४ । ३ । ४५ ।

व्यञ्जनान्तस्य धातोः परस्मैपदविषये अनिटि सिचि परे समानस्य वृद्धिर्भवति जस्य चत्वे कत्वे सस्य च षत्वे क्षयोगे क्षत्वे अत्याक्षीत् ।

धुड्ह्रस्वाल्लुगनिटस्तथोः । ४ । ३ । ७० ।

धुडन्ताद् ह्रस्वान्ताच्च धातोः परस्यानिटः सिचो लुग् भवति तादौ थादौ च प्रत्यये । अत्याक्ताम् । अत्याक्षुः । अत्याक्षीः, अत्याक्तम्, अत्याक्त । अत्याक्षम्, अत्याक्ष्व, अत्याक्ष्म । षञ्जं सङ्गे ।

दंशसञ्जः शवि । ४ । २ । ४९ ।

अनयोरुपान्त्यस्य नस्य शवि परे लुग् भवति । सजति ।

सजेत् । सजतु । असजत् । ससञ्ज । सज्यात् । सङ्क्ता । सङ्क्ष्यति । असङ्क्ष्यत् । असाङ्क्षीत्, असाङ्क्ताम् । असाङ्क्षुः असाङ्क्षीः । असाङ्क्तम् । असाङ्क्त । असाङ्क्षम् । असाङ्क्ष्व । असाङ्क्ष्म ।
उपसर्गपूर्वात्तु 'स्थासेनिसेधसिचसजां द्वित्वेऽपि' अभिषजति अभिषषञ्ज । अभ्यषाङ्क्षीत् । इति जान्ता धातवः । कटे वर्षावरणयोः । कटति । कटेत् । कटतु । अकटत् । चकाट । कट्यात् । कटिता । कटिष्यति । अकटिष्यत् ।

न श्विजागृशमक्षणहृम्येदितः । ४ । ३ । ४९ ।

श्विजागृशसक्षणां हकारमकारयकारान्तानामेदितश्च धातूनां परस्मैपदे सेटि सिचि वृद्धिर्न भवति । अकटीत्, अकटिष्टाम्, अकटिषु । अकटीः, अकटिष्टम्, अकटिष्ट । अकटिषम्, अकटिष्व, अकटिष्म । शट रुजाविशरणगत्यवसादनेषु । शटति । शटेत् । शटतु । अशटत् । शशाट । शेटतु । शेटु । शेटिथ । शट्याद् । शटिता । शटिष्यति । अशटिष्यत् । अशाटीत्, अशटीत् । वट वेष्टने । वटति । वटेत् । वटतु । अवटत् । ववाट ।

न शसददिवादिगुणिनः । ४ । १ । ३० ।

शसिदद्योर्वादीनां गुणिनां च धातूनामेकारो न भवति । 'अनादेशादेरेकव्यञ्जनमध्येऽतः' इत्यस्यापवादः । ववटतुः, ववटुः । वट्यात् । वटिता । वटिष्यति । अवटिष्यत् । अवाटीत्, अवटीत् । किट खिट उत्त्रासे । शिट षिट अनादरे । जट झट सङ्घाते । पिट

शब्दे च । केटति । चिकेट । अकेटीत् । खटति । अखाटीत, अखटीत् । शेटति । जटति । झटति । जझाट । अझाटीत् , अझटीत् । पेटति । पिपेट । अपेटीत् । भट भृतौ । भटति । बभाट । अभाटीत्, अभटीत् । तट उच्छ्राये । तटति । तटेत् । अताटीत्, अतटीत् । खट काङ्क्षे । णट नृत्तौ । नटति । ननाट । अनटीत् ,अनाटीत् । हट दीप्तौ । षट अवयवे । लुट विलोटने । लोटति । लोटेत् । लोटतु । अलोटत् । लुलोट । लुलोटिथ । अलोटीत् । चिट प्रैष्ये । विट शब्दे । हेट विबाधायाम् । हेटति । जिहेट । अहेटीत् । अट पट इट किट कट कटु कटै गतौ ऐदित्करणं क्त्वाक्तवत्वोरिण्निषेधार्थम् । अटति । अटेत् । अटतु । आटत् । आट, आटतु , आटुः । आटिथ, आटथु:, आट । आट, आटिव, आटिम । अट्यात् । अटिता । अटिष्यति । आटिष्यत् । आटीत् । एटति ऐटीत् । कुटु वैकल्ये । कुण्टति । चुकुण्ट । अकुण्टीत् । मुट प्रमर्दने । चुट चुटु अल्पीभावे । वटु विभाजने । रुटु लुटु स्तेये । स्फट स्फुटृ विशरणे । स्फोटति । स्फोटेत् । पुस्फोट । अस्फुटत्, अस्फोटीत् । रट परिभाषणे । इति टान्ता धातव । रठ परिभाषणे । रठति । रठेत् । अरठत् । रराठ रेठतु: । रेठिथ । अराठीत् । पठ व्यक्तायां वाचि । पठति । पपाठ, पेठतुः, पेठुः । पेठिथ । अपाठीत् अपठीत् । वठ स्थौल्ये वठति । ववाठ । ववठतुः, ववठुः । ववठिथ । अवाठीत् , अवठीत् । मठ मद–निवासयोश्च । कठ कृच्छ्रजीवने । कठति । अकठत् । चकाठ, चकठतु:,

चकठुः । अकाठीत्, अकठीत् । हठ बलात्कारे । उठ रुठ लुठ उपघाते । पिठ हिंसासंक्लेशयोः । पेठति । पेठेत् । पेठतु । अपेठत् । पिपेठ । अपेठीत् । शठ कैतवे । शठति । शशाठ, शेठतुः शेठु । शेठिथ । अशाठीत्, अशठीत् । शुठ गतिप्रतिघाते । कुठु, लुठु आलस्ये च । कुण्ठति । चुकुण्ठ । अकुण्ठीत् । शुठु शोषणे । अठ रुठु गतौ । अठति । अठेत् । अठतु । आठ । अठ्यात् । अठिता । अठिष्यति । आठीत् । इति ठान्ता धातव । पुडु प्रमर्दने । पुण्डति । पुपुण्ड । अपुण्डीत् । मुडु खण्डने च । मडु भूषायाम् । गडु वदनैकदेशे । शौडृ गर्वे । यौडृ सम्बन्धे । मेडृ म्रेडृ म्लेडृ लोडृ उन्मादे । रोडृ रौडृ तौडृ अनादरे । क्रीडृ विहारे । क्रीडति । क्रीडेत् । क्रीडतु । अक्रीडत् । चिक्रीड । क्रीडिष्यति । अक्रीडिष्यत । तुडृ तोडने । हुडृ हूडृ हूडृ हौडृ गतौ । खोडृ प्रतिघाते । विड आक्रोशे । अड उद्यमे । लड विलासे । लडति, ललति । लडेत् । लडतु । अलडत् । ललाड, लेडतुः, लेडुः । लेडिथ । अलाडीत्, अलडीत् । कडु मदे । कड्ड कार्कश्ये । अड्ड अभियोगे । चुड्ड हावकरणे । इति डान्ता धातव. । अण रण वण व्रण बण भण भ्रण मण धण ध्वण ध्रण कण क्वण चण शब्दे । अणति । अणेत् । अणतु । आणत् । आण । आणीत् । रणति । रराण, रेणतुः, रेणुः । अराणीत्, अरणीत् । वणति । ववाण, ववणतुः, ववणुः । अवाणीत्, अवणीत् । चणति । चचाण, चेणतुः, चेणुः । चेणिथ । अचाणीत्, अचणीत् । ओणृ अपनयने । ओणति ।

ओणेत् । ओणतु । औणत् । ओणाञ्चकार । ओणाम्बभूव । ओणामास । ओण्यात् । ओणिता । ओणिष्यति । औणिष्यत् । औणीत् । शोणृ वर्णगत्योः । श्रोणृ श्लोणृ संघाते । पैणृ गतिप्रेरणश्लेषणेषु । इति णान्ता धातव । चितै सञ्ज्ञाने । चेतति । चेतेत् । चेततु । अचेतत् । चिचेत । चित्यात् । चेतिता । चेतिष्यति । अचेतिष्यत् । अचेतीत् । अत सातत्यगमने । अतति । अतेत् । अततु । आतत् । आत, आततु, आतु । अत्यात् । अतिता । अतिष्यति । आतिष्यत् । आतीत् । च्युतृ आसेचने । च्योतति । च्योतेत् । च्योततु । अच्योतत् । चुच्योत, चुच्युततु, चुच्युतुः । अच्युतत्, अच्युतताम्, अच्युतन् । अच्योतीत् अच्योतिष्टाम्, अच्योतिषु । चुतृ श्चुतृ श्च्युतृ क्षरणे । चोतति । चुचोत । अचुतत्, अचोतीत् । अश्चोतीत्, अश्चुतत् । अश्च्युतत्, अश्च्योतीत् । जुतृ भासने । जोतति । जोतेत् । जोततु । अजोतत् । जुजोत । अजुतत्, अजोतीत् । अतु बन्धने । अन्तति । अन्तेत् । अन्ततु । आन्तत् । आनन्त । अन्त्यात् । अन्तिता । अन्तिष्यति । आन्तिष्यत् । आन्तीत् । कित निवासे । केतति । केतेत् । केततु । अकेतत् । चिकेत । अकेतीत् । ऋत घृणागतिस्पर्धेषु । अर्तति । अर्तेत् । अर्ततु । आर्तत् । आनर्त, आनर्ततु, आनर्तु । ऋत्यात् । अर्तिता । अर्तिष्यति । आर्तिष्यत् । आर्तीत् । इति तान्ता धातव । कुथु पुथु लुथु मथु मन्थ मान्थ हिंसासंक्लेशयोः । कुन्थति । कुन्थेत् ।

कुन्थतु । अकुन्थत् । चुकुन्थ । कुन्थ्यात् । कुन्थिता । कुन्थिष्यति । अकुन्थिष्यत् । अकुन्थीत् । पुन्थति । लुन्थति । मथु-मन्थ्याद् । मथ्याद् । इति थान्ता धातवः । खाद्द भक्षणे । खादति । खादेत् । खादतु । अखादत् । चखाद । अखादीत्, अखदीत् । बद स्थैर्ये । बदति । बदेत् । बबाद, बेदतुः, बेदुः । बेदिथ । अबादीत्, अबदीत् । खद हिंसायाम् । गद व्यक्तायां वाचि । गदति । गदेत् । गदतु । अगदत् । जगाद । गद्यात् । गदिता । गदिष्यति । अगादीत् । अगदीत् ।

**नेर्ङ्गदापतपदनदगदवपीवहीशमूचिग्यातिवाति द्रानिप्सातिस्यनिहन्तिदेग्धौ । २ । ३ । ७९ ।**

ङ्गेति माङ्मेङोर्ग्रहणम् । अदुरुपसर्गान्तःशब्दस्याद् रषृवर्णात् परस्योपसर्गस्थस्य नेर्नकारस्य माङादौ परे णो भवति । प्रणिगदति । प्रण्यगदत् । प्रणिजगाद । प्रण्यगदीत् । रद विलेखने । रदति । रदेत् । रदतु । अरदत् । रराद, रेदतु, रेदु । रेदिथ । अरादीत्, अरदीत् । णद ञिक्ष्विदा अव्यक्ते शब्दे । नदति । प्रणिनदति । नदेत् । ननाद नेदतुः नेदुः । अनादीत् अनदीत् । ञित्करणं वर्तमाने क्तप्रत्ययार्थम् । क्ष्वेदति । चिक्ष्वेद । क्ष्वेद्यात् । अक्ष्वेदीत् । अर्द गतियाचनयोः । अर्दति । अर्देत् । आनर्द । आर्दीत् । नर्द णर्द गर्द शब्दे । नर्दति अणोपदेशत्वात् प्रनर्दति । णोपदेशस्य तु नर्दति प्रणर्दति । गर्दति । जगर्द । अगर्दीत् । तर्द

हिंसायाम् । कर्द कुत्सिते शब्दे । खर्द दशने । अदु बन्धने अन्दति । अन्देत् । अन्दतु । आन्दत् आनन्द । अन्द्यात् । अन्दिता । अन्दिष्यति । आन्दिष्यत् । आन्दीत । इदु परमैश्वर्ये । इन्दति । इन्देत् । इन्दतु । ऐन्दत् । इन्दाञ्चकार । इन्दाम्बभूव । इन्दामास । इन्द्यात् । ऐन्दीत् । बिदु अवयवे । बिन्दति । बिन्देत् । बिबिन्द । अबिन्दीत् । णिदु कुत्सायाम् । निन्दति । प्रणिन्दति । निनिन्द । अनिन्दीत् । टुनदु समृद्धौ । नन्दति । नन्देत् । नन्दतु । अनन्दत् । ननन्द । अनन्दीद् । चदु दीप्त्याह्लादनयोः । चन्दति । चचन्द । चन्द्यात् अचन्दीत् । त्रदु चेष्टायाम् । कदु क्रदु क्लदु रोदनाह्वानयोः । कन्दति । चकन्द । कन्द्यात् । अकन्दीत् । क्रन्दति । चक्रन्द । अक्रन्दीत् । क्लन्दति । चक्लन्द । अक्लन्दीत् । क्लिदु परिदेवने । क्लिन्दति । क्लिन्देत् । क्लिन्दतु । अक्लिन्दत् । चिक्लिन्द । अक्लिन्दीत् । स्कन्दृं गतिशोषणयोः । स्कन्दति । स्कन्देत् । स्कन्दतु । अस्कन्दत् । चस्कन्द । स्कद्यात् । स्कन्ता । स्कन्त्स्यति । अस्कन्त्स्यत् । अस्कान्त्सीत्, अस्कान्ताम्, अस्कान्त्सु । अस्कान्त्सी , अस्कान्तम्, अस्कान्त । अस्कान्त्सम्, अस्कान्त्स्व, अस्कान्त्स्म । अङि पक्षे अस्कन्दत्, अस्कन्दताम्, अस्कन्दन् । अस्कन्दः, अस्कन्दतम्, अस्कन्दत । अस्कन्दम्, अस्कन्दाव, अस्कन्दाम । इति दान्ता धातवः । षिधू गत्याम् । सेधति । सेधेत् । सेधतु । असेधत् । सिषेध । सिध्यात् । सेधिता । सेधिष्यति । असिध्यात्

असेधीत् । षिधौ शास्त्रमाङ्गल्ययोः । सेधति । सेधेत् । सेधतु । असेधत् । सिषेध । सिध्यात् । सेधिता । सेधिष्यति । असेधिष्यत् । असेधीत् । पक्षे सेद्धा । सेत्स्यति । असेत्स्यत् । असैत्सीत्, औदित्करणाद् विकल्पेनेड् । शुन्ध शुद्धौ । शुन्धति । शुशुन्ध । शुध्यात् । शुन्धिता । शुन्धिष्यति । अशुन्धिष्यत् । अशुन्धीत् । इति धान्ता धातवः । स्तन धन ध्वन चन स्वन वन शब्दे । स्तनति । स्तनेत् । स्तनतु । अस्तनत् । तस्तान । अस्तानीत, अस्तनीत् । धनति । दधान । अधानीत्, अधनीत् । ध्वनति । दध्वान । अध्वानीत् अध्वनीत् । चनति । चचान, चेनतुः, चेनुः । अचानीत् अचनीत् । स्वनति । सस्वान । वनति । ववान, ववनतुः, ववनुः । वन्यात् । अवानीत्, अवनीत् । वन षन सम्भक्तौ । सनति । ससान, सेनतुः, सेनुः । असानीत्, असनीत् । कनै दीप्तिकान्तिगतिषु । कनति । चकान । अकानीत्, अकनीत् । इति नान्ताः । गुपौ रक्षणे

गुपौधूपविच्छिपणिपनेरायः । ३ । ४ । १ ।

एभ्यो धातुभ्य स्वार्थे आय प्रत्ययो भवति । गोपायति । गोपायेत् । गोपायतु । अगोपायत् ।

अशवि ते वा । ३ । ४ । ४ ।

गुपादिभ्यस्ते आयादयः प्रत्यया अशवि वा भवन्ति ।

गोपायाञ्चकार । गोपायाम्बभूव । गोपायामास । जुगोप । जुगुपतुः, जुगुपुः ।

अतः । ४ । ३ । ८२ ।

अदन्ताद् धातोर्विहितेऽशिति प्रत्यये परे धातोरकारस्य लुब् भवति । गोपाय्यात्, गुप्यात् । गोपायिता । औदित्त्वादिड्विकल्पः गोपिता, गोप्ता । गोपायिष्यति, गोपिष्यति, गोप्स्यति । अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत् । अगोपायीत् अगोपायिष्टाम्, अगोपायिषुः । अगोपीत्, अगोपिष्टाम्, अगोपिषुः । अगौप्सीत्, अगौप्ताम्, अगौप्सुः । अगौप्सीः, अगौप्तम्, अगौप्त । अगौप्सम्, अगौप्स्व, अगौप्स्म । तपं धूप संतापे । तपति । तपेत् । तपतु । अतपत् । तताप, तेपतुः, तेपुः । तेपिथ । तप्यात् । तप्ता । तप्स्यति । अतप्स्यत् । अताप्सीत्, अताप्ताम्, अताप्सुः । अताप्सीः । धूपायति । धूपायेत् । धूपायतु । अधूपायत् । धूपायाञ्चकार । धूपायाम्बभूव । धूपायामास । धूप्यात् । धूपायिता, धूपिता । धूपायिष्यति, धूपिष्यति । अधूपायिष्यत्, अधूपिष्यत् । अधूपायीत्, अधूपीत् । रप लप जल्प व्यक्तवचने । रपति । रपेत् । रराप, रेपतुः, रेपुः । रेपिथ । अरापीत्, अरपीत् । लपति । ललाप, लेपतुः, लेपुः । लेपिथ । अलापीत्, अलपीत् । जल्पति । जल्पेत् । जल्पतु । अजल्पत् । जजल्प, जजल्पतुः, जजल्पुः । अजल्पीत् । जप मानसे च । जपति । जजाप, जेपतुः,

जेपुः । जेपिथ । अजापीत्, अजपीत् । चप सान्त्वने । चपति । चचाप, चेपतुः, चेपुः । चेपिथ । अचपीत्, अचापीत् । षप समवाये । सपति । ससाप, सेपतुः, सेपुः । असापीत्, असपीत् । सृप्लृं गतौ सर्पति । सर्पेत् । सर्पतु । असर्पत् । ससर्प, ससृपतुः, ससृपुः । ससर्पिथ, ससृपथुः । सृप्यात् । सर्प्ता 'स्पृशादिसृपो वा' स्रप्ता । सर्प्स्यति, स्रप्स्यति । असर्प्स्यत्, अस्रप्स्यत् । अद्यतन्याम्—

## ऌदिद्द्युतादिपुष्यादेः परस्मै । ३ । ४ । ६४ ।

ऌदिता द्युतादेः पुष्यादेश्च धातोः कर्तर्यद्यतन्यां परस्मैपदेऽङ् भवति । असृपत् । असृपताम्, असृपन् । असृपः, असृपतम्, असृपत । असृपम्, असृपाव, असृपाम । चुप मन्दायाम् । चोपति । चुचोप, चुचुपतुः, चुचुपुः । अचोपीत् । तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ हिंसायाम् । तोपति । तुतोप । अतोपीत् । तुम्पति । तुम्पेत् । तुम्पतु । अतुम्पत् । तुतुम्प, संयोगान्तत्वात् तुतुम्पतु, तुतुम्पु ।

> सकारजः शकारश्चेत् षाट्टवर्गस्तवर्गजः ।
> नकारजावनुस्वारपञ्चमौ धुटि धातुषु ॥१॥

इति नलोपे तुप्यात् । अतुम्पीत् । त्रोपति । तुत्रोप । अत्रोपीत । त्रुम्पति । तुत्रुम्प । इति पान्ता धातवः । तोफति । तुतोफ । अतोफीत् । तुम्फति । तुतुम्फ । अतुम्फीत् । त्रोफति । तुत्रोफ ।

अत्रोफीत्।त्रुम्फति। तुत्रुम्फ । अत्रम्फीत्। वर्फ रफ रफु गतौ ।व-
र्फति वर्फेत् । वर्फतु । अवर्फत् ।ववर्फ । अवर्फीत् । रफति । रराफ,
रेफतु:, रेफुः। अराफीत्, अरफीत् । रम्फति । ररम्फ । अरम्फीत्।
इति फान्ता धातवः । अर्ब कर्ब खर्ब गर्ब चर्ब तर्ब नर्ब पर्ब बर्ब
शर्ब षर्ब सर्ब रिबु रबु गतौ । अर्बति । आनर्ब । आर्बीत् । कर्बति।
चकर्ब । अकर्बीत् । चखर्ब । अखर्बीत् । गर्बति । जगर्ब । अग-
र्बीत् । चर्बति । चचर्ब । अचर्बीत् । तर्बति । ततर्ब । नर्बति ।
ननर्ब । अनर्बीत् । पर्बति । पपर्ब । अपर्बीत् । शर्बति । शशर्ब
अशर्बीत् । सर्बति । ससर्ब ।असर्बीत् ।रिम्बति ।रिरिम्ब । रम्बति।
ररम्ब । अरम्बीत् । कुबु आच्छादने । लुबु तुबु अर्दने । चुबु
वक्त्रसंयोगे । चुम्बति मुखम् । चुचुम्ब । अचुम्बीत् । इति बान्ता
धातवः । सृभू सृम्भू स्त्रिभू षिम्भू भर्भ हिंसायाम् । सर्भति ।
ससर्भ ससृभतु । सृभ्यात् । सर्भिता । सर्भिष्यति । असर्भिष्यत् ।
असर्भीत् । सृम्भति । ससृम्भ । असृम्भीत् । स्त्रेभति । सिस्त्रेभ ।
अस्त्रेभीत् । सिम्भति । सिषिम्भ । सिम्भ्यात् । असिम्भीत् । शुम्भ
भाषणे । शुम्भति । यभं जभ मैथुने । यभति । ययाभ,
येभतु । यब्धा, यब्धारौ, यब्धार । यप्स्यति, यप्स्यत,
यप्स्यन्ति । अयप्स्यत् । अयाप्सीत्, अयाब्धाम्,
अयाप्सु. । अयाप्सी., अयाब्धम्, अयाब्ध । अयाप्सम्,
अयाप्स्व, अयाप्स्म । जभति । जभेत् । जजाभ, जेभतु., जेभुः ।
जेभिथ । जभ्यात्। जभिता। अजाभीत्, अजभीत् । इति भान्ता

धातवः। चमू छमू जमू झमू जिमू अदने। चमति। चमेत्। चमतु। अचमत्। चचाम, चेमतुः, चेमुः। अचामीत्। अचमीत्, आङ्पूर्वात्तु 'ष्ठिवुक्लम्वाचम.' आचामति। आचामेत्। आचामतु। छमति। चछाम चच्छमतुः। अछामीत्, अच्छमीत्। जमति। जजाम। झमति। जझाम। अझामीत्, अझमीत्। जेमति। जेमेत्। जेमतु। अजेमत्। जिजेम जिजिमतुः। अजेमीत्। जेमिता। क्रमू पादविक्षेपे।

भ्रासभ्लासभ्रमक्रमक्लमत्रसित्रुटिलषियसिसंयसर्वा। ३। ४। ७३।

एभ्यः कर्तरि शिति श्यो वा भवति।

क्रमो दीर्घः परस्मै। ४। २। १०९।

क्रमेः परस्मैपदनिमित्ते शिति परे दीर्घो भवति। क्राम्यति। क्राम्येत्। क्राम्यतु। अक्राम्यत्। श्याभावे क्रामति। क्रामेत्। क्रामतु। अक्रामत्। चक्राम। क्रम्यात्। क्रमिता। क्रमिष्यति। अक्रमिष्यत्। 'न श्विजागृ—' इत्यादिना वृद्धिनिषेधे अक्रमीत्। यमूं उपरमे—

गमिषद्यमश्छः। ४। २। १०६।

एषामत्यादौ शिति परे छो भवति। 'षष्ठ्याऽन्त्यस्य' यच्छति। यच्छेत्। यच्छतु। अयच्छत्। ययाम, येमतुः, येमुः।

येमिथ । यम्यात् । यन्ता । यंस्यति । अयंस्यत् । अयंसीत् अयंसिष्टाम् अयंसिषुः । अयंसीः अयंसिष्टम् अयंसिष्ट । अयंसिषम् अयंसिष्व अयंसिष्म । स्यमू शब्दे । स्यमति । णमं प्रह्वत्वे । नमति । नमेत् । नमतु । अनमत् । ननाम नेमतुः नेमु । नेमिथ । नम्यात् । नस्यति । अनंस्यत् । अनंसीत् अनंसिष्टाम् अनंसिषुः । अनसी अनसिष्टम् अनंसिष्ट । अनंसिषम् अनंसिष्व अनंसिष्म । षम ष्टम वैक्लव्ये । समति । ससाम सेमतुः सेमुः । असामीत् । स्तमति । स्तमेत् । स्तमतु । अस्तमत् । तस्ताम तस्तमतु तस्तमु । अस्तामीत् । अम शब्दभक्त्यो । अमति । अमेत् । अमतु । आमत् । आम आमतुः आमुः । आमीत् । अम द्रम हम्म मीमृ गम्लृं गतौ । द्रमति । दद्राम । अद्रमीत् । हम्मति । जहम्म । अहम्मीत् । मीमति । मिमीम । अमीमीत् । 'गमिषद्यमः छः' गच्छति । गच्छेत् । गच्छतु । अगच्छत् । जगाम जग्मतुः जग्मुः । जगमिथ, जगन्थ । गन्ता ।

## गमोऽनात्मने । ४ । ४ । ५१ ।

गमः परस्य स्ताद्यशितः सादेरिड् भवति, न त्वात्मनेपदे । गमिष्यति । अगमिष्यत् । अद्यतन्याम्—अगमत् अगमताम् अगमन् । अगमः अगमतम् अगमत । अगमम् अगमाव अगमाम । इति मान्ता धातवः । हय गत्यौ कान्तौ च । हयति । जहाय । अहयीत् । हर्यति । जहर्य । अहर्यीत् । मव्य

बन्धने । मव्यति । ममव्य । अमव्यीत् । सूर्क्ष्य ईक्ष्य ईर्ष्य ईर्ष्या-र्थाः । सूर्क्ष्यति । सुसूर्क्ष्य । असूर्क्ष्यीत् असूर्क्ष्यिष्टाम् असूर्क्ष्यिषु. । ईर्क्ष्यति । ईर्क्ष्याञ्चकार । ईर्क्ष्याम्बभूव । ईर्क्ष्यामास । ईर्क्ष्यात् । ईर्क्ष्यिता । ईर्क्ष्यिष्यति । ऐर्क्ष्यिष्यत् । ऐर्क्ष्यीत् । ईर्ष्यति ईर्ष्याञ्चकार । ईर्ष्याम्बभूव । ईर्ष्यामास । ऐर्ष्यीत् । शुच्यै चुच्यै अभिषवे । शुच्यति । शुशुच्य । शुच्य्यात् । अशुच्यीत् । चुच्यति । चुचुच्य । चुच्य्यात् । अचुच्यीत् । इति यान्ता धातवः । त्सर छद्मगतौ । त्सरति । त्सरेत् । त्सरतु । अत्सरत् । तत्सार । अत्सारीत् । क्मर हूर्च्छने । क्मरति । चक्मार । अक्मरीत् । अभ्र वभ्र मभ्र गतौ । चर भक्षणे च । धोरृ गतिचातुर्ये । खोरृ प्रतिघाते । धोरति । दुधोर । अधोरीत् । खोरति । चुखोर । अखोरीत् । इति रान्ता धातवः । दल त्रिफला विशरणे । दलति । ददाल देलतुः देलुः । देलिथ । अदालीत्, अदलीत् । फलति । फलेत् । पफाल फेलतुः फेलुः । अफालीत्, अफलीत् । मील श्मील स्मील क्ष्मील निमेषणे । मीलति । मिमील । अमीलीत् । एवं श्मीलादीनाम् । पील प्रतिष्टम्भे । पीलति । पिपील । अपीलीत् । णील वर्णे । नीलति । निनील । अनीलीत् । शील समाधौ । शीलति । शिशील । अशीलीत् । कील बन्धे । कीलति । अकीलीत् । कूल आवरणे । कूलति । चुकूल । अकूलीत् । शूल रुजायाम् । शूलति । शुशूल । अशूलीत् । तूल निष्कर्षे । तूलति । तुतूल । अतूलीत् । पूल संघाते । मूल प्रतिष्ठायाम् । फल

निष्पत्तौ । फुल्ल विकसने । फुल्लति वन विकसतीत्यर्थः । चुल्ल हावकरणे । चिल्ल शैथिल्ये च । पेल फेल शेल षेल सेल वेल्ल सल तिल तिल्ल पल्ल वेल्ल गतौ । केल क्वेल खेल वेल चेल्ल स्खल चलने । स्खलति । चस्खाल । अस्खालीत् । एवं खल संचये च । श्वल श्वल्ल आशुगतौ । गल अदने इति लान्ता धातव । पूर्व पर्व मर्व पूरणे । पूर्वति । पुपूर्व । अपूर्वीत् । पर्वति । पपर्व । अपर्वीत् । मर्वति । ममर्व । अमर्वीत् । गर्व अभिनिवेशे । गर्वति । जगर्व । अगर्वीत् । ष्ठिवू क्षिवू निरसने—

ष्ठिवूक्लम्वाचमः । ४ । २ । ११० ।

एषां त्यादिभिन्ने शिति परे दीर्घो भवति । ष्ठीवति । ष्ठीवेत् । ष्ठीवतु । अष्ठीवत् ।

तिर्वा ष्ठिवः । ४ । १ । ४३ ।

ष्ठिवो द्वित्वे सति पूर्वस्य ति इत्यादेशो वा भवति । तिष्ठेव तिष्ठिवतुः तिष्ठिवुः । तिष्ठेविथ । पक्षे टिष्ठेव टिष्ठिवतुः टिष्ठिवुः । टिष्ठेविथ । 'भ्वादेर्नामिनो दीर्घो वोर्व्यञ्जने' ष्ठीव्यात् । ष्ठेविता । ष्ठेविष्यति । अष्ठेविष्यत् । अष्ठेवीत् । क्षेवति । चिक्षेव । अक्षेवीत् । जीव प्राणधारणे । जीवति । जिजीव । अजीवीत् । पीव मीव तीव नीव स्थौल्ये । पीवति । पीवेत् । अपीवीत् । मीवति । तीवति । नीवति । पिवु मिवु निवु सेचने । पिन्वति । पिपिन्व । अपिन्वीत् । हिवु दिवु जिवु प्रीणने । हिन्वति । जिहिन्व । अहिन्वीत ।

दिन्वति । दिदिन्व । अदिन्वीत् । जिन्वति । जिजिन्व । अजिन्वीत् । इवु व्याप्तौ । इन्वति । ऐन्वत् । इन्वाञ्चकार । इन्वाम्बभूव । इन्वामास । ऐन्वीत् । अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमनप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यालिङ्गनहिंसादहनभाववृद्धिषु । अवति । आव । अव्यात् । अविता । आवीत् । इति वान्ता धातवः । कश शब्दे । कशति । चकाश । कश्यात् । अकाशीत् , अकशीत् । मिश मश रोषे च । मशति । मिमेश । अमेशीत् । शश प्लुतिगतौ । शशति । शशाश । अशाशीत्, अशशीत् । णिश समाधौ । नेशति । निनेश । अनेशीत् । दृशं प्रेक्षणे । 'श्रौतिकृवु'–इत्यादिना पश्यति । पश्येत् । पश्यतु । अपश्यत् । ददर्श ददृशतु' ददृशु' । ददर्शिथ पक्षे—

**अः सृजिदृशोऽकिति । ४ । ४ । १११ ।**

अनयो स्वरात् परोऽदन्तो भवति धुडादौ प्रत्यये परे, न तु किति । दद्रष्ठ । दृश्यात् । द्रष्टा । द्रक्ष्यति । अद्रक्ष्यत् । अद्यतन्यां तु अङ्पक्षे—

**ऋवर्णदृशोऽङि । ४ । ३ । ७ ।**

ऋवर्णान्तानां दृशेश्च गुणो भवति अङि परे । अदर्शत् अदर्शताम् अदर्शन् । पक्षे अद्राक्षीत् । 'धुड्ह्रस्वाल्लुगनिटस्तथोः' इति सिज्लुकि अद्राष्टाम् । अद्राक्षु । अद्राक्षीः अद्राक्षम् अद्राष्ट । अद्राक्षम् अद्राक्ष्व अद्राक्ष्म । दंशं दशने । दशति ।

दशेत् । दशतु । अदशत् । ददंश । दश्यात् । दंष्टा । दङ्क्ष्यति । अदङ्क्ष्यत् । अदाङ्क्षीत् अदांष्टाम् अदाङ्क्षुः । इति शान्ता धातवः । घुषृ शब्दे । घोषति । जुघोष । अघुषत्, अघोषीत् । षूष प्रसवे । ऊष रुजायाम् । ऊषति । ऊषाञ्चकार । ऊषाम्बभूव । ऊषामास । ऊष्यात् । ऊषिता । ऊषिष्यति । औषिष्यत् । औषीत् । ईष उञ्छे । ईषति । ईषेत् । ईषतु । ऐषत् । ईषाञ्चकार । ईषाम्बभूव । ईषामास । ऐषीत् । कृष विलेखने । कर्षति । चकर्ष । चकर्षिथ । कृष्यात् ।

**स्पृशादिसृपो वा । ४ । ४ । ११२ ।**

स्पृशमृशकृषतृपदृपां सृपश्च स्वरात् परो धुडादौ प्रत्यये परे अदन्तो वा भवति, न तु किति । क्रष्टा पक्षे कर्ष्टा । क्रक्ष्यति पक्षे कर्क्ष्यति । अक्रक्ष्यत्, अकर्क्ष्यत् ।

**स्पृशमृशकृषतृपदृपो वा । ३ । ४ । ५४ ।**

एभ्यो धातुभ्योऽद्यतन्या सिज् वा भवति । अकार्क्षीत् अकार्ष्टाम् अकार्क्षुः । अकार्क्षीः अकार्ष्टम् अकार्ष्ट । अकार्क्षम् अकार्क्ष्व अकार्क्ष्म । अकारागमे अक्राक्षीत् । सिजोऽभावे—

**हशिटो नाम्युपान्त्याददृशोऽनिटः सक् । ३ । ४ । ५५ ।**

हकारान्ताद् दृशिभिन्नात् शिडन्ताद् नाम्युपान्त्यादनिटोऽद्यतन्यां सक् भवति । अकृक्षत् अकृक्षताम् अकृक्षन् । अकृक्षः अकृक्षतम् अकृक्षत । अकृक्षम् अकृक्षाव अकृक्षाम । कृष

शिष जष झष वष मष मुष रुष रिष यूष जूष शष चष हिंसायाम् । वृषू संघाते च । भष भर्त्सने । जिषू विषू मिषू निषू पृषू वृषू सेचने । मृषू सहने च । उषू श्रिषू श्लिषू प्रुषू प्लुषू दाहे । ओषति । उवोष । औषीत् । घृषू संघर्षे । हृषू अलीके । घर्षति । जघर्ष । अघर्षीत् । हर्षति । जहर्ष । अहर्षीत् । पुष पुष्टौ । पोषति । पुपोष । अपोषीत् । भूष तसु अलङ्कारे । भूषति । बुभूष । अभूषीत् । इति षान्ता धातवः । तंसति । ततंस । अतंसीत् । लस श्लेषणक्रीडनयोः । लसति । ललास लेसतुः लेसुः । लेसिथ । अलासीत् । घस्लृं अदने । घसति । घसेत् । जघास ।

**गमहनजनखनघसः स्वरेऽनङि क्ङिति लुक्**

**। ४ । २ । ४४ ।**

एषामुपान्त्यस्याङ्वर्जे स्वरादौ क्ङिति परे लुग् भवति ।

**घस्वसः । २ । ३ । ३६ ।**

नाम्यादेः परस्य घसवसोः सः षो भवति । जक्षतुः जक्षुः । जघसिथ, जघस्थ । घस्यात् । घस्ता घस्तारौ घस्तारः ।

**सस्तः सि । ४ । ३ । ९२ ।**

धातोः सन्तस्याशिति सादौ प्रत्यये विषयभूते तो भवति । घत्स्यति । अघत्स्यत् । अघसत् अघसताम् अघसन् । अघसः अघसतम् अघसत । अघसम् अघसाव अघसाम । हसे हसने । हसति । जहास । अहसीत् । पिसृ पेसृ वेसृ गतौ । पेसति । पिपेस पिपे-

सतु पिपेसु । अपेसीत् । शसू हिंसायाम् । शसति । शशास । अशासीत्, अशसीत् । शंसू स्तुतौ च इति सान्ता धातवः । मिहं सेचने । मेहति । मिमेह । मिह्यात् । मेढा । मेक्ष्यति । अमेक्ष्यत् । अमेक्षत् अत्र सक् अमेक्षताम् अमेक्षन् । अमेक्ष अमेक्षतम् अमेक्षत । अमेक्षम् अमेक्षाव अमेक्षाम । दह भस्मीकरणे । दहति । दहेत् । दहतु । अदहत् । ददाह देहतु देहुः । देहिथ, ददग्ध । दह्यात् । दग्धा । धक्ष्यति । अधक्ष्यत् । अधाक्षीत् अदाग्धाम् अधाक्षुः । अधाक्षीः अदाग्धम् अदाग्ध । अधाक्षम् अधाक्ष्व अधाक्ष्म । रह त्यागे । रहु गतौ । रंहति । ररंह । अरंहीत् । दह दहु बृह वृद्धौ । बृहू बृहु शब्दे च । बर्हति । बबर्ह । अद्यतन्यामङि अबृहत् अबृहताम् अबृहन् । अङभावे अबर्हीत् अबर्हिष्टाम् अबर्हिषुः । बृंहति । बबृंह । अबृंहीत् । उहू तुहू दुहू अर्दने । ओहति । औहत्, औहीत् । तोहति । तुतोह । अतुहत्, अतोहीत् । दोहति । दुदोह । अदुहत्, अदोहीत् । अर्ह मह पूजायाम् । अर्हति । आनर्ह । आर्हीत् । महति । ममाह मेहतुः मेहुः । अमहीत् । इति हान्ता धातवः । उक्ष सेचने । उक्षति । उक्षाञ्चकार । उक्षाम्बभूव । उक्षामास । औक्षीत् । रक्ष पालने रक्षति । ररक्ष । अरक्षीत् । मक्ष मुक्ष संघाते । मुक्षति । मुमुक्ष । अमुक्षीत् । अक्षौ व्याप्तौ च ।

**वाऽक्षः । ३ । ४ । ७६ ।**

अक्षधातोः कर्तरि विहिते शिति प्रत्यये श्नुर्वा भवति ।

**उश्नोः । ४ । ३ । २ ।**

धातो परयोरुश्नो प्रत्यययो स्थाने गुणो भवति, अक्ङिति प्रत्यये परे । अक्ष्णोति अक्ष्णुत. अक्ष्णुवन्ति । अक्ष्णोषि अक्ष्णुथः अक्ष्णुथ । अक्ष्णोमि अक्ष्णुवः अक्ष्णुमः । अक्ष्णुयात् । अक्ष्णोतु, अक्ष्णुतात् अक्ष्णुताम् अक्ष्णुवन्तु । अक्ष्णुहि, अक्ष्णुतात् । आक्ष्णोत् । पक्षे अक्षति । अक्षेत् । अक्षतु । आक्षत् । आनक्ष । आनक्षिथ, आनष्ठ । अक्ष्यात् । अक्षिता, अष्टा । अक्षिष्यति, अक्ष्यति । आक्षिष्यत् , आक्ष्यत् । आक्षीत् आक्षिष्टाम् आक्षिषुः । इडभावे आष्टाम् आक्षुः । आष्टम् आष्ट । आक्षम् आक्ष्व आक्ष्म । तक्षौ त्वक्षौ तनूकरणे । तक्षति । ततक्ष ततक्षतुः । ततक्षिथ, ततष्ठ । तक्ष्यात् । तक्षिता, तष्टा । तक्षिष्यति, तक्ष्यति । अतक्षिष्यत् , अतक्ष्यत् । अतक्षीत् अतक्षिष्टाम् अतक्षिषुः । इडभावपक्षे अताक्षीत् अताष्टाम् अताक्षुः । त्वक्षति । तत्वक्ष । अत्वक्षीत् , अत्वाक्षीत् । णिक्ष चुम्बने । वक्ष रोषे । त्वक्ष त्वचने । सूर्क्ष अनादरे । काक्षु वाक्षु माक्षु काङ्क्षायाम् । सृं गतौ सरति । सरेत् । सरतु । असरत् ।

**वेगे सर्त्तेर्धाव् । ४ । २ । १०७ ।**

वेगे गम्यमाने सृधातोरत्यादौ शिति परे धावादेशो भवति । धावति । धावेत् । धावतु । अधावत् । ससार सस्रतुः सस्रुः । सर्ता । सरिष्यति । असरिष्यत् ।

**सर्त्यर्त्तेर्वा । ३ । ४ । ६१ ।**

आभ्यां कर्त्तर्यद्यतन्यामङ् वा भवति । असरत् असरताम् असरन् । पक्षे असार्षीत् असार्ष्टाम् असार्षुः इत्यादीनि रूपाणि ।

**इति भ्वादिगणे परस्मैपदं समाप्तम् ।**

---

## अथात्मनेपदम् ।



गाङ् गतौ 'ङितः कर्त्तरि' इत्यात्मनेपदम् । शवि दीर्घे च गाते, गाते ।

**अनतोऽन्तोऽदात्मनेपदे । ४ । २ । ११४ ।**

अनत परस्यात्मनेपदस्यस्यान्तोऽद् भवति । गाते । गासे गाथे गाध्वे । 'इडेत्पुसि चातो लुक्' इति गे गावहे गामहे । गेत गेयाताम् गेरन् । गेथाः गेयाथाम् गेध्वम् । गेय गेवहि गेमहि । गाताम् गाताम् गाताम् । गास्व गाथाम् गाध्वम् । गै गावहै गामहै । अगात अगाताम् अगात । अगाथाः अगाथाम् अगाध्वम् । अगे अगावहि अगामहि । जगे जगाते जगिरे । जगिषे जगाथे जगिध्वे । जगे जगिवहे जगिमहे । गासीष्ट गासीयास्ताम् गासीरन् । गासिष्ठाः गासीयास्थाम् गासीध्वम् । गासीय गासीवहि गासीमहि । गाता गातारौ गातारः । गातासे गातासाथे

गाताध्वे । गाताहे गातास्वहे गातास्महे । गास्यते गास्येते गास्यन्ते । गास्यसे गास्येथे गास्यध्वे । गास्ये गास्यावहे गास्यामहे । अगास्यत अगास्येताम् अगास्यन्त । अगास्यथा अगास्येथाम् अगास्यध्वम् । अगास्ये अगास्यावहे अगास्यामहे । अद्यतन्याम्—अगास्त अगासाताम् अगासत । अगास्था अगासाथाम् अगाद्ध्वम् । अगासि अगास्वहि अगास्महि । ष्मिङ् ईषद्धसने । शवि गुणे च स्मयते स्मयेते स्मयन्ते । स्मयसे स्मयेथे स्मयध्वे । स्मये स्मयावहे स्मयामहे । स्मयेत स्मयेयाताम् स्मयेरन् । स्मयेथा स्मयेयाथाम् स्मयेध्वम् । स्मयेय स्मयेवहि स्मयेमहि । स्मयताम् स्मयेताम् स्मयन्ताम् । स्मयस्व स्मयेथाम् स्मयध्वम् । स्मयै स्मयावहै स्मयामहै । अस्मयत अस्मयेताम् अस्मयन्त । अस्मयथा अस्मयेथाम् अस्मयध्वम् । अस्मये अस्मयावहि अस्मयामहि । परोक्षायाम्—सिष्मिये सिष्मियाते सिष्मियिरे । सिष्मियिषे सिष्मियाथे सिष्मियिढ्वे, सिष्मियिध्वे । सिष्मिये सिष्मियिवहे सिष्मियिमहे । स्मेषीष्ट स्मेषीयास्ताम् स्मेषीरन् । स्मेता स्मेतारौ स्मेतार । स्मेतासे । स्मेष्यते स्मेष्येते स्मेष्यन्ते । अस्मेष्यत अस्मेष्येताम् अस्मेष्यन्त । अद्यतन्याम्—अस्मेष्ट अस्मेषाताम् अस्मेषत । अस्मेष्ठा. अस्मेषाथाम् अस्मेड्ढ्वम् । अस्मेषि अस्मेष्वहि अस्मेष्महि ॥ डीङ् विहायसां गतौ डयते । डयेत । डयताम् । अडयत । डिड्ये डिड्याते डिड्यिरे । डयिषीष्ट । डयिता । डयिष्यते । अडयिष्यत । अड-

यिष्ट अडयिषाताम् अडयिषत । उंङ् कुङ् गुंङ् घुंङ् ङुङ् शब्दे । अवते । अवेत । अवताम् । आवत । ऊवे ऊवाते ऊविरे । ओषीष्ट । ओता । ओष्यते । औष्यत । औष्ट औषाताम् औषत । कवते । चुकुवे । गवते । जुगुवे । अगोष्ट । घवते । जुघुवे । अघोष्ट । ङवते । जुङुवे । अङोष्ट । च्युंङ् ज्युंङ् जुंङ् प्रुंङ् प्लुङ् गतौ । च्यवते । च्यवेत । च्यवताम् । अच्यवत । चुच्युवे । च्योषीष्ट । च्योता । च्योष्यते । अच्योष्यत । अच्योष्ट । रुंङ् रोषणे । रवते । रुरुवे । अरोष्ट । पूङ् पवने । पवते । पवेत । पवताम् । अपवत । पुपुवे । पविषीष्ट । पविता । पविष्यते । अपविष्यत । अपविष्ट अपविषाताम् अपविषत । मूङ् बन्धने । मवते । मवेत । मवताम् । अमवत । मुमुवे । मविषीष्ट । मविता । मविष्यते । अमविष्यत । अमविष्ट । धृङ् अवध्वंसने । धरते । दध्रे । अधरिष्ट । मेंङ् प्रतिदाने । मयते । मयेत । मयताम् । अमयत । ममे । अमास्त अमासाताम् अमासत । अमास्थाः अमासाथाम् अमाद्ध्वम् । अमासि अमास्वहि अमास्महि । देङ् त्रैङ् पालने । दयते । दयेत । दयताम् । अदयत । परोक्षायाम्—

## देर्दिगिः परोक्षायाम् । ४ । १ । ३२ ।

देङ्धातो परोक्षायां दिगिरादेशो भवति, न च द्विः । दिग्ये दिग्याते दिग्यिरे । दासीष्ट । दाता । दास्यते । अदास्यत । अद्यतन्याम्—

**इश्च स्थादः । ४ । २ । ४१ ।**

स्थाधातोर्दासंज्ञकाच्चात्मनेपदविषये सिच् किद्वद् भवति । संयोगे चानयोरिः । 'धुड्ह्रस्वाद्' इत्यादिना सिच्लुकि अदित अदिषाताम् अदिषत । अदिथाः अदिषाथाम् अदिड्ढ्वम् । अदिषि अदिष्वहि अदिष्महि । वकुङ् कौटिल्ये । वङ्कते । ववङ्के । अवङ्किष्ट । अकुङ् लक्षणे । अङ्कते । अङ्केत । अङ्केताम् । आङ्केत । आनङ्के । आङ्किषीष्ट । अङ्किता । आङ्किष्यते । आङ्किष्यत । आङ्किष्ट । शीकृङ् सेचने । शीकते । शीकेत । शिशीके । अशीकिष्ट । लोकृङ् दर्शने । लोकते । लुलोके । अलोकिष्ट । श्लोकृङ् संघाते । द्रेकृङ् ध्रेकृङ् शब्दोत्साहे । रेकृङ् शकुङ् शङ्कायाम् । ककि लौल्ये । ककते । ककेत । ककताम् । अककत । चकके चककाते चककिरे । ककिषीष्ट । ककिता । ककिष्यते । अककिष्यत । अककिष्ट । कुकि वृकि आदाने । चकि तृप्तिप्रतिघातयोः । ककुङ् श्वकुङ् त्रकुङ् श्रकुङ् श्लकुङ् ढौकृङ् त्रौकृङ् ष्वष्कि वस्कि मस्कि तिकि टिकि टीकृङ् सेकृङ् स्रेकृङ् रखुङ् लखुङ् गतौ । कङ्कते । चकङ्के । अकङ्किष्ट । ढौकते । डुढौके । अढौकिष्ट । लङ्खते । ललङ्खे । अलङ्खिष्ट । अघुङ् वघुङ् गत्याक्षेपे । आङ्घिष्ट । अवङ्घिष्ट । मघुङ् कैतवे च । मङ्घते । अमङ्घिष्ट । श्लाघृङ् कत्थने । श्लाघते । लोचृङ् दर्शने । लोचते । लुलोचे । अलोचिष्ट । षचि सेचने । सचते । कचि बन्धने । कचते । चकचे । अकचिष्ट । वर्चि दीप्तौ । मचि मुचुङ् कल्कने । मुञ्चते । मुमुञ्चे ।

अमुञ्चिष्ट । पचुङ् व्यक्तीकरणे पञ्चते । पपञ्चे । अपञ्चिष्ट । एजृङ् भ्रेजृङ् भ्राजि दीप्तौ । एजते । एजाञ्चक्रे । एजाम्बभूवे ।

अस्तेः सि हस्त्वेति । ४ । ३ । ७३ ।

अस्तेः स सादौ प्रत्यये परे लुब् भवति, एति परे तु सो हः स्यात् । एजामाहे । एजिषीष्ट । एजिता । एजिष्यते । ऐजिष्यत । ऐजिष्ट । इजुङ् गतौ । इञ्जते । इञ्जाञ्चक्रे । इञ्जाम्बभूवे । इञ्जामाहे । इञ्जिषीष्ट । इञ्जिता । इञ्जिष्यते । ऐञ्जिष्यत । ऐञ्जिष्ट । ऋजि गतिस्थानार्जनोपार्जनेषु । अर्जते । आनृजे । आर्जिष्ट । ऋजुङ् भृजैङ् भर्जने । ऋञ्जते । आनृञ्जे । आर्ञ्जिष्ट । तिजि क्षमानिशानयोः क्षमायां 'गुप्-तिजः'—इति तितिक्षते चेष्टि चेष्टायाम् । चेष्टते । अचेष्टिष्ट । एठि हेठि विबाधायाम् । एठते । एठाञ्चक्रे । एठाम्बभूवे । एठामाहे । ऐठिष्ट । हेठते । जिहेठे । अहेठिष्ट । मठुङ् कठुङ् शोके । मुठुङ् पलायने । मुण्ठते । मुमुण्ठे । अमुण्ठिष्ट । अठुङ् पठुङ् गतौ । अण्ठते आनण्ठे । आण्ठिष्ट । पण्ठते । पपण्ठे । अपण्ठिष्ट । हुडुङ् पिडुङ् संघाते । हिडुङ् गतौ च । हिण्डते । जिहिण्डे । अहिण्डिष्ट । शडुङ् रुजायां च । शण्डते । शशण्डे । अशण्डिष्ट । तडुङ् ताडने । तण्डते । ततण्डे । अतण्डिष्ट । घिणुङ् घुणुङ् घृणुङ् ग्रहणे । घिण्णते । जिघिण्णे । अघिण्णिष्ट । पणि व्यवहारस्तुत्योः । 'गुपौधूप—' इत्यादिनाऽऽय—प्रत्यये । अनुबन्धस्याशवि परे आयप्रत्ययान्ताभावपक्षे चरितार्थत्वाद् आयप्रत्यये सति आत्मनेपदं न भवति । पणायति । पणा-

येत् । पणायतु । अपणायत् । पणायाञ्चकार, पणायाम्बभूव, पणायामास । पेणे पेणाते पेणिरे । पणाय्यात्, पणिषीष्ट । पणायिता, पणिता । पणायिष्यति, पणिष्यते । अपणायिष्यत्, अपणिष्यत । अपणायीत्, अपणिष्ट । यतैङ् प्रयत्ने । यतते । यतेत । यतताम् । अयतत । येते येताते येतिरे । येतिषे येताथे येतिध्वे । येते येतिवहे येतिमहे । यतिषीष्ट । यतिता । यतिष्यते । अयतिष्यत । अयतिष्ट । युतृङ् जुतृङ् भासने । योतते । युयुते । अयोतिष्ट । जोतते । जुजुते । अजोतिष्ट । नाथृङ् उपतापैश्वर्याशी·षु च । नाथते । नाथेत । नाथताम् । अनाथत । श्रथुङ् शैथिल्ये । श्रन्थते । ग्रथुङ् कौटिल्ये । ग्रन्थते । जग्रन्थे । अग्रन्थिष्ट । कत्थि श्लाघायाम् । कत्थते । चकत्थे । अकत्थिष्ट । श्विदुङ् श्वैत्ये । श्विन्दते । शिश्विन्दे । अश्विन्दिष्ट । वदुङ् स्तुत्यभिवादनयो· । वन्दते । ववन्दे । अवन्दिष्ट । भदुङ् सुखकल्याणयो· । भन्दते । बभन्दे । अभन्दिष्ट । स्पदुङ् किञ्चिच्चलने । स्पन्दते । पस्पन्दे । अस्पन्दिष्ट । क्लिदुङ् परिदेवने । मुदि हर्षे । मोदते । मुमुदे । अमोदिष्ट । ददि दाने । ददते । ददेत । ददताम् । अददत । ददद । ददिषीष्ट । ददिता । ददिष्यते । अददिष्यत । अददिष्ट । हर्दि पुरीषोत्सर्गे । हदते । हदेत । हदताम् । अहदत । जहदे । हत्सीष्ट । हत्ता । हत्स्यते । अहत्स्यत । अहत्त अहत्साताम् अहत्सत । ष्वदि स्वदि स्वादि आस्वादने । स्वदते । सस्वदे । अस्वदिष्ट । उर्दि मानक्रीडनयोश्च । उर्दते । उर्देत । उर्दताम् । और्दत । उर्दाञ्चक्रे ।

उर्दाम्बभूवे । उर्दामाहे । उर्दिषीष्ट । उर्दिता । उर्दिष्यते । और्दिष्यत । और्दिष्ट । खूदि क्षरणे । पर्दि कुत्सिते शब्दे । स्कुदुङ् आप्रवणे । स्कुन्दते । चुस्कुन्दे । अस्कुन्दिष्ट । एधि वृद्धौ । एधते । एधेत । एधताम् । ऐधत । एधाञ्चक्रे । एधाम्बभूवे । एधामाहे । एधिषीष्ट । एधिता । एधिष्यते । ऐधिष्यत । ऐधिष्ट । स्पर्धि संघर्षे । स्पर्धते । पस्पधे । अस्पर्धिष्ट । गाधृङ् प्रतिष्ठालिप्साग्रन्थेषु । बाधृङ् रोटने । बाधते । दधि धारणे । दधते । अदधिष्ट । नाधृङ् उपतापैश्वर्याशीःषु च । पनि स्तुतौ । पनायति । पनायेत् । पनायतु । अपनायत् । पनायाञ्चकार । पनायाम्बभूव । पनायामास । पेने । पनाय्यात्, पनिषीष्ट । पनायिता, पनिता । पनायिष्यति, पनिष्यते । अपनायिष्यत्, अपनिष्यत । अपनायीत, अपनिष्ट । मानि पूजायाम् । विचारे 'शान्दान्मान्—' इति मीमांसते । । तेपृङ् कम्पने च । त्रपौषि लज्जायाम् । त्रपते । त्रपेत । त्रपताम् । अत्रपत । 'तृत्रपफलभजाम्' त्रेपे त्रेपाते त्रेपिरे । त्रेपिषे त्रेपाथे त्रेपिध्वे । त्रेपे त्रेपिवहे त्रेपिमहे । त्रेपिषीष्ट, त्रप्सीष्ट 'धूगौदित.' इति विकल्पेट् । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । अत्रपिष्यत, अत्रप्स्यत । अत्रपिष्ट, अत्रप्त । गुपि गोपन—कुत्सनयो. । गर्हायां 'गुप्-तिज.'—इति जुगुप्सते । अबुङ् रबुङ् शब्दे । अम्बते । आनम्बे । आम्बिष्ट । रम्बते । ररम्बे । अरम्बिष्ट । कबृङ् वर्णे । क्लीबृङ् अधार्ष्ट्ये । क्षीबृङ् मदे । वल्भि भोजने । गल्भि धार्ष्ट्ये । रभि राभस्ये । रभते । रभेत । रभताम् । अरभत । रेभे

रेभाते रेभिरे । रप्सीष्ट । रब्धा । रप्स्यते । अरप्स्यत । अरब्ध अरप्साताम्, अरप्सत । अरब्धा । डुलभिष् प्राप्तौ । लभते । लभेत । लभताम् । अलभत । लेभे । लब्धा । लप्स्यते । अलप्स्यत । अलब्ध । भामि क्रोधे । क्षमौषि सहने । क्षमते । क्षमेत । क्षमताम् । अक्षमत । चक्षमे । क्षमिषीष्ट, क्षंसीष्ट । क्षमिता, क्षन्ता । क्षमिष्यते, क्षंस्यते । अक्षमिष्यत, अक्षस्यत । अक्षमिष्ट । अक्षंस्त अक्षंसाताम् अक्षंसत । अक्षंस्था अक्षसाथाम् अक्षंद्ध्वम् । अक्षंमि अक्षंस्वहि अक्षंस्महि । कमूङ् कान्तौ ।

## कमेर्णिङ् । ३ । ४ । २ ।

कमे स्वार्थे णिङ् भवति । कामयते । कामयेत । कामयताम् । अकामयत । कामयाञ्चक्रे, कामयाम्बभूवे, कामयामाहे । चकमे चकमाते चकमिरे । चकमिषे । 'अशवि ते वा' । कामयिषीष्ट, कमिषीष्ट । कामयिता, कमिता । कामयिष्यते, कमिष्यते । अकामयिष्यत, अकमिष्यत । 'णिश्रिद्रुस्रुकम' कर्तरि ङः' अचकमत । णिङ्पक्षे तु 'असमानलोपे सन्वल्लघुनि ङे' 'लघोर्दीर्घोऽस्वरादेः' इति अचीकमत । अयि वयि पयि मयि नयि चयि रयि गतौ । अयते । प्र+अयते—

## उपसर्गस्यायौ । २ । ३ । १०० ।

उपसर्गस्थस्य रकारस्यायधातौ परे लकारो भवति । प्लायते । [illegible] । अयेत । अयताम् । आयत ।

**दयायास्कास: । ३ । ४ । ४७ ।**

एभ्यो धातुभ्य· परस्याः परोक्षाया आम् भवति । आमन्ताच्च परे कृभ्वस्तय. परोक्षान्ता अनुप्रयुज्यन्ते । अयाञ्चक्रे अयाम्बभूवे । अयामाहे । अयिषीष्ट । अयितासे । अयिष्यते । आयिष्यत । आयिष्ट । वयते । पयते । नयते । रयते । तयि णयि रक्षणे च । तयते । तेये । अतयिष्ट । नयते । नेये । अनयिष्ट । दयि दानगतिहिंसादहनेषु च । दयते । दयेत । दयताम् । अदयत । दयाञ्चक्रे । दयाम्बभूवे । दयामाहे । दयिषीष्ट । दयिता । दयिष्यते । अदयिष्यत । अदयिष्ट । क्ष्मायैङ् विधूनने । क्ष्मायते । क्ष्मायेत । क्ष्मायताम् । अक्ष्मायत । चक्ष्माये । क्ष्मायिषीष्ट । क्ष्मायिता । क्ष्मायिष्यते । अक्ष्मायिष्यत । अक्ष्मायिष्ट । स्फायैङ् ओप्यायैङ् वृद्धौ । स्फायते । स्फायेत । स्फायताम् । अस्फायत । पस्फाये । अस्फायिष्ट । प्यायते । प्यायेत । प्यायताम् । अप्यायत । परोक्षायाम्—

**प्याय: पीः । ४ । १ । ९१ ।**

प्यायः परोक्षायङो. पीर्भवति । पिप्ये आपिप्ये । अद्यतन्याम्—

**दीपजनबुधिपूरितायिप्यायो वा । ३ । ४ । ६७ ।**

एभ्यः कर्तर्यद्यतन्यास्ते परे ञिज्वा भवति, तलुक् च । अप्यायि, अप्यायिष्ट । तायृङ् संतानपालनयोः । तायते । तताये । अतायि, अतायिष्ट । वलि वल्हि सवरणे । वलते । ववले । अव-

लिष्ट । शा‍ चलने च । शलते । शेले । अशलिष्ट । कलि शब्द-संख्यानयोः । कलते । चकले । अकलिष्ट । काशृङ् दीप्तौ । काशते । चकाशे । अकाशिष्ट । क्लेशि विबाधने । क्लेशते । चक्लेशे । अक्लेशिष्ट । भाषि व्यक्तायां वाचि । भाषते । बभाषे । अभाषिष्ट । ईषि गतिहिंसादर्शनेषु । ईषते । ईषाञ्चक्रे । ईषाम्बभूवे। ईषामाहे । ऐषिष्ट । कासृङ शब्दकुत्सायाम् । कासते। कासाञ्चक्रे। कासाम्बभूवे । कासामाहे । अकासिष्ट । भासि टुभ्रासि टुभ्लासृङ दीप्तौ । भ्रासते 'भ्रासभ्लास—' इत्यादिना वा श्ये कृते भ्रास्यते । भ्लासते, भ्लास्यते । रासृङ् णासृङ् शब्दे । रासते । ररासे । अरासिष्ट । नासते । ननासे । अनासिष्ट । णसि कौटिल्ये। नसते । नेसे । अनसिष्ट । भ्यसि भये । भ्यसते । बभ्यसे । अभ्यसिष्ट । आङ् शसुङ् इच्छायाम् । आशंसते । आशशंसे । आशंसिष्ट । ईहि चेष्टायाम् । ईहते । ईहाञ्चक्रे । ईहाम्बभूवे । ईहामाहे । ऐहिष्ट । ऊहि वितर्के । ऊहते । ऊहाञ्चक्रे । औहिष्ट । गाहौङ् विलोडने । गाहते । जगाहे। गाहिषीष्ट, घाक्षीष्ट । गाहिता, गाढा। गाहिष्यते, घाक्ष्यते । अगाहिष्यत, अघाक्ष्यत । अगाहिष्ट, अगाढ । अगाहिषाताम्, अघाक्षाताम्। अगाहिषत, अघाक्षत। अगाहिष्ठा, अगाढाः। अगाहिषाथाम्, अघाक्षाथाम्। अगाहिड्ढ्वम्, अगाहिड्ढ्वम्, अगाहिध्वम्, अघागुड्ढ्वम्, अघाढ्वम्। अघाक्षि, अगाहिषि। अगाहिष्वहि, अघाक्ष्वहि। अगाहिष्महि, अघाक्ष्महि। ग्लाहौङ् ग्रहणे । ग्लाहते। दक्षि शैघ्र्ये च। दक्षते। ददक्षे। अदक्षिष्ट

शिक्षि विद्योपादाने । शिक्षते । शिक्षेत । शिक्षताम् । अशिक्षत । शिशिक्षे । शिक्षिषीष्ट । शिक्षिता । शिक्षिष्यते । अशिक्षिष्यत । अशिक्षिष्ट । भिक्षि याञ्चायाम् । भिक्षते । बिभिक्षे । अभिक्षिष्ट । दीक्षि मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । अदीक्षिष्ट । ईक्षि दर्शने । ईक्षते । ईक्षाञ्चक्रे । ईक्षाम्बभूवे । ईक्षामाहे । ऐक्षिष्ट ।

इत्यात्मनेपदं समाप्तम् ।

---

अथोभयपदिनः ।

श्रिग् सेवायाम् 'ईगित' इति फलवति कर्तर्यात्मनेपदमन्यथा परस्मैपदम् । श्रयते । श्रयेत । श्रयताम् । अश्रयत । शिश्रिये । श्रयिषीष्ट । श्रयिता । श्रयिष्यते । अश्रयिष्यत । अद्यतन्याम्— 'णिश्रि—' इत्यादिना ङेप्रत्यये द्वित्वे अशिश्रियत । श्रयति । श्रयेत् । श्रयतु । अश्रयत् । शिश्राय । श्रीयात् । श्रयिता । श्रयिष्यति । अश्रयिष्यत् । अशिश्रियत् । णीग् प्रापणे । नयति । नयते । नयेत् । नयेत । नयतु । नयताम् । अनयत् । अनयत । निनाय । निन्ये । नीयात् । नेषीष्ट । नेतासि । नेतासे । नेष्यति । नेष्यते । अनेष्यत् । अनेष्यत । अनैषीत् । अनेष्ट । हृंग् हरणे । हरति । हरते । जहार । जह्रे ।

ऋवर्णात् । ४ । ३ । ३६ ।

ऋवर्णान्ताद् धातोरनिटावात्मनेपदविषयौ सिजाशिषौ किद्वद्

भवत । हृषीष्ट 'रि शक्याशीर्ये' ह्रियात् । हर्ता । हरिष्यति । हरिष्यते । अहरिष्यत् । अहरिष्यत । अहार्षीत् । सिचः कित्त्वे गुणाभावे सिज्लुकि अहृत अहृषाताम् अहृषत । भृंग् भरणे । भरति । भरते । बभार बभ्रतु बभ्रु । बभर्थ बभ्रथुः बभ्र । बभार, बभर बभृव बभृम । बभ्रे बभ्राते बभ्रिरे । बभृषे बभ्राथे बभृढ्वे । बभ्रे बभृवहे । बभृमहे । भ्रियात् । भृषीष्ट । अभार्षीत् अभार्ष्टाम् अभार्षु । अभृत अभृषाताम् अभृषत । डुकृंग् करणे

**कृगस्तनादेरुः । ३ । ४ । ८३ ।**

कृगस्तनादेश्च कर्तरि विहिते शिति परे उर्भवति । कृ+उ+ति—

**उश्नोः । ४ । ३ । २ ।**

धातोरुश्नोः प्रत्यययोरक्ङिति गुणो भवति । कृ+ओ+ति 'नामिन —' इत्यादिना गुणे करोति । तसि—

**अतः शित्युत् । ४ । २ । ८९ ।**

अविति शिति परे च उप्रत्यय तन्निमित्तस्य कृगोऽकारस्य उकारो भवति । कुरुत. । कुर्वन्ति । करोषि कुरुथः कुरुथ । करोमि

**कृगो यि च । ४ । २ । ८८ ।**

कृग परस्योतो यादौ वमि चाविति लुग् भवति । कुर्वः कुर्म । कुरुते कुर्वाते कुर्वते । कुरुषे कुर्वाथे कुरुध्वे । कुर्वे कुर्वहे कुर्महे । कुर्यात् कुर्याताम् कुर्युः । कुर्याः कुर्यातम् कुर्यात ।

कुर्याम् कुर्याव कुर्याम । कुर्वीत कुर्वीयाताम् कुर्वीरन् ।
कुर्वीथाः कुर्वीयायाम् कुर्वीध्वम् । कुर्वीय कुर्वीवहि कुर्वीमहि ।
करोतु, कुरुतात् कुरुताम् कुर्वन्तु ।

**असंयोगादोः । ४ । २ । ८६ ।**

असंयोगात् परो य उस्तदन्तात् प्रत्ययात् परस्य हेर्लुग् भवति ।
कुरु, कुरुतात् कुरुतम् कुरुत । करवाणि करवाव करवाम । कुरु-
ताम् कुर्वाताम्, कुर्वताम् । कुरुष्व कुर्वाथाम् कुरुध्वम् । करवै
करवावहै करवामहै । अकरोत् अकुरुताम् अकुर्वन् । अकरोः
अकुरुतम् अकुरुत । अकरवम् अकुर्व अकुर्म । अकुरुत
अकुर्वाताम् अकुर्वत । अकुरुथा अकुर्वाथाम् अकुरुध्वम् ।
अकुर्वि अकुर्वहि अकुर्महि । चकार चक्रतु चक्रुः । चकर्थ ।
चक्रे चक्राते चक्रिरे । चकृषे । क्रियात् । कृषीष्ट । कर्तासि ।
करिष्यति । करिष्यते । अकरिष्यत् । अकरिष्यत । अकार्षीत् अ-
कार्ष्टाम् अकार्षुः । अकृत अकृषाताम् अकृषत । धृंग् धारणे ।
धरति । धरते । धरेत् । धरेत । धरतु । धरताम् । अधरत् ।
अधरत । दधार । दध्रे । ध्रियात् । धृषीष्ट । धर्तासि । धर्तासे ।
धरिष्यति । धरिष्यते । अधरिष्यत् । अधरिष्यत । अधार्षीत् ।
अधृत । डुयाचृग् याच्ञायाम् । याचते । याचति । ययाच । ययाचे ।
अयाचीत् । अयाचिष्ट । डुपच्षीं पाके । पचति । पचते । पचेत् ।
पचेत । पचतु । पचताम् । अपचत् । अपचत । पपाच पेचतुः

पेचुः । पेचिथ, पपक्थ । पेचे पेचाते पचिरे । पेचिषे । पच्यात् । पक्षीष्ट । पक्तासि । पक्तासे । पक्ष्यति । पक्ष्यते । अपक्ष्यत् । अपक्ष्यत । अपाक्षीत् अपाक्ताम् अपाक्षुः । अपक्त अपक्षाताम् अपक्षत । राजृग् टुभ्राजी दीप्तौ। राजते । राजति । रराज रेजतु रेजुः । रेजे रेजाते रेजिरे । अराजीत् । अराजिष्ट । भजीं सेवायाम् । भजति । भजते । भजेत् । भजेत। भजतु । भजताम् । अभजत् । अभजत । बभाज 'तॄत्रपफलभजाम्' भेजतुः भेजुः । भेजे भेजाते भेजिरे । भज्यात् । भक्षीष्ट । भक्तासि । भक्तासे । भक्ष्यति। भक्ष्यते । अभक्ष्यत् । अभक्ष्यत । अभाक्षीत् अभाक्ताम् अभाक्षु । अभक्त अभक्षाताम् अभक्षत । रञ्जीं रागे

अकट्घिनोश्च रञ्जेः । ४ । २ । ५० ।

रञ्जेरकटि घिनणि शवि च परे उपान्त्यस्य नो लुग् भवति । रजति । रजते । रजेत् । रजेत । रजतु । रजताम् । अरजत् । अरजत । ररञ्ज ररञ्जतु ररञ्जुः । ररञ्जे ररञ्जाते ररञ्जिरे । रज्यात् । रङ्क्षीष्ट । रङ्क्ता । रङ्क्ष्यति। रङ्क्ष्यते । अराङ्क्षीत् अराङ्क्ताम् अराङ्क्षु । अरङ्क्त अरङ्क्षाताम्। रेटृग् परिभाषणयाचनयोः । रेटति । रेटते । रिरेट । रिरेटे । अरेटीत् । अरेटिष्ट । वेणृग् गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेणति । वेणते । विवेण । विवेणे । अवेणीत् । अवेणिष्ट । चतेग् याचने । चतति । चतते । चचात । चेते । अचतीत् । अचतिष्ट । प्रोथृग् पर्याप्तौ ।

मिथृग् मेधाहिंसयोः । मेथृग् संगमे च । चदेग् याचने । गेॠन्दृग् निशामने । बुन्दते। बुन्दति । बुन्देत । बुबुन्द। बुबुन्दे । बुद्यात् । बुन्दिषीष्ट । अबुदत्, अबुन्दीत् । अबुन्दिष्ट । णिदग णेदृग् कुत्सासन्निकर्षयो. । मिदृग् मेदग मेधाहिंसयो. । मेधृग सगमे च । बुधृग् बोधने । बोधति । बोधते । बुबोध । बुबुध । अबुधत् । अबोधीत् । अबोधिष्ट । खनूग् अवदारणे । खनति। खनते। चखान 'गमहन—' चख्नतुः चख्नुः चख्ने चख्नाते चख्निरे ।

## ये नवा । ४ । २ । ६२ ।

खनिसनिजना ये क्ङिति परे आः भवति । खायात्, खन्यात् । खनिता । खनिष्यते । अखनिष्यत । अखानीत्, अखनीत् । अखनिष्ट । शपीं आक्रोशे । शपति । शपते । शपेत् । शपेत । शपतु । शपताम् । अशपत् । अशपत । शशाप शेपतुः शेपुः । शेपे शेपाते शेपिरे । शप्यात् । शप्सीष्ट । शप्तासि । शप्तासे । शप्स्यति । शप्स्यते । अशप्स्यत्, अशप्स्यत । अशाप्सीत् । अशप्त । चायृग् पूजानिशामनयोः । चायति । चायते । चचाय । चचाये । अचायीत् । अचायिष्ट । व्ययी गतौ । व्ययते । वव्याय । वव्यये । अव्ययीत् । अव्ययिष्ट । धावूग् गतिशुद्धयोः । धावति । धावते । दधाव । दधावे । अधावीत् । अधाविष्ट । दाशृग् दाने । दाशति । दाशते । ददाश । ददाशे । अदाशीत् । अदाशिष्ट । लषी कान्तौ । लषति । लषते । ललाष ।

लेषे । अलाषीत्, अलषीद्, अलषिष्ट। चषी लक्षणे । छषी हिंसायाम् । त्विषी दीप्तौ । त्वेषति । त्वेषते । तित्वेष । तित्विषे । त्विष्यात् ।

**सिजाशिषावात्मने । ४ । ३ । ३५ ।**

नाम्युपान्त्याद् धातोरात्मनेपदविषयावनिटौ सिजाशिषौ किद्वद् भवत । त्विक्षिष्ट । त्वेष्टासि । त्वेष्टासे । त्वेक्ष्यति । त्वेक्ष्यते । अत्वेक्ष्यत् । अत्वेक्ष्यत । अत्वेक्षीत् । अत्विष्ट, अत्विषाताम् । अषी असी गत्यादानयोश्च । दासृग् दाने । दासति । दासते । ददास । ददासे । अदासीत् । अदासिष्ट । माहृग् माने । माहति । माहते । ममाह । ममाहे । अमाहीत् । अमाहिष्ट । गुहौग् संवरणे ।

**गोहः स्वरे । ४ । २ ४२ ।**

कृतगुणस्य गुहेः स्वरादौ प्रत्यये परे उपान्त्यस्य ऊद् भवति । निगूहति । निगूहते । निगूहेत् । निगूहेत । निगूहतु । निगूहताम् । न्यगूहत् । न्यगूहत । निजुगूह निजुगुहतुः निजुगुहुः । निजुगूहिथ । निजुगुहे । गुह्यात् । गूहिषीष्ट औदित्त्वाद्विकल्पेट् कित्त्वे च घुक्षीष्ट । गूहिता, गोढा । गूहितासे, गोढासे । निगूहिष्यति, निघोक्ष्यति । निगूहिष्यते, निघोक्ष्यते । अगूहिष्यत्, अघोक्ष्यत् । अगूहिष्यत, अघोक्ष्यत । अगूहीत् अगूहिष्टाम् अगूहिषुः । इडभावपक्षे 'हशिटो नाम्युपान्त्याद्' इत्यादिना सक् अघुक्षत् अघुक्षताम् अघुक्षन् । अघुक्षः अघुक्षतम् अघुक्षत । अघुक्षम् अघुक्षाव अघुक्षाम । अगूहिष्ट अगूहिषाताम्

अगूहिषत । अगूहिष्ठाः अगूहिषाथाम् अगूहिड्ढ्वम् । अगूहिषि अगूहिष्वहि अगूहिष्महि । इडभावे सकि

**दुहदिहलिहगुहो दन्त्यात्मने वा सकः । ४ । ३ । ७४ ।**

एभ्यः परस्य सको दन्त्यादावात्मनेपदे लुग्वा भवति । अगूढ, अघुक्षत । अघुक्षाताम् अघुक्षन्त । अगूढा, अघुक्षथाः अघुक्षाथाम् अघुक्षध्वम्, अघुड्ढ्वम् । अघुक्षि अघुक्षावहि, अगुह्वहि अघुक्षामहि, अगुह्महि ।

**अथ वृत् यजादिः ।**

यजीं देवपूजासंगतिकरणदानेषु । यजति । यजते । यजेत् । यजेत । यजतु । यजताम् । अयजत् । अयजत । परोक्षायाम्—

**यजादिवशवचः सस्वरान्तस्था य्वृत् । ४ । १ । ७२ ।**

यजादेर्वश्वचोश्च परोक्षायां द्वित्वे पूर्वस्य सस्वरान्तस्था इउऋरूपा य्वृद् भवति । इयाज ।

**यजादिवचेः किति । ४ । १ । ७९ ।**

यजादीनां वचेश्च सस्वरान्तस्था किति परे य्वृत् भवति । ईजतु· ईजुः । इयजिथ, इयष्ठ ईजथुः ईज । इयाज, इयज इयजिव इयजिम । ईजे ईजाते ईजिरे । इज्यात् । यक्षीष्ट । यष्टासि । यष्टासे । यक्ष्यति । यक्ष्यते । अयक्ष्यत्, अयक्ष्यत । अयाक्षीत् अयाष्टाम् अयाक्षुः । अयाक्षीः अयाष्टम् अयाष्ट । अयाक्षम् अयाक्ष्व अयाक्ष्म । अयष्ट अयक्षाताम्

अयक्षत । व्येंग् संवरणे । व्ययति । व्ययते । व्ययेत् । व्ययेत । व्ययतु । व्ययताम् । अव्ययत् । अव्ययत । परोक्षायाम्—

ज्याव्येव्यधिव्यचिव्यथेरिः । ४ । १ । ७१ ।

एषां धातूनां परोक्षायां द्वित्वे सति पूर्वस्य इर्भवति ।

व्यस्थवणवि । ४ । २ । ३ ।

व्येधातो. थवि णवि च विषये आद् न भवति । ‘ आत् सन्ध्यक्षरस्य ’ इत्यस्यापवादोऽयम् । विव्याय विव्यतु विव्यु. । ‘ ऋवृव्येऽद इट् ’ विव्ययिथ विव्यथु विव्य । विव्याय, विव्यय विव्यिव विव्यिम । विव्ये विव्याते विव्यिरे । विव्यिषे विव्याथे विव्यिध्वे, विव्यिढ्वे । वीयात् । व्यासीष्ट । व्याता । व्यास्यति, व्यास्यते । अव्यास्यत्, अव्यास्यत् । अव्यासीत् अव्यासिष्टाम् अव्यासिषु । अव्यास्त । वेग तन्तुसन्ताने । वयति, वयते । वयेत्, वयेत । वयतु, वयताम् । अवयत्, अवयत ।

वेर्वय् । ४ । ४ । १९ ।

वेगः परोक्षाया वय् वा भवति । उवाय ।

न वयो य् । ४ । १ । ७३ ।

वेगो वयो य् परोक्षायां य्वृद् न भवति । ऊयतुः ऊयुः । उवयिथ ऊयथुः ऊय । उवाय, उवय ऊयिव ऊयिम । पक्षे—

वेरयः । ४ । १ । ७४ ।

अनन्तस्य वेगः परोक्षायां पूर्वस्य परस्य च य्वृन्न भवति। ववौ।

अविति वा। ४। १। ७२।

वेगोऽन्तस्याविति परोक्षायां य्वृद् वा भवति। ववतुः, ऊवतुः ववु, ऊवु।ववियथ, ववाथ। ववथु ऊवथु। वव, ऊव।ववौ वविव, ऊविव वविम, ऊविम। ऊवे ऊवाते ऊविरे। ऊये ऊयाते ऊयिरे। ववे ववाते वविरे। ऊयात्। वासीष्ट। वाता। वाता। वास्यति। वास्यते। अवास्यत्। अवास्यत। अवासीत् अवासिष्टाम्। अवास्त। ह्वेग् स्पर्धाशब्दयो। ह्वयति। ह्वयते। ह्वयेत्। ह्वयेत। ह्वयतु। ह्वयताम्। अह्वयत्। अह्वयत।

द्वित्वे ह्वः। ४। १। ८७।

ह्वेगो द्वित्वविषये सस्वरान्तस्था य्वृत् भवति। जुहाव जुहुवतु जुहुवुः। जुहविथ, जुहोथ जुहुवथु जुहुव। जुहाव, जुहव जुहुविव जुहुविम। जुहुवे जुहुवाते जुहुविरे। जुहुविषे जुहुवाथे जुहुविढ्वे, जुहुविध्वे। जुहुवे जुहुविवहे जुहुविमहे। हूयात्। ह्वासीष्ट। ह्वाता। ह्वाता। ह्वास्यति। ह्वास्यते। अह्वास्यत्। अह्वास्यत।

ह्वालिप्सिचः। ३। ४। ६२।

एभ्यः कर्तर्यद्यतन्यामङ् भवति। अह्वत् अह्वताम् अह्वन्। अह्वः अह्वतम् अह्वत। अह्वम् अह्वाव अह्वाम।

**वाऽऽत्मने । ३ । ४ । ६३ ।**

ह्वालिम्पिसिचां कर्तर्यद्यतन्यामात्मनेपदे वाऽङ् भवति । अह्वत अह्वतांम् अह्वन्त । पक्षे अह्वासाताम् अह्वासत । टुवपीं बीज-सन्ताने । वपति । वपेत । वपेत् । वपतु । वपताम् । अवपत् । अवपत । उवाप ऊपतुः ऊपुः । ऊपे ऊपाते ऊपिरे । उप्यात् । वप्सीष्ट । वप्ता । वप्ता । वप्स्यति । वप्स्यते । अवप्स्यत् । अव-प्स्यत । अवाप्सीत् । अवप्त । वहीं प्रापणे । वहति । वहते । वहेत् । वहेत । वहतु । वहताम् । अवहत् । अवहत । उवाह ऊहतुः ऊहुः । उवहिथ, उवोढ ऊहथुः ऊह । उवाह, उवह ऊहिव । ऊहिम । ऊहे ऊहाते ऊहिरे । ऊहिषे ऊहाथे ऊहिढ्वे, ऊहिध्वे । ऊहे ऊहिवहे ऊहिमहे । उह्यात् । वक्षीष्ट । वोढा । वोढा । वक्ष्यति । वक्ष्यते । अवक्ष्यत् । अवक्ष्यत । अवाक्षीत् अवोढाम् अवाक्षुः । अवोढ अवक्षाताम् अवक्षत ।

**इत्युभयपदिनो धातवः ।**

टुओश्वि गतिवृद्ध्योः । श्वयति । श्वयेत् । श्वयतु । अश्वयत् । परोक्षायाम्—

**वा परोक्षायङि । ४ । १ । ९० ।**

श्वेः परोक्षायङोः सस्वरान्तस्था य्वृद् वा भवति । शुशाव शुशुवतुः शुशुवुः । शुशविथ शुशुवथुः शुशुव । शुशाव, शुशव शुशुविव शुशुविम । शिश्वाय शिश्वियतुः शिश्वियुः । शिश्वयिथ

शिश्वियिथु शिश्विय । शिश्वाय, शिश्वय शिश्वियिव शिश्वियिम । शूयात् 'दीर्घमवोऽन्त्यम्' इति य्वृतो दीर्घत्वम् । श्वयिता । श्वयिष्यति । अश्वयिष्यत् । 'टूधेश्वेर्वा' इति विकल्पेन ङे अशिश्वियत् अशिश्वियताम् अशिश्वियन् । पक्षे 'ऋदिच्छ्विवस्तम्भू—' इति वाऽङि अश्वत् अश्वताम् अश्वन् । पक्षे अश्वयीत अश्वयिष्टाम् अश्वयिषुः । वद व्यक्तायां वाचि । वदति । वदेत् । वदतु । अवदत् । उवाद ऊदतु ऊदुः । उवदिथ ऊदथु ऊद । उवाद, उवद ऊदिव ऊदिम । उद्यात् । वदिता । वदिष्यति । अवदिष्यत् । अवादीत् अवादिष्टाम् अवादिषुः । वस निवासे । वसति । वसेत् । वसतु । अवसत् । उवास ऊषतु. 'घस्वसोः' इति षत्वम् ऊषुः । उवस्थ, उवसिथ ऊषथुः ऊष । उष्यात् । वस्ता । वत्स्यति । अवत्स्यत् । अवात्सीत् अवात्ताम् अवात्सुः ।

इति यजादिगणः समाप्तः ।

---

## अथ भ्वाद्यन्तर्गणो द्युतादिः ।

अत्र सर्वे आत्मनेपदिनः । द्युति दीप्तौ । द्योतते । द्योतेत । द्योतताम् । अद्योतत । परोक्षायां दुद्युते इति जाते—

द्युतेरिः । ४ । १ । ४१ ।

द्युतेर्द्वित्वे सति पूर्वस्येकारो भवति । दिद्युते दिद्युताते दिद्युतिरे । द्योतिषीष्ट । द्योतिता । द्योतिष्यते । अद्योतिष्यत । अद्यतन्याम्—

द्युद्भ्योऽद्यतन्याम् । ३ । ३ । ४४ ।

द्युतादिभ्योऽद्यतनीविषये कर्तर्यात्मनेपदं वा भवति । अद्योतिष्ट अद्योतिषाताम् अद्योतिषत । पक्षे 'लृदिद्द्युतादि—' इत्यादिना परस्मैपदेऽङ अद्युतत् अद्युतताम् अद्युतन् । रुचि अभिप्रीत्यां च । रोचते । रुरुचे । अरोचिष्ट, अरुचत् । घुटि परिवर्तने । घोटते । जुघुटे । अघोटिष्ट, अघुटत् । रुटि लुटि लुठि प्रतिघाते । रोटते । रुरुटे । अरोटिष्ट, अरुटत् । लोटते । लुलुटे । अलोटिष्ट, अलुटत् । लोठते । लुलुठे । अलोठिष्ट, अलुठत् । श्विताङ् वरणे । श्वेतते । शिश्विते । अश्वेतिष्ट, अश्वितत् । ञिमिदाङ् स्नेहने । मेदते । मिमिदे । अमेदिष्ट, अमेदत् । ञिक्ष्विदाङ् ञिष्विदाङ् मोचने च । चिक्ष्विदे । अक्ष्वेदिष्ट, अक्ष्विदत् । सिष्विदे । अस्वेदिष्ट, अस्विदत् । शुभि दीप्तौ । शोभते । शुशुभे । अशोभिष्ट, अशुभत् । क्षुभि सञ्चलने । क्षोभते । चुक्षुभे । अक्षोभिष्ट, अक्षुभत् । णभि तुभि हिंसायाम् । नभते । नेभे नेभाते नेभिरे । अनभिष्ट, अनभत् । तोभते । तुतुभे । अतोभिष्ट, अतुभत् । स्रंभूङ् विश्वासे । स्रम्भते । सस्रम्भे । अस्रम्भिष्ट, अस्रभत् । भ्रंशूङ् स्रंसूङ् अवस्रंसने । भ्रंशते । बभ्रंशे । अभ्रंशिष्ट, अभ्रशत् । स्रंसते । सस्रंसे । अस्रंसिष्ट, अस्रसत् । ध्वंसूङ् गतौ च । ध्वंसते । दध्वंसे । अध्वंसिष्ट, अध्वसत् । **अथ द्युताद्यन्तर्गणो वृतादिः ।**

वृतूङ् वर्तने । वर्तते । वर्तेत । वर्तताम् । अवर्तत । ववृते ।

**वृद्भ्यः स्यसनोः । ३ । ३ । ४५ ।**

वृतादिभ्य पञ्चभ्यः स्यादौ प्रत्यये सनि च विषये कर्तर्यात्मनेपदं वा भवति । वर्तिष्यते ।

**न वृद्भ्यः । ४ । ४ । ५५ ।**

वृतादिपञ्चकात् स्ताद्यशित आदिरिड् न भवति, न चेदसौ आत्मनेपदनिमित्त भवति । वर्त्स्यति । अवर्तिष्यत । अवर्त्स्यत् । अवर्तिष्ट । अवृतत् । स्यन्दौङ् स्रवणे । स्यन्दते । स्यन्देत् । स्यन्दताम् । अस्यन्दत । सस्यन्दे । स्यन्दिषीष्ट, स्यन्त्सीष्ट । स्यन्दिता । स्यन्ता । स्यन्दिष्यते, स्यन्त्स्यते । स्यन्त्स्यति । अस्यन्दिष्यत, अस्यन्त्स्यत । अस्यन्त्स्यत । अस्यन्दिष्ट, अस्यन्त्त । अस्यदत् । वृधूङ् वृद्धौ । वर्धते । वर्धेत । वर्धताम् । अवर्धत । ववृधे । वर्धिषीष्ट । वर्धिता । वर्धिष्यते । वर्त्स्यति । अवर्धिष्यत, अवर्त्स्यत् । अवर्धिष्ट । अवृधत् । शृधूङ् शब्दकुत्सायाम् । शर्धते । शर्धेत । शर्धताम् । अशर्धत । शशृधे । शर्धिषीष्ट । शर्धिता । शर्धिष्यते । शर्त्स्यति । अशर्धिष्यत । अशर्त्स्यत् । अशर्धित् । अशृधत् । कृपौङ् सामर्थ्ये

**ऋर लृलं कृपोऽकृपीटादिषु । २ । ३ ९९ ।**

कृपे ऋतो लृत् रस्य च ल् भवति, न तु कृपीटादिविषयस्य । कल्पते । कल्पेत । कल्पताम् । अकल्पत । चक्लृपे । कल्पिषीष्ट, क्लृप्सीष्ट ।

**कृपः श्वस्तन्याम् । ३ । ३ । ४६ ।**

कृपः श्वस्तनीविषये कर्तर्यात्मनेपदं वा भवति । कल्प्तासि । कल्पितासे, कल्प्तासे । कल्पिष्यते, कल्प्स्यते । कल्प्स्यति । अकल्पिष्यत, अकल्प्स्यत । अकल्प्स्यत् । अकल्पिष्ट, अक्लृप्त । अक्लृपत् । **इति वृद्–द्युतादिगणः समाप्तः ।**

---

**अथ भ्वाद्यन्तर्गणो ज्वलादिः ।**

ज्वल दीप्तौ । ज्वलति । ज्वलेत् । ज्वलतु । अज्वलत् । जज्वाल । ज्वल्यात् । ज्वलिता । ज्वलिष्यति । अज्वलिष्यत् । अज्वालीत् । कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कोचति । चुकोच । अकोचीत् । पत्लृ पतने । पतति । पपात पेततु पेतुः । अद्यतन्याम्—‘ लृदिद्द्युतादि–’ इत्यादिनाऽङि

**श्वयत्यसूवचपतः श्वास्थवोचपप्तम् । ४ । ३ । १०३ ।**

एषामङि यथासङ्ख्यं श्वादयो भवन्ति । अपप्तत् । अपप्ताम् अपप्तन् । क्वथे निष्पाके । क्वथते । चक्वाथ । अक्वथीत् । मथे विलोडने । मथति । ममाथ मेथतुः मेथुः । अमथीत् । षद्लृं विशरणगत्यवसादनेषु । ‘श्रौतिकृवु–’इत्यादिना सीदादेशे । सीदति । सीदेत् । सीदतु । असीदत् । ससाद सेदतुः सेदुः । सेदिथ । सत्ता । सत्स्यति । असत्स्यत् । असदत् असदताम् असदन् । ‘ सदोऽप्रते परोक्षायां त्वादे ’ निषीदति । निषसाद । प्रतिषीदति । शद्लृं शातने ।

## शदेः शिति । ३ । ३ । ४१ ।

शिद्विषयाच्छदे कर्तर्यात्मनेपदं भवति । 'श्रौतिकृवु—' शीयते । शीयेत । शीयताम् । अशीयत । शशाद शेदतु शेदु । शेदिथ । शद्यात् । शत्ता । शत्स्यति । अशत्स्यत् । अशदत् । बुध अवगमने । बोधति । बुबोध । अबोधीत । टुवमू उद्गिरणे । वमति ।

## जॄभ्रमवमत्रसफणस्यमस्वनराजभ्राजभ्रासभ्लासो वा । ४ । १ । २६ ।

एषां स्वरस्याःवित्परोक्षासेट्थवोरेर्वा भवति, न च द्विः । ववाम ववमतु., वेमतु ववमु, वेमु । वेमिथ, ववमिथ वेमथुः, ववमथु. वेम, ववम । ववाम, ववम वेमिव, ववमिव वेमिम, ववमिम । अवमीत् । भ्रमू चलने । 'भ्रासभ्लासभ्रमक्रम—' इत्यादिना भ्राम्यति, भ्रमति । बभ्राम बभ्रमतु, भ्रेमतु बभ्रमुः, भ्रेमुः । बभ्रमिथ, भ्रेमिथ । अभ्रमीत् । क्षर सञ्चलने । क्षरति । अक्षारीत् । चल कम्पने । चचाल चेलतुः । अचालीत् । जल घात्ये । जजाल जेलतुः । अजालीत्, । टल ट्वल वैक्लव्ये । ष्ठल स्थाने । तस्थाल । अस्थालीत् । हल विलेखने । जहाल । अहालीत् । णल गन्धे । ननाल नेलतु नेलु । अनालीत् । बल प्राणनधान्यावरोधयो । अबालीत् । पुल महत्त्वे । पुपोल । अपोलीत् । कुल बन्धुसंस्त्यानयो. कोलति । चुकोल । पल फल शल

गतौ । पपाल पेलतु. पेलु । अपालीत् । शशाल शेलतुः शेलु. । अशालीत् । हुल हिंसासंवरणयोश्च । होलति । जुहोल । अहोलीत् । कुशं आह्वानरोदनयो । क्रोशति । चुक्रोश । क्रोक्ष्यति । अक्रोक्ष्यत् । सकि अक्रुक्षत् अक्रुक्षताम् अक्रुक्षन् । कस गतौ । कसति । चकास । अकासीत्, अकसीत् । रुहं जन्मनि । रोहति । रुरोह । रोढा । रोक्ष्यति । अरोक्ष्यत् । सकि अरुक्षत् । रमिं क्रीडायाम् । रमते । रेमे रेमाते रेमिरे । रंसीष्ट । रन्ता । रंस्यते । अरंस्यत । षहिं मर्षणे । सहते । सेहे । सहिषीष्ट ।

**सहलुभेच्छरुषरिषस्तादेः । ४ । ४ । ४६ ।**

एभ्य परस्य स्त्याद्यशितस्तादेरिड् वा भवति । सहिता, सोढा । सहिष्यते । असहिष्यत । असहिष्ट ।

इति ज्वलादिगण समाप्तः ।

## अथ भ्वाद्यन्तर्गणो घटादिः ।

घटिष् चेष्टायाम् । घटते । जघटे । अघटिष्ट । क्षजुङ् गतिदानयो । व्यथिष् भयचलनयो । व्यथते । विव्यथे विव्यथाते विव्यथिरे । व्यथिषीष्ट । व्यथिता । व्यथिष्यते । अव्यथिष्यत । अव्यथिष्ट । प्रथिष् प्रख्याने । प्रथते । पप्रथे । अप्रथिष्ट । म्रदिष् मर्दने । म्रदते । मम्रदे । अम्रदिष्ट । स्खदिष् खदने । स्खदते । चस्खदे । अस्खदिष्ट । कदुङ् क्रदुङ् क्लदुङ् वैक्लव्ये । क्रपि कृपायाम् । क्रपते । चक्रपे । अक्रपिष्ट । ञित्वरिष् सम्भ्रमे ।

त्वरते । तत्वरे । अत्वरिष्ट । प्रसिष् विस्तारे । प्रसते । पप्रसे । अप्रसिष्ट । दक्षि हिंसागत्योः । दक्षते । ददक्षे । अदक्षिष्ट । 'श्रां पाके' अदादौ द्रष्टव्य । स्मृ आध्याने । स्मरति । स्मरेत् । स्मरतु । अस्मरत् । सस्मार सस्मरतु सस्मरु । स्मर्यात् । स्मर्ता । स्मरिष्यति । अस्मरिष्यत् । अस्मार्षीत् । दृ भये । नृ नये । ष्टक स्तक प्रतिघाते । चक तृप्तौ च । अक कुटिलायां गतौ । कखे हसने । अग कुटिलायां गतौ । रगे शङ्कायाम् । रगति । रराग रेगतु. रेगु । अरागीत् । लगे सङ्गे । लगति । ललाग लेगतु लेगु । लेगिथ । अलगीत् । हगे ह्लगे षगे सगे ष्टगे स्थगे संवरणे । वट भट परिभाषणे । वटति । ववाट ववटतु. ववटु । अवाटीत्, अवटीत् । णट नृत्तौ । नटति । ननाट नेटतुः नेटु । अनाटीत्, अनटीत् । गड सेचने । गडति । जगाड । अगाडीत्, अगडीत् । हेड वेष्टने । हेडति । जिहेड । अहेडीत् । लड जिह्वोन्मन्थने । लडति । ललाड । अलाडीत्, अलडीत् । फण कण रण गतौ । फणति । पफाण पफणतुः, फेणतु पफणु, फेणु । फेणिथ, पफणिथ । अकाणीत्, अकणीत् । रणति । रराण रेणतुः रेणुः । अराणीत्, अरणीत् । चण हिंसादानयोश्च । चणति । चचाण । अचाणीत् । शण श्रण दाने । स्नथ क्नथ क्रथ क्लथ हिंसायाम् । छद ऊर्जने । मदै हर्षग्लपनयोः । मदति । ममाद । अमादीत् । ष्टन स्तन ध्वन शब्दे । स्वन अवतंसने । सस्वान सस्वनतु सस्वनु । अस्वानीत्, अस्वनीत् । चन

हिंसायाम् । चचान चेनतुः चेनु. । अचानीत्, अचनीत् । ज्वर रोगे । जज्वार । अज्वारीत्, चल कम्पने । चचाल चेलतु चेलुः । अचालीत् । ह्वल ह्मल चलने । ज्वल दीप्तौ च ।

इति भ्वाद्यन्तर्गणघटादेः समाप्तौ समाप्तो भ्वादिगणः ।

---

## अथ अदादिगणः ।



कानुबन्धा अदादय । अदं प्सांक् भक्षणे । वर्जनाद् नात्र शव् । अत्ति अत्त अदन्ति । अत्सि अत्थ अत्थ । अद्मि अद्वः अद्म. । अद्यात् अद्याताम् अद्यु. । अद्या अद्यातम् अद्यात । अद्याम् अद्याव अद्याम । अत्तु, अत्तात् अत्ताम् अदन्तु ।

**हुधुटो हेर्धिः । ४ । २ । ८३ ।**

होर्धुडन्ताच्च परस्य हेर्धिर्भवति । अद्धि, अत्तात् अत्तम् अत्त । अदानि अदाव अदाम ।

**अदश्चाट् । ४ । ४ । ९१ ।**

अत्ते रुदादिपञ्चकाच्च दिस्योः शितोरादिरड् भवति । आदत् आत्ताम् आदन् । आद आत्तम् आत्त । आदम् आद्व आद्म ।

**परोक्षायां नवा । ४ । ४ । १८ ।**

अदेः परोक्षायां घस्लृ आदेशो वा भवति । आद आदतुः आदुः । 'ऋवृव्येऽद इट्' आदिथ आदथुः आद । आद आदिव आदिम । पक्षे जघास 'गमहन–' इत्यादिनोपान्त्यलोपे जक्षतुः जक्षुः । जघसिथ जक्षथु जक्ष । जघास, जघस जक्षिव जक्षिम । अद्यात् । अत्ता । अत्स्यति । आत्स्यत् । अद्यतन्याम्—

## घस्लृ सनद्यतनीघञचलि । ४ । ४ । १७ ।

एष्वदेर्घस्लृ भवति । अघसत् अघसताम् अघसन् । अघसः अघसतम् अघसत । अघसम् अघसाव अघसाम । प्साति । प्सायात् । प्सातु । अप्सात् अप्साताम् ।

## वा द्विषातोऽनः पुस् । ४ । २ । ९१ ।

द्विष आदन्ताच्च परस्य शितोऽवितोऽनः स्थाने पुस् वा भवति । 'इडेत्पुसि–' इति आलुकि अप्सुः, अप्सान् । अप्साः अप्सातम् अप्सात । अप्साम् अप्साव अप्साम । पप्सौ पप्सतुः पप्सुः । पप्सिथ, पप्साथ । प्सायात, प्सेयात् । प्साता । प्सास्यति । अप्सास्यत् । अप्सासीत् अप्सासिष्टाम् अप्सासिषुः । भांक् दीप्तौ । भाति भातः भान्ति । भायात् । भातु । अभात् अभाताम् अभुः, अभान् । बभौ । भायात् । भाता । भास्यति । अभास्यत् । अभासीत् । यांक् प्रापणे । वांक् गतिगन्धनयोः । ष्णांक् शौचे । स्नाति । सस्नौ । स्नायात, स्नेयात् । अस्ना-

सीत् । श्रांक् पाके । द्रांक् कुत्सितगतौ । पांक् रक्षणे पाति । पायात् । पातु । अपात् । पपौ पपिथ, पपाथ । पेयात् । पाता । पास्यति । अपास्यत् । अपासीत् । लांक् आदाने । दांवूक् लवने दासञ्ज्ञाऽभावात् प्रनिदाति । ख्यांक् प्रकथने । ख्याति । ख्यायात् । ख्यातु । अख्यात् । चख्यौ । ख्यायात्, ख्येयात् । ख्याता । ख्यास्यति । अख्यास्यत् ।

**शास्त्यसूवक्तिख्यातेरङ् । ३ । ४ । ६० ।**

एभ्यो धातुभ्य कर्तर्यद्यतन्यामङ् भवति । आख्यत् आख्यताम् आख्यन् । प्रांक् पूरणे । मांक् माने । माति । ममौ । मेयात् । माता । मास्यति । अमास्यत् । अमासीत् । इंक् स्मरणे अयं प्रायेणाधिपूर्वक । अध्येति । एति । इत ।

**इको वा । ४ । ३ । १६ ।**

इंकधातोर्विद्भिन्नस्वरादौ शिति परे य् वा भवति । यन्ति, इयन्ति । अधियन्ति, अधीयन्ति । अध्येषि अधीथ अधीथ । अध्येमि अधीव अधीम । अधीयात् । अध्येतु, अधीतात् अधीताम् अधीयन्तु, अधियन्तु । अधीहि, अधीतात् अधीतम् अधीत । अध्ययानि अध्ययाव अध्ययाम ।

**एत्यस्तेर्वृद्धिः । ४ । ४ । ३० ।**

इणिको अस्तेश्चादेर्ह्यस्तन्यां विषये वृद्धिर्भवति, न तु माङा । अध्यैत्, अध्यैताम् अध्यायन् । अध्यै अध्यैतम् अध्यैत ।

अध्यायम् अध्यैव अध्यैम। अधीयाय अधीयतुः इयतु. 'योऽनेक-स्वरस्य' इति यत्वम् अधीयु॰। अधीयात्। अध्येता। अध्ये-ष्यति। अध्यैष्यत्।

## इणिकोर्गा। ४। ४। २३।

इणिकोरद्यतन्या गा भवति। अध्यगात् अध्यगाताम् अध्यगुः। इंण्क् गतौ। एति इतः।

## ह्विणोरप्विति व्यौ। ४। ३। १५।

होरिणश्च नामिन. स्वरादावपित्यविति शिति यथासङ्ख्यं व्यौ भवत॰। यन्ति। एषि इथ॰ इथ। एमि इव इम। इयात्। एतु, इतात् इताम् यन्तु। इहि, इतात् इतम् इत। अयानि अयाव अयाम। ऐत् ऐताम् आयन्। ऐ ऐतम् ऐत। आयम् ऐव ऐम। इयाय।

## इणः। २। १। ५१।

इणधातो. स्वरादौ प्रत्यये परे इयादेशो भवति। ईयतु॰ ईयुः। इययिथ, इयेथ ईयथु॰ ईय। इयाय, इयय ईयिव ईयिम। ईयात् 'दीर्घश्च्विवयङ्यक्येषु च' इति दीर्घ। उपसर्गात् तु—

## आशिषीणः। ४। ३। १०७।

उपसर्गात् परस्येण ईतः क्ङिति यादावाशिषि ह्रस्वो भवति। उदियात्। एता। एष्यति। ऐष्यत्। अगात् अगाताम् अगुः।

वींक् प्रजनकान्त्यसनखादने च । वेति वीतः वीयन्ति । वीयात् । वेतु । अवेत् । विवाय विव्यतुः विव्युः । विवयिथ, विवेथ विव्यथुः विव्य । विवाय, विवय विव्यिव विव्यिम । वीयात् । वेता । वेष्यति । अवेष्यत् । अवैषीत् अवैष्टाम् अवैषुः । द्युंक् अभिगमने ।

**उत औविति व्यञ्जनेऽद्वेः । ४ । ३ । ५९ ।**

अद्वयुक्तस्योदन्तस्य धातोर्व्यञ्जनादौ विति परे और्भवति । द्यौति द्युतः द्युवन्ति । द्यौषि द्युथः द्युथ । द्यौमि द्युव. द्युमः । द्युयात् । द्यौतु । द्युहि । द्यवानि । अद्यौत् अद्युताम् अद्युवन् । अद्यौः अद्युतम् अद्युत । अद्यावम् अद्युव अद्युम । दुद्याव । द्यूयात् । द्योता । द्योष्यति । अद्योष्यत् । अद्यौषीत् । षुंक् प्रसवैश्वर्ययोः । सौति । सुयात् । सौतु । असौत् । सुषाव । सूयात् । सोता । सोष्यति । असोष्यत् ।

**धूग्सुस्तोः परस्मै । ४ । ४ । ८५ ।**

एभ्यः सिच आदिः परस्मैपदे इड् भवति । असावीत् असाविष्टाम् असाविषु । तुंक् वृत्तिहिंसापूरणेषु । तौति । 'यङ्तुरु–' इति तवीति । तुयात् । तवीतु, तौतु । अतौत्, अतावीत् । तुताव तुतविथ, तुतोथ । तूयात् । तोता । तोष्यति । अतोष्यत् । अतौषीत् । युक् मिश्रणे । यौति युतः । युयात् । यौतु । अयौत् । युयाव । यूयात् । यविता । यविष्यति । अयविष्यत् । अयावीत् । णुक् स्तुतौ । नौति नुतः नुवन्ति । नुयात् । नौतु । अनौत् । नुनाव । नूयात् । नविता । नविष्यति ।

अनविष्यत् । अनावीत् । क्ष्णुक् तेजने । क्ष्णौति क्ष्णुतः क्ष्णुवन्ति । क्ष्णुयात् । क्ष्णौतु । अक्ष्णौत् । चुक्ष्णाव । क्ष्णूयात् । क्ष्णविता । क्ष्णविष्यति । अक्ष्णविष्यत् । अक्ष्णावीत् । स्नुक् प्रस्रवने । स्नौति । स्नुयात् । स्नौतु । अस्नौत् । सस्नौ । अस्नौत् । सुस्नाव । स्नूयात् । स्नविता । स्नविष्यति । अस्नविष्यत । अस्नावीत् । टुक्षु रु कुंक् शब्दे । क्षौति । क्षुयात् । क्षौतु । अक्षौत् । चुक्षाव । क्षूयात् । क्षविता । क्षविष्यति । अक्षविष्यत् । अक्षावीत् । रौति 'यङ्तु—' इति रवीति रुतः रुवन्ति । रुयात् । रौतु अरौत् । रुराव । रूयात् । रविता । रविष्यति । अरविष्यत् । अरा-वीत । कौति । कुयात् । कौतु । अकौत् । चुकाव । कूयात् । कोता । कोष्यति । अकोष्यत् । अकौषीत् । रुदृक् अश्रुविमोचने ।

**रुत्पञ्चकाच्छिदयः । ४ । ४ । ८८ ।**

रुदादेः पञ्चतः परस्य व्यञ्जनादेः शितोऽयादेरादिरिड् भवति । रोदिति रुदितः रुदन्ति । रोदिषि रुदिथः रुदिथ । रोदिमि रुदिवः रुदिमः । रुद्यात् । रोदितु, रुदितात् रुदिताम् रुदन्तु । रुदिहि, रुदितात् रुदितम् रुदित । रोदानि रोदाव रोदाम । 'दिस्योरीट्' 'अदश्चाट्' अरोदीत्, अरोदत् अरुदिताम् अरुदन् । अरोदीः, अरोदः अरुदितम् अरुदित । अरोदम् अरुदिव अरुदिम । रुरोद । रुद्यात् । रोदिता । रोदिष्यति । अरोदिष्यत् । अरुदत् अरुदताम् अरुदन् । अरुदः अरुदतम् अरुदत । पक्षे अरोदीत् अरोदिष्टाम् अरोदिषुः । ञिष्वपंक् शये । स्वपिति स्वपितः स्व-

पन्ति । स्वपिषि स्वपिथः स्वपिथ । स्वपिमि स्वपिव स्वपिम । स्वप्यात् । स्वपितु, स्वपितात् स्वपिताम् स्वपन्तु । स्वपिहि स्वपितम् स्वपित । स्वपानि स्वपाव स्वपाम । अस्वपीत्, अस्वपत् अस्वपिताम् अस्वपन् । अस्वपः, अस्वपी. अस्वपितम् अस्वपित । अस्वपम् अस्वपिव अस्वपिम । परोक्षायां तु ' भूस्वपोरदुतौ ' सुष्वाप

**स्वपेर्यङ्ङे च । ४ । १ । ८० ।**

स्वपेर्यङि ङे किति च परे सस्वरान्तस्था य्वृद् भवति । सुषुपतुः सुषुपुः । सुष्वपिथ, सुष्वप्थ सुषुपथु सुषुप । सुष्वाप, सुष्वप सुषुपिव सुषुपिम । निर्दु सुविपूर्वस्य ' अव स्वपः ' इति नि·षुषुपतु, दु षुषुपतुः, सुषुषुपतु·, विषुषुपतु. । सुप्यात् । स्वप्ता । स्वप्स्यति । अस्वप्स्यत् । अस्वाप्सीत् अस्वाप्ताम् अस्वाप्सुः । अन श्वसक् प्राणने । अनिति अनितः अनन्ति । अन्यात् । अनितु अनिताम् अनन्तु । आनीत्, आनत् आनिताम् आनन् । आनी , आनः आनितम् आनित । आनम् आनिव आनिम । आन आनतु· आनु । आनिथ आनथुः आन । अन्यात् । अनिता । अनिष्यति । आनिष्यत् । आनीत् । ' द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा ' प्राणिति । पर्यणिति, पर्यनिति । श्वसिति श्वसितः श्वसन्ति । श्वसिषि श्वसिथः श्वसिथ । श्वसिमि श्वसिवः श्वसिमः । श्वस्यात् । श्वसितु, श्वसितात् श्वसिताम् श्वसन्तु । श्वसिहि । अश्वसत्, अश्वसीत् अश्वसिताम् अश्व-

सन् । श्वस्यात् । श्वसिता । श्वसिष्यति । अश्वसिष्यत् । अश्वसीत् । जक्षक् भक्षहसनयोः । जक्षिति जक्षित. जक्षति । जक्षिषि जक्षिथः जक्षिथ । जक्षिमि जक्षिव. जक्षिमः । जक्ष्यात् । जक्षितु । अजक्षत्, अजक्षीत् अजक्षिताम् ।

**द्व्युक्तजक्षपञ्चतः । ४ । २ । ९३ ।**

द्व्युक्तात् जक्षादिपञ्चकाच्च धातो परस्य शितोऽवितोऽनः पुस् भवति । अजक्षुः । अजक्षः, अजक्षीः अजक्षितम् अजक्षित । अजक्षम् अजक्षिव अजक्षिम । जजक्ष । जक्ष्यात् । जक्षिता । जक्षिष्यति । अजक्षिष्यत् । अजक्षीत् । दरिद्राक् दुर्गतौ । दरिद्राति ।

**इर्दरिद्रः । ४ । २ । ९८ ।**

दरिद्रो व्यञ्जनादौ शित्यवित्यात इर्भवति । दरिद्रितः ।

**श्नश्चातः । ४ । २ । ९६ ।**

द्व्युक्तजक्षपञ्चत श्नाप्रत्ययस्य चात शित्यविति परे लुग् भवति ।

**अन्तो नो लुक् । ४ । २ । ९४ ।**

द्व्युक्तजक्षपञ्चकात् परस्य शितोऽवितोऽन्तो नो लुग् भवति । दरिद्रति । दरिद्रासि दरिद्रिथ. दरिद्रिथ । दरिद्रामि दरिद्रिवः दरिद्रिम. । दरिद्रियात् । दरिद्रातु । अदरिद्रात् अदरिद्रि-

ताम् अदरिद्रुः । अदरिद्राः अदरिद्रितम् अदरिद्रित । अदरिद्राम् अदरिद्रिव अदरिद्रिम । परोक्षायाम्—

**धातोरनेकस्वरादाम् परोक्षायाः कृभ्वस्ति चानु तदन्तम् । ३ । ४ । ४६ ।**

अनेकस्वराद् धातो परस्या परोक्षायाः स्थाने आम् भवति। आमन्ताच्च परे कृभ्वस्तय परोक्षान्ता अनु प्रयुज्यन्ते । दरिद्राञ्चकार । दरिद्राम्बभूव । दरिद्रामास । ' आतो णव औः ' इत्यत्र ओकारेणैव सिद्धे औकारविधानात् दरिद्रातेरामादेशस्यानित्यत्वाद् ददरिद्रौ ददरिद्रतु ददरिद्रुः । ददरिद्रिथ ददरिद्रथुः ददरिद्र । ददरिद्रौ ददरिद्रिव ददरिद्रिम इत्यपि सिद्धम् ।

**अशित्यस्सन्णकच्णकानटि । ४ । ३ । ७७ ।**

सादिसन्नादिवर्जितेऽशिति प्रत्यये विषये दरिद्रातेरन्तस्य लुग् भवति । दरिद्यात् । दरिद्रिता । दरिद्रिष्यति । अदरिद्रिष्यत् ।

**दरिद्रोऽद्यतन्यां वा । ४ । ३ । ७६ ।**

दरिद्रातेरद्यतन्यां विषये लुग् वा भवति । अदरिद्रीत्, पक्षे यमिरमिनम्यातः ' इति सोऽन्त. अदरिद्रासीत् । जागृक् निद्राक्षये । जागर्ति जागृत जाग्रति । जागर्षि जागृथः जागृथ । जागर्मि जागृव जागृम । जागृयात् । जागर्तु । जागृहि । जागराणि जागराव जागराम । ह्यस्तन्यां गुणे सति

**व्यञ्जनाद् देः सश्च दः । ४ । ३ । ७८ ।**

व्यञ्जनान्ताद् धातोः परस्य देर्लुग् भवति, यथासम्भवं धातोः सो दश्च भवति। अजागः अजागृताम् अजागरुः अत्र पुसि ' पुस्पौ ' इति गुणः।

**जागृषसमिन्धेर्नवा । ३ । ४ । ४९ ।**

एभ्यः परस्या परोक्षाया आम् वा भवति। आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनुप्रयुज्यन्ते। जागराञ्चकार जागराम्बभूव जागरामास। पक्षे जजागार।

**जागुः किति । ४ । ३ । ६ ।**

जागृधातोः किति प्रत्यये परे गुणो भवति। जजागरतुः जजागरुः। जजागरिथ जजागरथुः जजागर। जजागार, जजागर जजागरिव जजागरिम। जागर्यात्। जागरिता। जागरिष्यति। अजागरिष्यत्। अजागरीत्। चकासृक् दीप्तौ। चकास्ति चकास्तः चकासति। चकास्सि चकास्थः चकास्थ। चकास्मि चकास्वः चकास्मः। चकास्यात्। चकास्तु चकास्ताम् चकासतु। हेर्धित्वे चकाद्धि पक्षे

**सो धि वा । ४ । ३ । ७२ ।**

धातोर्धादौ प्रत्यये सो लुग् वा भवति। चकाधि। चकास्तम् चकास्त। चकासानि चकासाव चकासाम। अचकात् अचकास्ताम् अचकासुः।

**सेः स्द्धां च रुर्वा । ४ । ३ । ७९ ।**

व्यञ्जनान्ताद् धातोः परस्य सेर्लुग् भवति, यथासम्भवं सदयां वा लश्च । अचकाः, अचकात् अचकास्तम् अचकास्त । अचकासम् अचकास्व अचकास्म । चकासाञ्चकार, चकासाम्बभूव, चकासामास । चकास्यात् । चकासिता । चकासिष्यति । अचकासिष्यत् । अचकासीत् । शासूक् अनुशिष्टौ । शास्ति

**इसासः शासोऽङ्व्यञ्जने । ४ । ४ । ११८ ।**

शास्ते आस अङि क्ङिति व्यञ्जनादौ च परे इस् भवति । शिष्टः शासति । शास्सि शिष्ठः शिष्ठ । शास्मि शिष्वः शिष्मः । शिष्यात् । शास्तु, शिष्टात् शिष्टाम् शासतु ।

**शासस्हनः शाध्येधिजहि । ४ । २ । ८४ ।**

शास्–अस्–हनांह्यन्तानां यथासङ्ख्यं शाधि एधि जहि इत्येते भवन्ति । शाधि शिष्टम् शिष्ट । शासानि शासाव शासाम । देर्लुकि सो दत्वे अशात् अशिष्टाम् अशासु । अशात्, अशाः अशिष्टम् अशिष्ट । अशासम् अशिष्व अशिष्म । शशास शशासतु शशासुः । शशासिथ शशासथु शशास । शशास शशासिव शशासिम । शिष्यात् । शासिता । शासिष्यति । अशासिष्यत् । 'शास्त्यसूवक्तिख्यातेरङ्' इति अशिषत् अशिषताम् अशिषन् । वचंक् परिभाषणे । वक्ति वक्तः वचन्ति । वक्षि वक्थः वक्थ । वच्मि वच्वः वच्मः । वच्यात् । वक्तु, वक्तात् वक्ताम् वचन्तु । वग्धि, वक्तात् वक्तम् वक्त । वचानि वचाव वचाम । अवक् अवक्ताम्

अवचन् । अवग् अवक्तम् अवक्त । अवचम् अवच्व अवच्मे ।
परोक्षाया तु उवाच ऊचतुः ऊचुः। उवचिथ, उवक्थ ऊचथु ऊच ।
उवाच, उवच ऊचिव ऊचिम । उच्यात् । वक्ता । वक्ष्यति ।
अवक्ष्यत् । अवोचत् अवोचताम् अवोचन् । अवोचः अवोचतम्
अवोचत । अवोचम् अवोचाव अवोचाम । मृजौक् शुद्धौ ।

**मृजोऽस्य वृद्धिः । ४ । ३ । ४२ ।**

मृजेर्गुणे सत्यकारस्य वृद्धिर्भवति । मार्ष्टि मृष्टः ।

**ऋतः स्वरे वा । ४ । ३ । ४३ ।**

मृजेः ऋकारस्य स्वरादौ प्रत्यये परे वृद्धिर्वा भवति ।
मार्जन्ति, मृजन्ति । मार्क्षि मृष्ठः मृष्ठ । मार्ज्मि मृज्वः मृज्मः ।
मृज्यात् । मार्ष्टु, मृष्टात् मृष्टाम् मार्जन्तु, मृजन्तु । मृड्ढि मृष्टम्
मृष्ट । मार्जानि मार्जाव मार्जाम । अमार्ट् अमृष्टाम् अमार्जन्,
अमृजन् । अमार्ट् अमृष्टम् अमृष्ट । अमार्जम् अमृज्व अमृज्म ।
ममार्ज ममृजतु, ममार्जतुः ममृजु, ममार्जुः । ममार्जिथ ममृजथुः,
ममार्जथुः ममृज । ममार्ज, ममर्ज ममृजिव, ममार्जिव ममृज्मि,
ममार्जिम । मृज्यात् । मार्जिता, मार्ष्टा । मार्जिष्यति, मार्क्ष्यति ।
अमार्जिष्यत् । अमार्क्ष्यत् । अमार्जीत् अमार्जिष्टाम् अमार्जिषुः ।
अमार्क्षीत् अमार्ष्टाम् अमार्क्षुः । विदक् ज्ञाने । वेत्ति वित्तः विदन्ति ।
वेत्सि वित्थः वित्थ । वेद्मि विद्वः विद्मः ।

**तिवां णवः परस्मै । ४ । २ । ११७ ।**

वेत्तेः परेषां परस्मैपदानां तिवादीनां परस्मैपदान्येव णवादयो नव यथासङ्ख्यं वा भवन्ति। वेद विदतुः विदुः। वेत्थ विदथुः, विद। वेद विद्व विद्म। पक्षे पूर्ववत्। विद्यात् विद्याताम् विद्युः।

**पञ्चम्याः कृग्। ३। ४। ९२।**

वेत्तेः परस्याः पञ्चम्याः किदाम् वा भवति, आमन्ताच्च परः पञ्चम्यन्तः कृगनुप्रयुज्यते। विदाङ्करोतु, विदाङ्कुरुतात् विदाङ्कुरुताम् विदाङ्कुर्वन्तु। विदाङ्कुरु, विदाङ्कुरुतात् विदाङ्कुरुतम्, विदाङ्कुरुत। विदाङ्करवाणि विदाङ्करवाव विदाङ्करवाम। वेत्तु, वित्तात् वित्ताम् विदन्तु। विद्धि, वित्तात् वित्तम् वित्त। वेदानि वेदाव वेदाम। अवेत् अवित्ताम् अविदुः। अवे, अवेत् अवित्तम् अवित्त। अवेदम् अविद्व अविद्म।

**वेत्तेः कित्। ३। ४। ५१।**

वेत्तेः परस्याः परोक्षाया आम् किद् वा भवति। आमन्ताच्च कृभ्वस्तय परोक्षान्ता अनुप्रयुज्यन्ते। विदाञ्चकार, विदाम्बभूव, विदामास। विवेद विविदतुः विविदु। विद्यात्। वेदिता। वेदिष्यति। अवेदिष्यत्। अवेदीत्। हनंक् हिंसागत्योः। हन्ति

**यमिरमिनमिगमिहनिमनिवनतितनादेर्धुटि क्ङिति। ४। २। ५५।**

एषां तनादीनां च धुडादौ क्ङिति लुग् भवति। हतः। 'गमहन'—इत्यादिना अकारलोपे 'हनो ह्नो घ्नः' इति घ्नन्ति।

हंसि हथः हथ । हन्मि हन्वः हन्मः । हन्यात् । हन्तु, हतात्
हताम् घ्नन्तु । जहि, हतात् हतम् हत । हनानि हनाव हनाम ।
अहन् अहताम् अघ्नन् । अहन् अहतम् अहत । अहनम्
अहन्व अहन्म । परोक्षायाम्—

ञिणति घन् । ४ । ३ । १०१ ।

ञौ णवि च परे हन्तेर्घन् भवति । जघान जघ्नतुः जघ्नुः ।
जघनिथ, जघन्थ जघ्नथु जघ्न । जघान, जघन जघ्निव जघ्निम ।

हनो वध आशिष्यञौ । ४ । ४ । २१ ।

आशीर्विषये हन्तेर्वधादेशो भवति, न तु ञिटि । वध्यात् ।
हन्ता । ' हनृतः स्यस्य ' इति हनिष्यति । अहनिष्यत् ।

अद्यतन्यां वा त्वात्मने । ४ । ४ । २२ ।

अद्यतन्यां विषये हनो वधादेशो भवति, आत्मनेपदे तु वा ।
अवधीत् अवधिष्टाम् अवधिषुः । वशक् कान्तौ । वष्टि

वशेरयङि । ४ । १ । ८३ ।

वशेः सस्वरान्तस्था अयङि क्ङिति य्वृद् भवति । उष्टः
उशन्ति । वक्षि उष्ठ उष्ठ । वश्मि उश्व उश्मः । उश्यात् ।
वष्टु, उष्टात् उष्टाम् उशन्तु । उड्ढि, उष्टात् उष्टम् उष्ट । व-
शानि वशाव वशाम । अवट्, अवड् औष्टाम् औशन् । अवट्,
अवड् औष्टम् औष्ट । अवशम् औश्व औश्म । उवाश ऊशतुः

ऊशुः । उश्यात् । वशिता । वशिष्यति । अवशिष्यत् । अवाशीत्, अवशीत् । असक् भुवि । अस्ति

**श्नास्त्योर्लुक् । ४ । २ । ९० ।**

श्नप्रत्ययस्यास्तेश्चाकारस्य शित्यविति लुग् भवति । स्तः सन्ति ।

**अस्तेः सि हस्त्वेति । ४ । ३ । ७३ ।**

अस्तेः सकारस्य सादौ प्रत्यये परे लुग्, एति परे तु हो भवति । असि स्थः स्थ । अस्मि स्वः स्मः । स्यात् स्याताम् स्युः । स्याः स्यातम् स्यात । स्याम् स्याव स्याम । अस्तु, स्तात् स्ताम् सन्तु । एधि, स्तात् स्तम् स्त । असानि असाव असाम । 'एत्यस्तेर्वृद्धिः' इति वृद्धौ 'स. सिजस्तेर्दिस्योः' इति ईति आसीत् आस्ताम् आसन् । आसी' आस्तम् आस्त । आसम् आस्व आस्म ।

**अस्तिब्रुवोर्भूवचावशिति । ४ । ४ । १ ।**

अस्तिब्रुवोर्यथासङ्ख्यं भूवचावादेशौ भवतः, अशिति विषये । बभूव । भूयात् । भविता । भविष्यति । अभविष्यत् । अभूत् ।

**इत्यदादिपरस्मैपदं समाप्तम् ।**

---

# अथात्मनेपदम् ।

इंङ्क् अध्ययने । अधीते अधीयाते 'अनतोऽन्तोऽदात्मने' अधीयते । अधीषे अधीयाथे अधीध्वे । अधीये अधीवहे अधीमहे । अधीयीत अधीयीयाताम् अधीयीरन् । अधीताम् अधी-याताम् अधीयताम् । अधीष्व अधीयाथाम् अधीध्वम् । अध्य-यै अध्ययावहै अध्ययामहै । अध्यैत अध्यैयाताम् अध्यैयत । अध्यैथाः अध्यैयाथाम् अध्यैध्वम् । अध्यैयि अध्यैवहि अध्यैमहि।

**गाः परोक्षायाम् । ४ । ४ । २६ ।**

इङ्धातो परोक्षाविषये गा भवति । अधिजगे अधिजगाते अधिजगिरे । अध्येषीष्ट । अध्येता । अध्येष्यते ।

**वाऽद्यतनीक्रियातिपत्त्योर्गीङ् । ४ । ४ । २८ ।**

अद्यतनीक्रियातिपत्त्योरिङो गीङ् वा भवति । अध्यैष्यत, अध्यगीष्यत । अध्यैष्ट अध्यैषाताम् अध्यैषत । अध्यगीष्ट अध्यगीषाताम् अध्यगीषत । शीङ्क् स्वप्ने

**शीङ एः शिति । ४ । ३ । १०४ ।**

शिति परे शीङ एर्भवति । शेते शयाते ।

**शीङो रत् । ४ । २ । ११५ ।**

शीङः परस्यात्मनेपदस्थस्यान्तो रत् भवति । शेरते । शेषे शयाथे शेध्वे । शये शेवहे शेमहे । शयीत शयीयाताम् शयीरन् । शेताम् शयाताम् शेरताम् । अशेत अशयाताम् अशेरत । शिश्ये शिश्याते शिश्यिरे । शयिषीष्ट । शयिता । शयिष्यते । अशयिष्यत । अशयिष्ट । ह्नुंङक् अपनयने ह्नुते । षूङौक् प्राणिगर्भविमोचने । सूते सुवाते सुवते । सुषे सुवाथे सूध्वे । सुवे सूवहे सूमहे । सुवीत सुवीयाताम् सुवीरन् । सूताम् सुवाताम् सुवताम् । सूष्व सुवाथाम् सूध्वम् ।

**सूतेः पञ्चम्याम् । ४ । ३ । १३ ।**

सूते. पञ्चम्यां गुणो न भवति । सुवै सुवावहै सुवामहै । असूत असुवाताम् असुवत । सुषुवे । सोषीष्ट, सविषीष्ट । सोता, सविता । सोष्यते, सविष्यते असविष्यत, असोष्यत । असविष्ट, असोष्ट । पृचैङ् पृजुङ् पिजुकि सम्पर्चने । पृक्ते पृचाते पृचते । पृचीत । पृक्ताम् । अपृक्त । पपृचे । पृचिषीष्ट । पर्चिता । पर्चिष्यते । अपर्चिष्यत । अपर्चिष्ट । पृङ्क्ते पृञ्जाते पृञ्जते । पृङ्क्षे पृञ्जाथे पृङ्ग्ध्वे । पृञ्जे पृञ्ज्वहे पृञ्ज्महे । पृञ्जीत । पृङ्क्ताम् । अपृङ्क्त । पपृञ्जे । पृञ्जिषीष्ट । पृञ्जिता । पृञ्जिष्यते । अपृञ्जिष्यत । अपृञ्जिष्ट । पिञ्जते । पिपिञ्जे । अपिञ्जिष्ट । वृजैकि वर्जने । णिजुकि विशुद्धौ । निङ्क्ते । निञ्जीत । निङ्क्ताम् । अनिङ्क्त । निनिञ्जे । निङ्क्षीष्ट । निङ्क्ता । निङ्क्ष्यते । अनिङ्क्ष्यत ।

अनिङ्क्त । शिजुकि अव्यक्ते शब्दे । शिङ्क्ते शिञ्जाते शिञ्जते । शिञ्जीत । शिङ्क्ताम् । अशिङ्क्त । शिशिञ्जे । शिञ्जिषीष्ट । शिञ्जिता । शिञ्जिष्यते । अशिञ्जिष्यत । अशिञ्जिष्ट अशिञ्जिषाताम् अशिञ्जिषत । ईडिक् स्तुतौ । ईट्टे ईडाते ईडते ।

ईशीडः सेध्वेस्वध्वमोः । ४ । ४ । ८७ ।

आभ्यां वर्तमानासेध्वयोः पञ्चमीस्वध्वमोश्चादिरिड् भवति । ईडिषे ईडाथे ईडिध्वे । ईडे ईडिवहे ईडिमहे । ईडीत ईडीयाताम् ईडीरन् । ईट्टाम् ईडाताम् ईडताम् । ईडिष्व ईडाथाम् ईडिध्वम् । ईडै ईडावहै ईडामहै । ऐट्ट ऐडाताम् ऐडत । ऐट्ठाः ऐडाथाम् ऐड्ढ्वम् । ऐडि ऐड्वहि ऐड्महि । ईडाञ्चक्रे, ईडाम्बभूव, ईडामास । ईडिषीष्ट । ईडिता । ईडिष्यते । ऐडिष्यत । ऐडिष्ट ऐडिषाताम् ऐडिषत । ईरिक् गतिकम्पनयोः । ईर्ते ईराते ईरते । ईराञ्चक्रे, ईराम्बभूव, ईरामास । ऐरिष्ट । ईशिक् ऐश्वर्ये । ईष्टे ईशाते ईशते । ईशिषे ईशाथे ईशिध्वे । ईशीत । ईष्टाम् ईशाताम् ईशताम् । ईशिष्व ईशाथाम् ईशिध्वम् । ऐष्ट ऐशाताम् ऐशत । ईशाञ्चक्रे । ईशाम्बभूव । ईशामास । ऐशिष्ट । वसिक् आच्छादने । वस्ते । वसीत । वस्ताम् । अवस्त । ववसे । वसिषीष्ट । वसिता । वसिष्यते । अवसिष्यत । अवसिष्ट । आङः शासूकि इच्छायाम् । प्रायेणायमाङ्पूर्वः । आशास्ते आशासीत । आशास्ताम् । आशास्त । आशशासे । आशासिषीष्ट । आशासिता । आशासिष्यते ।

आशासिष्यत । आशासिष्ट । आसिक् उपवेशने । आस्ते । आसीत । आस्ताम् । आस्त । आसाञ्चक्रे । आसाम्बभूव । आसामास । आसिषीष्ट । आसिता । आसिष्यते । आसिष्यत । आसिष्ट । कसुकि गतिसातनयो । कंस्ते । कंसीत । कंस्ताम् । अकंस्त । चकंसे । कसिता । कंसिषीष्ट । कंसिष्यते । अकंसिष्यत । अकंसिष्ट । णिसुकि चुम्बने । निंस्ते । अनिंस्त । निनिंसे । निंसिता । अनिंसिष्ट । चक्षिक् व्यक्तायां वाचि । 'संयोगस्यादौ स्कोर्लुक्' इति चष्टे चक्षाते चक्षते । चक्षे चक्षाथे चड्ढ्वे । चक्षे चक्ष्वहे चक्ष्महे । चक्षीत । चष्टाम् चक्षाताम् चक्षताम् । चक्ष्व चक्षाथाम् चड्ढ्वम् । चक्षै चक्षावहै चक्षामहै । अचष्ट अचक्षाताम् अचक्षत । अचष्ठा. अचक्षाथाम् अचड्ढ्वम् । अचक्षि अचक्ष्वहि अचक्ष्महि । परोक्षायां तु

**नवा परोक्षायाम् । ४ । ४ । ५ ।**

चक्षो वाच्यर्थे क्शाग्ख्यागौ परोक्षाया वा भवतः । गित्त्वादुभयपदी चक्शौ चक्शतु चक्शुः । चक्शे चक्शाते चक्शिरे । चख्यौ चख्यतु चख्युः । चख्ये चख्याते चख्यिरे । पक्षे चचक्षे चचक्षाते चचक्षिरे ।

**चक्षो वाचि क्शांग् ख्यांग् । ४ । ४ । ४ ।**

वागर्थस्य चक्षोऽशिति विषये क्शांग्ख्यांगौ भवतः । क्शायात्, क्शेयात् । ख्यायात्, ख्येयात् । क्शासीष्ट, ख्यासीष्ट । क्शातासि, क्शातासे । ख्यातासि, ख्यातासे । क्शास्यति, क्शास्यते । ख्या-

स्यति, ख्यास्यते । अक्शास्यत्, अक्शास्यत । अख्यास्यत्, अख्यास्यत । अक्शासीत्, अक्शास्त । अडि अख्यत्, अख्यत । इत्यात्मनेपदं समाप्तम् ।

**अथोभयपदिनः ।**

ऊर्णुग्क् आच्छादने

**वोर्ण्णोः । ४ । ३ । ६० ।**

अद्व्युक्तस्योर्ण्णोर्व्यञ्जनादौ विति और्वा भवति । ऊर्णौति, ऊर्णोति ऊर्णुत ऊर्णुवन्ति । ऊर्णौषि, ऊर्णोषि ऊर्णुथः ऊर्णुथ । ऊर्णौमि, ऊर्णोमि ऊर्णुव ऊर्णुम । ऊर्णुते ऊर्णुवाते ऊर्णुवते । ऊर्णुषे ऊर्णुवाथे ऊर्णुध्वे । ऊर्णुवे ऊर्णुवहे ऊर्णुमहे । ऊर्णुयात्, ऊर्णुवीत । ऊर्णोतु, ऊर्णौतु, ऊर्णुतात् ऊर्णुताम् ऊर्णुवन्तु । ऊर्णुताम् ऊर्णुवाताम् ऊर्णुवताम् ।

**न दिस्योः । ४ । ३ । ६१ ।**

ऊर्णोर्दिस्योः परयोरौर्न भवति । और्णोत् और्णुताम् और्णुवन् । और्णोः और्णुतम् और्णुत। और्णुत और्णुवाताम् और्णुवत। परोक्षायाम्

**स्वरादेर्द्वितीयः । ४ । १ । ४ ।**

स्वरादेर्द्व्युक्तिभाजो धातोर्द्वितीयोंऽश एकस्वरो द्विर्भवति । अनेन 'र्णु' इत्यस्य द्वित्वे प्राप्ते

**अयि रः । ४ । १ । ६ ।**

स्वरादेर्धातोर्द्वितीयस्यांशस्यैकस्वरस्य सयोगादी रो द्विर्न भवति। इति रकारस्य निषेधे ऊर्णुनाव ऊर्णुनुवतु. ऊर्णुनुवु'।

**वोर्णोः । ४ । ३ । १९ ।**

ऊर्णोरिड् वा ङिद्वद् भवति। ऊर्णुनुविथ, ऊर्णुनविथ। ऊर्णुनुवे ऊर्णुनुवाते ऊर्णुनुविरे। ऊर्णूयात्। ऊर्णविष्ट, ऊर्णुनुविष्ट। ऊर्णवितासि, ऊर्णुनुवितासि। ऊर्णनवितासे, ऊर्णुनुवितासे। ऊर्णविष्यति, ऊणुनुविष्यति। ऊर्णनविष्यते, ऊर्णुनुविष्यते। और्णविष्यत्, और्णुनुविष्यत्। और्णनविष्यत, और्णुनुविष्यत।

**वोर्णुगः सेटि । ४ । ३ । ४६ ।**

ऊर्णोः सेटि सिचि परस्मैपदे वृद्धिर्वा भवति। और्णावीत्, और्णवीत्, और्णुवीत्। और्णविष्ट, और्णुविष्ट। ष्टुंगक् स्तुतौ। स्तौति स्तुतः स्तुवन्ति। स्तौषि स्तुथः स्तुथ। स्तौमि स्तुवः स्तुम.।

**यङ्तुरुस्तोर्बहुलम् । ४ । ३ । ६४ ।**

यङ्लुबन्तात् तुरुस्तुभ्यश्च व्यञ्जनादौ विति ईत् भवति बहुलम्। स्तवीति, स्तवीमि इत्याद्यपि। स्तुत्ते स्तुवाते स्तुवते। स्तुयात्। स्तुवीत। स्तौतु। स्तुताम्। अस्तौत, अस्तुत। तुष्टाव तुष्टुवतुः तुष्टुवुः। तुष्टुवे। स्तूयात्। स्तोषीष्ट। स्तोतासि, स्तोतासे। स्तोष्यति, स्तोष्यते। अस्तोष्यत्, अस्तोष्यत। 'धूगसुस्तोः परस्मै' इति सिचि अस्तावीत् अस्ताविष्टाम् अस्ताविषुः। अस्तोष्ट। ब्रूंगक् व्यक्तायां वाचि।

**ब्रूतः परादिः । ४ । ३ । ६३ ।**

ब्रुव ऊतः व्यञ्जनादौ विति परादिरीद् भवति । ब्रवीति ब्रूतः ब्रुवन्ति । ब्रवीषि ब्रूथः ब्रूथ । ब्रवीमि ब्रूवः ब्रूमः ।

**ब्रूगः पञ्चानां पञ्चाहश्च । ४ । २ । ११८ ।**

ब्रूगः परेषां तिवादीनां पञ्चानां यथासङ्ख्य पञ्च णवादयो भवन्ति, तद्योगे ब्रूग आहश्च । आह आहतुः आहुः । 'नहाहोर्धतौ' आत्थ आहथुः । ब्रूते ब्रुवाते । ब्रूयात् । ब्रवीत । ब्रूताम् ब्रुवाताम् ब्रुवताम् । ब्रवीतु, ब्रूतात् ब्रूताम् ब्रुवन्तु । ब्रूहि । ब्रवाणि ब्रवाव ब्रवाम । अब्रवीत् अब्रूताम् अब्रूवन् । अब्रवीः । अब्रूत अब्रुवाताम् अब्रुवत । परोक्षायां वचादेशे उवाच ऊचतुः ऊचुः । ऊचे ऊचाते ऊचिरे । उच्यात्, वक्षीष्ट । वक्तासि, वक्तासे । वक्ष्यति, वक्ष्यते । अवक्ष्यत्, अवक्ष्यत । अवोचत् अवोचताम् अवोचन् । अवोचत अवोचेताम् अवोचत । द्विषींक् अप्रीतौ । द्वेष्टि द्विष्टः द्विषन्ति । द्वेक्षि द्विष्ठः द्विष्ठ । द्वेष्मि द्विष्वः द्विष्मः । द्विष्टे । द्विष्यात् । द्विषीत । द्वेष्टु द्विष्टाम् द्विषन्तु । द्विड्ढि द्विष्टम् द्विष्ट । द्वेषाणि द्वेषाव द्वेषाम । द्विष्टाम् द्विषाताम् द्विषताम् । अद्वेट् अद्विष्टाम् 'वा द्विषातोऽनः पुस्' अद्विषुः, अद्विषन् । अद्विष्ट अद्विषाताम् अद्विषत । दिद्वेष दिद्विषतुः । दिद्विषे दिद्विषाते दिद्विषिरे । द्विष्यात्, द्विक्षीष्ट । द्वेष्टासि, द्वेष्टासे । द्वेक्ष्यति, द्वेक्ष्यते । अद्वेक्ष्यत्, अद्वेक्ष्यत । अद्यतन्यां सकि अद्विक्षत् अद्विक्षताम् अद्विक्षन् । अद्विक्षत ।

**स्वरेऽतः । ४ । ३ । ७८ ।**

सकोऽस्य स्वरादौ प्रत्यये परे लुग् भवति । अद्विक्षाताम् अद्विक्षत । दुहींक् क्षरणे ' भ्वादेर्दादेर्घः ' 'अधश्चतुर्थात् तथोर्धः' दोग्धि दुग्ध दुहन्ति । धोक्षि । दुग्धे दुहाते दुहते । दुह्यात्, दुहीत । दोग्धु, दुग्धात् दुग्धाम् दुहन्तु । दुग्धि । दुग्धाम् दुहाताम् दुहताम् । धुक्ष्व दुहाथाम् धुग्ध्वम् । दोहै दोहावहै दोहामहै । अधोक् अदुग्धाम् अदुहन् । अदुग्ध अदुहाताम् अदुहत । अदुग्धाः । दुदोह । दुदुहे । दुह्यात्, धुक्षीष्ट । दोग्धा । धोक्ष्यति, धोक्ष्यते । अधोक्ष्यत्, अधोक्ष्यत । अधुक्षत् अधुक्षताम् अधुक्षन् । आत्मनेपदे ' दुहदिह–' इत्यादिना दन्त्यादौ सको वा लुक् अदुग्ध, अधुक्षत अधुक्षाताम् अधुक्षन्त । अदुग्धाः, अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम्, अधुक्षध्वम् । अधुक्षि अधुक्षावहि, अधुग्वहि अधुक्षामहि, अधुग्महि । दिहींक् उपलेपे । देग्धि, दिग्धे । दिह्यात्, दिहीत । देग्धु, दिग्धाम् । अधेक्, अदिग्ध । दिदेह, दिदिहे । दिह्यात्, धिक्षीष्ट । देग्धा । धेक्ष्यति, धेक्ष्यते । अधेक्ष्यत्, अधेक्ष्यत । अधिक्षत् अधिक्षताम् अधिक्षन् । अदिग्ध, अधिक्षत अधिक्षाताम् अधिक्षन्त । लिहींक् आस्वादने । लेढि लीढः लिहन्ति । लेक्षि । ' हो धुट्पदान्ते ' ढत्वम्, ' अधश्चतुर्थात् ' इति थस्य धत्वम्, ' तवर्गस्य ' इति धो ढत्वम् ' ढस्तड्ढे ' इति ढो लुक् दीर्घत्वं च लीढ लीढ । लेह्मि लिह्वः लिह्मः । लीढे लिहाते लिहते । लिह्यात् । लिहीत ।

लेढु, लीढाम् । अलेट्, अलीढ । लिलेह, लिलिहे । लिह्यात्, लिक्षीष्ट । लेढा । लेक्ष्यति, लेक्ष्यते । अलेक्ष्यत्, अलेक्ष्यत । अलिक्षत् अलिक्षताम् अलिक्षन् । अलीढ, अलिक्षत अलिक्षाताम् अलिक्षत । अलीढाः, अलिक्षथाः अलिक्षाथाम् अलिक्षध्वम्, अलीढ्वम् । अलीक्षावहि, अलिह्वहि अलिक्षामहि अलिह्महि ।

## इत्युभयपदं समाप्तम् ।

## अथ ह्वादयः ।

ह्वादयोऽपि कानुबन्धाः । हुंक् दानादनयोः ।

### ह्वः शिति । ४ । १ । १२ ।

जुहोत्यादयो धातवः शिति द्विर्भवन्ति । जुहोति जुहुतः जुह्वति । जुहोषि जुहुथः जुहुथ । जुहोमि जुहुव जुहुमः । जुहुयात् जुहुयाताम् जुहुयुः । जुहोतु, जुहुतात् जुहुताम् जुह्वतु । जुहुधि, जुहुतात् जुहुतम् जुहुत । जुहवानि जुहवाव जुहवाम । अजुहोत् अजुहुताम् अजुहवुः 'अतः' पुसि गुणे च सिद्धम् । अजुहोः अजुहुतम् अजुहुत । अजुहवम् अजुहुव अजुहुम । परोक्षायाम्—

### भीह्रीभृहोस्तिवत् । ३ । ४ । ५० ।

एभ्यः परस्याः परोक्षाया आम् वा भवति, स च तिवृत् इति 'ह्वः शिति' इति द्वित्वम् । जुहवाञ्चकार, जुहवाम्बभूव,

जुह्वामास । पक्षे जुहाव जुहुवतुः जुहुवुः । जुहविथ, जुहोथ । हूयात् । होता । होष्यति । अहोष्यत् । अहौषीत् अहौष्टाम् अहौषुः । हांक् त्यागे । जहाति । 'हाकः' जहितः । पक्षे

**एषामीर्व्यञ्जनेऽदः । ४ । २ । ९७ ।**

द्व्युक्तानां जक्षादिपञ्चानां श्नाप्रत्ययस्य चातोऽविति शिति परे ईर्भवति । जहीतः, जहति । जहासि जहीथः, जहिथः जहीथ, जहिथ । जहामि जहीवः, जहिवः जहीमः, जहिमः ।

**यि लुक् । ४ । २ । १०२ ।**

यादौ शिति परे हाक आतो लुग् भवति । जह्यात् । जहातु, जहीतात्, जहितात् जहिताम्, जहीताम् जहतु ।

**आ च हौ । ४ । २ । १०१ ।**

हाको हौ आत् इश्च वा भवति । जहिहि, जहीहि, जहाहि । जहीतात्, जहितात् जहिताम्, जहीताम् जहीत, जहित । जहानि जहाव जहाम । अजहात् अजहीताम्, अजहिताम् अजहुः । अजहाः अजहीतम्, अजहितम् अजहीत, अजहित । अजहाम् अजहीव, अजहिव अजहीम, अजहिम । जहौ जहतुः जहुः । जहिथ, जहाथ जहथुः जह । जहौ जहिव जहिम । हेयात् । हाता । हास्यति । अहास्यत् । अहासीत् । ञिभींक् भये । बिभेति ।

**भियो नवा । ४ । २ । ९९ ।**

भियो व्यञ्जनादौ शित्यविति इर्वा भवति । बिभीतः, बिभितः । बिभ्यति । बिभेषि बिभीथः, बिभिथः बिभीथ, बिभिथ । बिभेमि बिभीवः, बिभिवः बिभिम, बिभीमः । बिभीयात्, बिभियात् । बिभेतु, बिभीतात्, बिभितात्, बिभीताम्, बिभिताम् बिभ्यतु । बिभीहि, बिभिहि । अबिभेत् अबिभीताम्, अबिभिताम् अबिभयुः । बिभयाञ्चकार । बिभयाम्बभूव । बिभयामास । बिभाय बिभ्यतुः बिभ्युः । भीयात् । भेता । भेष्यति । अभेष्यत् । अभैषीत् अभैष्टाम् अभैषुः । ह्रींक् लज्जायाम् । जिह्रेति जिह्रीतः जिह्रियति । जिह्रीयात् । जिह्रेतु । जिह्रीहि । जिह्रयाणि । अजिह्रेत् अजिह्रयुः । अजिह्रे । जिह्रयाञ्चकार, जिह्रयाम्बभूव, जिह्रयामास । जिह्राय जिह्रियतुः जिह्रियुः । ह्रीयात् । ह्रेता । ह्रेष्यति । अह्रेष्यत् । अह्रैषीत् । पृंक् पालनपूरणयोः ।

**पृभृमाहाङामिः । ४ । १ । ५८ ।**

एषां द्वित्वे सति शिति पूर्वस्य इर्भवति । पिपर्ति

**ओष्ठ्यादुर् । ४ । ४ । ११७ ।**

धातोः सम्बन्धिन ओष्ठ्यात् परस्य ऋकारस्य उर्भवति क्ङिति । पिपूर्तः, पिपुरति । पिपर्षि पिपूर्थः पिपूर्थ । पिपर्मि पिपूर्वः पिपूर्मः । पिपूर्यात् । पिपर्तु, पिपूर्तात् । अपिपः अपिपूर्ताम् अपिपरुः । पपार पप्रतुः पप्रुः । पपरिथ । पूर्यात् 'वृतो नवाऽनाशीःसिच्परस्मै च' इति परीता, परिता । परिष्यति, परीष्यति । अपरीष्यत्, अपरिष्यत् ।

अपारीत् । ह्रस्वोऽपि पॄ पिपर्ति पिपृतः पिप्रति इत्यादय । ऋंक् गतौ इयर्ति इयृतः इय्रति । इयर्षि इयृथ इयृथ । इयर्मि इयृव इयृमः । इयृयात् । इयर्तु, इयृतात् इयृताम् इय्रतु । इयृहि । इयराणि इयराव इयराम । ऐ ऐयृताम् ऐयरु. । ऐः ऐयृतम् ऐयृत । ऐयरम् ऐयृव ऐयृम । आर आरतुः आरुः । आरिथ । ' क्ययङाशीर्ये ' अर्यात् । अर्ता । अरिष्यति । ' सर्त्यर्तेर्वा ' आरत् आरताम् आरन् पक्षे आर्षीत् आर्ष्टाम् आर्षु । 

**इति ह्वादौ परस्मैपदं समाप्तम् ।**

---

## अथात्मनेपदम् ।

ओहांङ्क् गतौ । जिहीते जिहाते जिहते । जिहीषे जिहाथे जिहीध्वे। जिहे जिहीवहे जिहीमहे । जिहीत जिहीयाताम् जिहीरन् । जिहीताम् जिहाताम् जिहताम् । जिहै जिहावहै जिहामहै । अजिहीत अजिहाताम् अजिहत । अजिहीथाः अजिहाथाम् अजिहीध्वम् । अजिहि अजिहीवहि अजिहीमहि । जहे जहाते जहिरे । जहिषे । हासीष्ट । हाता । हास्यते । अहास्यत । अहास्त अहासाताम् अहासत । माङ्क् मानशब्दयोः । मिमीते मिमाते मिमते । मिमीषे मिमाथे मिमीध्वे । मिमे मिमीवहे मिमीमहे । मिमीत मिमीयाताम् मिमीरन् । मिमीताम् मिमाताम् मिमताम् । अमिमीत अमिमाताम् अमिमत । ममे ममाते ममिरे । मासीष्ट । मातासे । मास्यते । अमास्यत । अमास्त । इत्यात्मनेपदं समाप्तम् ॥

## अथोभयपदम् ।

डुदाग्क् दाने । ददाति 'श्नश्चात' इत्याकारलुकि दत्तः ददति । ददासि दत्थ दत्थ । ददामि दद्वः दद्मः । दत्ते ददाते ददते । दत्से ददाथे दद्ध्वे । ददे दद्वहे दद्महे । दद्यात् दद्याताम् दद्युः । ददीत ददीयाताम् ददीरन् । ददातु, दत्तात् दत्ताम् ददतु ।

## हौ दः । ४ । १ । ३१ ।

दासञ्ज्ञकस्य हौ परे एर्भवति, न च द्विः । देहि दत्तम् दत्त । ददानि ददाव ददाम । दत्ताम् ददाताम् ददताम् । दत्स्व । अददात् अदत्ताम् अददुः । अददाः । अदत्त अददाताम् अददत । ददौ ददतुः ददुः । ददे ददाते ददिरे । देयात् । दासीष्ट । दातासि, दातासे । दास्यति, दास्यते । अदास्यत्, अदास्यत । 'पिबैति–' इत्यादिना सिचो लुक् अदात् अदाताम् अदुः । अदाः अदातम् अदात । अदाम् अदाव अदाम । 'इश्च स्थादः' 'धुड्ह्रस्वात्–' इति अदित अदिषाताम् अदिषत । अदिथाः अदिषाथाम् अदिड्ढ्वम् । अदिषि अदिष्वहि अदिष्महि । डुधांग्क् धारणे च । दधाति ।

## धागस्तथोश्च । २ । १ । ७८ ।

धागश्चतुर्थान्तस्य दादेरादेर्दस्य तथोः स्ध्वोश्च प्रत्यययोः परयोश्चतुर्थो भवति । धत्तः दधति । दधासि धत्थः धत्थ । दधामि

दध्वः दध्मः । धत्ते दधाते दधते । धत्से दधाथे धद्ध्वे । दधे दध्वहे दध्महे । दध्यात् । दधीत । दधातु, धत्तात् धत्ताम् दधतु । धेहि, धत्तात् धत्तम् धत्त । दधानि दधाव दधाम । धत्ताम् दधाताम् दधताम् । धत्स्व दधाथाम् धद्ध्वम् । दधै दधावहै दधामहै । अदधात् अधत्ताम् अदधुः । अधत्त अदधाताम् अदधत । अधत्थाः अदधाथाम् अधद्ध्वम् । अदधि अदध्वहि अदध्महि । दधौ दधतुः दधुः । दध दधाते दधिरे । धेयात् । धासीष्ट । धाता । धास्यति । धास्यते । अधास्यत् । अधास्यत । अधात् अधाताम् अधुः । अधित अधिषाताम् अधिषत । अधिथाः अधिषाथाम् अधिड्ढ्वम् । अधिषि अधिष्वहि अधिष्महि । डुभृञ् पोषणे च । 'पॄभृमाहाङामिः' बिभर्ति बिभृतः बिभ्रति । बिभर्षि बिभृथः बिभृथ । बिभर्मि बिभृवः बिभृमः । बिभृते बिभ्राते बिभ्रते । बिभृषे बिभ्राथे बिभृध्वे । बिभ्रे बिभृवहे बिभृमहे । बिभृयात्, बिभ्रीत । बिभर्तु, बिभृतात् बिभृताम् बिभ्रतु । बिभृहि । बिभराणि बिभराव बिभराम । बिभृताम् बिभ्राताम् बिभ्रताम् । बिभृष्व बिभ्राथाम् बिभृध्वम् । अबिभः अबिभृताम् अबिभरुः । अबिभृत अबिभ्राताम् अबिभ्रत । बिभराञ्चकार, बिभराञ्चक्रे बिभराम्बभूव बिभरामास । बभार । बभ्रे । भ्रियात् ।

**ऋवर्णात् । ४ । ३ । ३६ ।**

ऋवर्णान्ताद् धातोरनिटावात्मनेपदविषयौ सिजाशिषौ किद्वद्

भवत । भृषीष्ट । भर्ता । भरिष्यति । भरिष्यते । अभरिष्यत् । अभरिष्यत । अभार्षीत् अभार्ष्टाम् अभार्षुः । अभृत अभृषाताम् अभृषत । णिजूंकी शौचे च ।

**निजां शित्येत् । ४ । १ । ५७ ।**

निज्विज्विषां शिति विषये द्वित्वे सति पूर्वस्यैद् भवति । नेनेक्ति नेनिक्त. नेनिजति । नेनेक्षि नेनिक्थः नेनिक्थ । नेनेज्मि नेनिज्व नेनिज्मः । नेनिक्ते नेनिजाते नेनिजते । नेनिक्षे नेनिजाथे नेनिग्ध्वे । नेनिजे नेनिज्वहे नेनिज्महे । नेनिज्यात् । नेनिजीत । नेनेक्तु नेनिक्ताम् नेनिजतु । नेनिग्धि + नेनिक्ताम् नेनिजाताम् नेनिजताम् । नेनिक्ष्व नेनिजाथाम् नेनिग्ध्वम् । नेनेजै नेनेजावहै नेनेजामहै । अनेनेक् अनेनिक्ताम् अनेनिजु । अनेनिक्त अनेनिजाताम् अनेनिजत । निनेज । निनिजे । निज्यात् । निक्षीष्ट । नेक्ता । नेक्ष्यति, नेक्ष्यते । अनेक्ष्यत्, अनेक्ष्यत । अनैक्षीत् अनैक्ताम् अनैक्षुः । अनिक्त अनिक्षाताम् अनिक्षत । विजूंकी पृथग्भावे । वेवेक्ति वेविक्तः वेविजति । वेविक्ते वेविजाते वेविजते । वेविज्यात् । वेविजीत। वेवेक्तु । वेविक्ताम् । अवेवेक् । अवेविक्त । विवेज । विविजे । विज्यात् । विक्षीष्ट । वेक्ता । वेक्ष्यति । वेक्ष्यते । अवेक्ष्यत् । अवेक्ष्यत । ऋदित्त्वादङि अविजत् । पक्षे अवैक्षीत् अवैक्ताम् अवैक्षु. । अविक्त अविक्षाताम् अविक्षत । विष्लृंकी व्याप्तौ । वेवेष्टि वेविष्ट. वेविषति । वेविष्टे । वेविष्यात् । वेविषीत ।

वेवेष्टु । वेविष्टाम् । अवेवेट् अवेविष्टाम् । विवेष । विविषे । विष्यात् । विक्षीष्ट । वेष्टा । वेक्ष्यति । वेक्ष्यते । अवेक्ष्यत् । अवेक्ष्यत । ऌदित्त्वादङि अविषत् अविषताम् अविषन् । सकि अविक्षत अविक्षाताम् अविक्षन्त । अविक्षथा अविक्षाथाम् अविक्षध्वम् । अविक्षि अविक्षावहि अविक्षामहि । इत्युभयपदं समाप्तम् ।

इति ह्वादिगणः समाप्तः ।

---

## अथ दिवादिगणः ।

---

चानुबन्धा दिवादय. । दिवूच् क्रीडाजयेच्छापणिद्युतिस्तुनिगतिषु ।

**दिवादेः श्यः । ३ । ४ । ७२ ।**

दिवादिभ्य कर्तरि विहिते शिति परे श्य प्रत्ययो भवति । 'भ्वादेर्नामिन —' इति दीव्यति दीव्यत दीव्यन्ति । दीव्यसि दीव्यथ. दीव्यथ । दीव्यामि दीव्याव. दीव्याम । दीव्येत् दीव्येताम् दीव्येयुः। दीव्ये. । दीव्यतु, दीव्यतात् दीव्यताम् दीव्यन्तु । दीव्य । अदीव्यत् अदीव्यताम् अदीव्यन् । अदीव्य. अदीव्यतम् अदीव्यत । अदीव्यम् अदीव्याव अदीव्याम । दिदेव । दीव्यात् । देविता ।देविष्यति। अदेविष्यत् । अदेवीत् अदेविष्टाम् अदेविषुः । जॄष् झॄष्च् जरसि ।

**ऋतां क्ङितीर् । ४ । ४ । ११६ ।**

ऋदन्तस्य धातोः किति ङिति च परे ऋकारस्य इर् भवति । दीर्घे च जीर्यति जीर्यत· जीर्यन्ति । जीर्येत् । जीर्यतु । अजीर्यत् । जजार जेरतु , जजरतु. जेरु , जजरु । जेरिथ, जजरिथ जेरथु , जजरथु जेर, जजर । जजार, जजर जेरिव, जजरिव जेरिम, जजरिम । जीर्यात् । जरीता, जरिता । जरिष्यति, जरीष्यति । अजरीष्यत्, अजरिष्यत् । ‘ ऋदिच्छ्व–’ इति वाऽङि अजरत् अजरताम् अजरन् । पक्षे अजारीत् । झीर्यति । झीर्येत् । झीर्यतु । अझीर्यत् । जझार जझरतुः । झीर्यात् । झरिता, झरीता । झरिष्यति, झरीष्यति । अझरिष्यत् , अझरीष्यत् । अझरत् , अझारीत् । शोंच् तक्षणे ।

**ओतः श्ये । ४ । २ । १०३ ।**

धातोरोकारस्य श्यप्रत्यये परे लुग् भवति । श्यति श्यतः श्यन्ति । श्यसि श्यथ श्यथ । श्यामि श्याव श्याम । श्येत् श्येताम् श्येयु । श्ये· श्येतम् श्येत । श्येयम् श्येव श्येम । श्येतु श्येतात् श्येताम् श्यन्तु । श्य श्यतम् श्यत । श्यानि श्याव श्याम । अश्यत् अश्यताम् अश्यन् । अश्य. अश्यतम् अश्यत । अश्यम् अश्याव अश्याम । शशौ शशतुः शशु' । शशिथ, शशाथ । शायात् । शाता । शास्यति । अशास्यत् । ‘ ट्धेघ्राशाच्छासो वा ’ अशात् अशाताम् अशु ।

पक्षे अशामीत् अशासिष्टाम् अशासिषुः । दों छोंच् छेदने । द्यति । द्येत् । द्यतु । अद्यत् । ददौ ददतु ददुः । ददिथ, ददाथ । देयात् । दाता । दास्यति । अदास्यत् । अदात् अदाताम् अदुः । छ्यति । छ्येत् । छ्यतु । अच्छ्यत् । चच्छौ । छायात् । छाता । छास्यति । अच्छास्यत् । अच्छात्, अच्छासीत् । षोंच् अन्तकर्मणि । स्यति । स्येत् । स्यतु । अस्यत् । ससौ । सेयात् । साता । सास्यति । असास्यत् । असात् असाताम् असुः । असासीत् असासिष्टाम् असासिषुः । व्रीडच् लज्जायाम् । व्रीड्यति । व्रीड्येत् । व्रीड्यतु । अव्रीड्यत् । विव्रीड । व्रीड्यात् । व्रीडिता । व्रीडिष्यति । अव्रीडिष्यत् । अव्रीडीत् । नृतैच् नर्तने । नृत्यति । नृत्येत् । नृत्यतु । अनृत्यत् । ननर्त ननृततुः ननृतु । ननर्तिथ । नृत्यात् । नर्तिता ।

## कृतचृतनृतच्छृदतृदोऽसिचः सादेर्वा । ४ । ४ । ५० ।

एभ्य परस्यासिच मादेरशित आदिरिड् वा भवति । नर्तिष्यति, नर्त्स्यति । अनर्तिष्यत्, अनर्त्स्यत् । अनर्तीत् । कुथच् पूतिभावे । कुथ्यति । कुथ्येत् । कुथ्यतु । अकुथ्यत् । चुकोथ । कुथ्यात् । कोथिता । कोथिष्यति । अकोथिष्यत् । अकोथीत् । पुथच् हिंसायाम् । पुथ्यति । पुथ्येत् । पुथ्यतु । अपुथ्यत् । पुपोथ । पुथ्यात् । पोथिता । पोथिष्यति । अपोथिष्यत् । अपोथीत् । गुधच् परिवेष्टने । गुध्यति । गुध्येत् । गुध्यतु । अगुध्यत् । जुगोध । गुध्यात् । गोधिता । गोधिष्यति । अगोधिष्यत् ।

अगोधीत् । राधंच् वृद्धौ । राध्यनि । राध्येत् । राध्यतु । अरा-ध्यत् । रराध

अवित्परोक्षासेट्थवोरेः । ४ । १ । २३ ।

राधेर्हिंसार्थस्यावित्परोक्षाया सेटि थवि च परे एर्भवति, न च द्वि । रेधतुः रेधु । रेधिथ रेधथु· रेध । रराध रेधिव रेधिम । हिंसार्थस्याभावे आरराधतु आरराधु· । राध्यात् । राधिता । राधिष्यति । अराधिष्यत् । अरात्सीत् अराद्धाम् अरा-त्सु· । व्यधंच् ताडने ।

ज्याव्यधः क्ङिति । ४ । १ । ८१ ।

ज्याव्यधोः सस्वरान्तस्था किति ङिति य्वृद् भवति। विध्यति । विध्येत् । विध्यतु । अविध्यत् । परोक्षाया ‘ ज्याव्येव्यधिव्य-चिव्यथेरि. ’ विव्याध विविधतु विविधु । विध्यात् । व्यद्धा । व्यत्स्यति । अव्यत्स्यत् । अव्यात्सीत् अव्याद्धाम् अव्यात्सुः । क्षिपंच् प्रेरणे । क्षिप्यनि । क्षिप्येत् । क्षिप्यतु । अक्षिप्यत् । चिक्षेप । क्षिप्यात् । क्षेप्ता । क्षेप्स्यति । अक्षेप्स्यत् । अक्षैप्सीत् अक्षैप्ताम् अक्षैप्सु । अक्षैप्सी· । पुष्पच् विकसने । पुष्प्यति । पुष्प्येत् । पुष्प्यतु । अपुष्प्यत् । पुपुष्प । पुष्प्यात् । पुष्पिता । पुष्पिष्यति । अपुष्पिष्यत् । अपुष्पीत् । तिम तीम ष्टिम ष्टीमच् आर्द्रभावे । षिवूच् उतौ । सीव्यति । सीव्येत् । सीव्यतु । असी-व्यत् । सिषेव । सीव्यात । सेविता । सेविष्यति । असेविष्यत् ।

असेवीत् । श्रिवूच् गतिशोषणयो. । ष्ठिवू क्षिवूच् निरसने । ष्ठीव्यति । ष्ठीव्येत् । ष्ठीव्यतु । अष्ठीव्यत् । 'तिर्वा ष्ठिवः' तिष्ठेव तिष्ठिवतु तिष्ठिवु । पक्षे टिष्ठेव टिष्ठिवतु. टिष्ठिवु' । ष्ठीव्यात् । ष्ठेविता । ष्ठेविष्यति । अष्ठेविष्यत् । अष्ठेवीत् । क्षीव्यति । क्षीव्येत् । क्षीव्यतु । अक्षीव्यत् । चिक्षेव । क्षीव्यात् । क्षेविता । क्षेविष्यति । अक्षेविष्यत् । अक्षेवीत् । इषच् गतौ । इष्यति । इष्येत् । इष्यतु । ऐष्यत् । इयेष ईषतु ईषुः । इयेषिथ । इष्यात् । एषिता । एषिष्यति । ऐषिष्यत् । ऐषीत् । ष्णसूच् निरसने । स्नस्यति । सस्नास । स्नसिता । अस्नासीत्, अस्नसीत् । क्नसूच् ह्वृतिदीप्त्यो. क्नस्यति । चक्नास । अक्नसीत्, अक्नासीत् । त्रसैच् भये । त्रस्यति । त्रस्येत् । त्रस्यतु । अत्रस्यत् । त्रस्यात् । त्रसिता । त्रसिष्यति । अत्रसिष्यत् । अत्रासीत्, अत्रसीत् । परोक्षायाम् तत्रास तत्रसतु, त्रेसतुः तत्रसु, त्रेसु । त्रेसिथ तत्रसिथ । 'भ्रासभ्लासभ्रमक्रमत्रसि' इत्यादिना वा श्ये । पक्षे त्रसति । त्रसेत् । त्रसतु । अत्रसत् । ष्युसच दाहे । षह षुहच शक्तौ । सह्यति । सह्येत् । सह्यतु । असह्यत् । ससाह सेहतु सेहु । सेहिथ । सह्यात् । सहिता, सोढा । सहिष्यति । असहिष्यत् । असाहीत्, असहीत् ।

### अथ पुषादिः ।

पुषच पुष्टौ । पुष्यति । पुष्येत् । पुष्यतु । अपुष्यत् । पुपोष । पुष्यात् । पोष्टा । पोक्ष्यति । अपोक्ष्यत् । पुषादित्वादङ् अपुषत् ।

उचच् समवाये । उच्यति । उच्येत् । उच्यतु । औच्यत् । उवोच । उच्यात् । ओचिता । ओचिष्यति । औचिष्यत् । औचत् औचताम् औचन् । लुटच् विलोटने । लुट्यति । लुट्येत् । लुट्यतु । अलुट्यत् । लुलोट । लुट्यात् । लोटिता । लोटिष्यति । अलोटिष्यत् । अलुटत् अलुटताम् अलुटन् । ष्विदाच् गात्रप्रक्षरणे । स्विद्यति । स्विद्येत् । स्विद्यतु । अस्विद्यत् । सिष्वेद । स्विद्यात् । स्वेत्ता । स्वेत्स्यति । अस्वेत्स्यत् । अस्विदत् अस्विदताम् अस्विदन् । क्लिदौच् आर्द्रभावे । क्लिद्यति । चिक्लेद । क्लेदिता । अक्लिदत् । ञिमिदाच् स्नेहने ।

## मिदः श्ये । ४ । ३ । ५ ।

मिदेरुपान्त्यस्य श्ये परे गुणो भवति । मेद्यति । मेद्येत् । मेद्यतु । अमेद्यत् । मिमेद । मिद्यात् । मेदिता । मेदिष्यति । अमेदिष्यत् । अमिदत् अमिदताम् । ञिक्ष्विदाच् मोचने च । क्ष्विद्यति । अक्ष्विद्यत् । चिक्ष्वेद । क्ष्विद्यात् । क्ष्वेदिता । अक्ष्वेदिष्यत् । अक्ष्विदत् । क्षुधच् बुभुक्षायाम् । क्षुध्यति । क्षुध्येत् । क्षुध्यतु । अक्षुध्यत् । चुक्षोध । क्षुध्यात् । क्षोद्धा । क्षोत्स्यति । अक्षोत्स्यत् । अक्षुधत् । शुधच् शौचे । शुध्यति । शुशोध । अशुधत् । क्रुधच् कोपे । क्रुध्यति । क्रुध्येत् । क्रुध्यतु । अक्रुध्यत् । चुक्रोध । क्रुध्यात् । अक्रुधत् । षिधूच् सराद्धौ । सिध्यति । सिषेध । सिध्यात् । सेद्धा । सेत्स्यति । असेत्स्यत् । असिधत् । ऋधूच वृद्धौ ।

ऋध्यति। ऋध्येत्। ऋध्यतु। आर्ध्यत्। आनर्ध। ऋध्यात्। अर्धिता। अर्धिष्यति। आर्धिष्यत्। आर्धत्। गृधूच् अभिवाङ्क्षायाम्। गृध्यति। गृध्येत्। गृध्यतु। अगृध्यत्। जगर्ध। गृध्यात्। गर्धिता। गर्धिष्यति। अगर्धिष्यत्। अगृधत्। रधौच् हिंसासंराद्ध्योः। रध्यति। रध्येत्। रध्यतु। अरध्यत्।

## रध इटि तु परोक्षायामेव। ४। ४। १०१।

रधः स्वरात् परः स्वरादौ प्रत्यये परे नोऽन्तो भवति, इटि तु परोक्षायामेव। ररन्ध ररन्धतु ररन्धु। ररन्धिथ ररन्धिव ररन्धिम। रध्यात् 'धूगौदितः' रधिता, रद्धा। रधिष्यति, रत्स्यति। अरधिष्यत्। अरत्स्यत्। अरधत् अरधताम् अरधन्। तृपौच् प्रीतौ। तृप्यति। तृप्येत्। तृप्यतु। अतृप्यत्। ततर्प ततृपतुः ततृपु। तृप्यात्। 'स्पृशादिसृपो वा' त्रप्ता, तर्प्ता, तर्पिता। त्रप्स्यति, तर्प्स्यति, तर्पिष्यति। अत्रप्स्यत्, अतर्पिष्यत्, अतर्प्स्यत्। 'स्पृशमृशकृषतृपदृपो वा' इति वा सिचि अताप्र्सीत्, अत्राप्सीत्, औदित्त्वाद् वेटि अतर्पीत्, पुषादित्वादङि अतृपत्। दृपौच् हर्षसमोहनयोः। दृप्यति। दृप्येत्। दृप्यतु। अदृप्यत्। ददर्प ददृपतुः ददृपुः। दृप्यात्। दर्प्ता, दर्पिता, द्रप्ता। दर्पिष्यति, दर्प्स्यति, द्रप्स्यति। अदर्पिष्यत्, अदर्प्स्यत, अद्रप्स्यत्। अद्राप्सीत्, अदार्प्सीत्, अदर्पीत्, अदृपत्। कुपच् क्रोधे। कुप्यति। कुप्येत्। कुप्यतु। अकुप्यत्। चुकोप। कुप्यात्। कोपिता। कोपि-

ष्यति । अकोपिष्यत् । अकुपत् । गुपच् व्याकुलत्वे । गुप्यति । जुगोप । गोपिता । अगुपत् । युप रुप लुपच् विमोहने । डिपच् क्षेपे । डिप्यति । डिडेप । डेपिता । अडिपत् । ष्टूपच् समुच्छ्राये । लुभच् गार्ध्ये । लुभ्यति । लुभ्येत् । लुभ्यतु । अलुभ्यत् । लुलोभ । अलुभत् । क्षुभच् सचलने । णभ तुभच् हिंसायाम् । नभ्यति । ननाभ नेभतु नेभुः । नेभिथ । नभ्यात् । नभिता । नभिष्यति । अनभिष्यत् । अनभत् । नशौच् अदर्शने । नश्यति । नश्येत् । नश्यतु । अनश्यत् । ननाश नेशतुः नेशुः । नेशिथ । नश्यात् ।

## नशो धुटि । ४ । ४ । १०९ ।

नशेः स्वरात् परो धुडादौ प्रत्यये परे नोऽन्तो भवति । नंष्टा, नशिता । नङ्क्ष्यति, नशिष्यति । अनङ्क्ष्यत्, अनशिष्यत् ।

## नशेर्नेश् वाऽङि । ४ । ३ । १०२ ।

नशेरङि परे नेश् वा भवति । अनेशत्, अनशत् । उप-सर्गात्तु—

## नशः शः । २ । ३ । ७८ ।

अदुरुपसर्गान्तःस्थाद्रादेः परस्य शान्तस्य नशो नो णो भवति । कुशच् श्लेषणे । कुश्यति । अकुश्यत् । चुकोश । अकुशत् । भृशू भ्रंशूच् अधःपतने । भृश्यति । अभृश्यत् । बभर्श । भर्शिता । अभृशत् । भ्रश्यति । अभ्रश्यत् । बभ्रंश । भ्रश्यात् । भ्रंशिता ।

भ्रंशिष्यति । । अभ्रशत् । वृशच् वरणे । वृश्यति । अवृश्यत् ।
अवृशत् । कृशच् तनुत्वे । कृश्यति । चकर्श । अकृशत् । शुषंच्
शोषणे । शुष्यति । शुशोष । शुष्यात् । शोष्टा । शोक्ष्यति ।
अशोक्ष्यत् । अशुषत् । दुषंच् वैकृत्ये । दुष्यति । अदुष्यत ।
दुदोष । दुष्यात् । दोष्टा । दोक्ष्यति । अदोक्ष्यत् । अदुषत् । श्लिषंच्
आलिङ्गने । श्लिष्यति । अश्लिष्यत । शिश्लेष । श्लिष्यात् । श्लेष्टा ।
श्लेक्ष्यति । अश्लेक्ष्यत् ।

## श्लिषः । ३ । ४ । ५६ ।

अनिटः श्लिषोऽद्यतन्यां सक् भवति । आश्लिक्षत कान्तां
शिवदत्त । आश्लिक्षताम् आश्लिक्षन् ।

## नासत्त्वाश्लेषे । ३ । ४ । ५७ ।

अप्राण्याश्लेषार्थात् श्लिष सक् न भवति । उपाश्लिषत् जतु
काष्ठं च । उपाश्लिषताम् उपाश्लिषन् । प्लुषूच् दाहे । प्लुष्यति ।
पुप्लोष । अप्लुषत् । ञितृषच् पिपासायाम् । तृष्यति । तृष्येत् ।
तृष्यतु । अतृष्यत् । ततर्ष । अतृषत् । तुषं हृषच् तुष्टौ । तुष्यति ।
अतुष्यत् । तुतोष । अतुषत् । हृष्यति । हृष्येत । हृष्यतु ।
अहृष्यत् । जहर्ष । हृष्यात् । हर्षिता । हर्षिष्यति । अहर्षिष्यत् ।
अहृषत् । रुषच् रोषे । रुष्यति । रुरोष । रुष्यात् । रोष्टा, रोषिता ।
रोक्ष्यति । अरोक्ष्यत् । अरुषत् । विसच् प्रेरणे । विस्यति ।

विवेस । अविसत् । कुसच् श्लेषे । कुस्यति । कुस्येत् । अकुस्यत् । चुकोस । अकुसत् । असूच् क्षेपणे । अस्यति । अस्येत् । अस्यतु । आस्यत् । आस आसतुः आसु । अस्यात् । असिता । असिष्यति । आसिष्यत् । आस्थत् आस्थताम् आस्थन् । यसूच् प्रयत्ने । 'त्रासम्लास—' इत्यादिना वा श्य । यस्यति । यस्येत् । यस्यतु । अयस्यत् । यसति । यसेत् । यसतु । अयसत् । ययास येसतुः येसु । येसिथ । यस्यात् । यसिता । यसिष्यति । अयसिष्यत् । अयसत् । जसूच् मोक्षणे । तसू दसूच् उपक्षये । वसूच् स्तम्भे । वुसच् उत्सर्गे । मुसच् खण्डने । मुस्यति । मुमोस । अमुसत् । मसैच् परिणामे । शमू दमूच् उपशमे ।

## शमसप्तकस्य श्ये । ४ । २ । १११ ।

शमादीनां सप्तानां श्ये परे दीर्घो भवति । शाम्यति । शाम्येत् । शाम्यतु । अशाम्यत् । शशाम शेमतु शेमु । शेमिथ । शम्यात् । शमिता । शमिष्यति । अशमिष्यत् । अशमत् । दाम्यति । दाम्येत् । दाम्यतु । अदाम्यत् । ददाम देमतु देमुः । दम्यात् । दमिता । दमिष्यति । अदमिष्यत् । अदमत् । तमूच् काङ्क्षायाम् । ताम्यति । तताम तेमतु. तेमु । तेमिथ । तम्यात् । तमिता । तमिष्यति । अतमिष्यत् । अतमत् । श्रमूच् खेदतपसोः । श्राम्यति । श्राम्येत् । श्राम्यतु । अश्राम्यत् । शश्राम । श्रम्यात् । श्रमिता । श्रमिष्यति । अश्रमिष्यत् । अश्रमत् । भ्रमूच् अनव-

स्थाने । ‘ भ्रासभ्लासभ्रम—’इति भ्राम्यति, भ्रमति । भ्राम्येत्, भ्रमेत् । भ्राम्यतु, भ्रमतु । अभ्राम्यत्, अभ्रमत् । बभ्राम बभ्रमतु:, भ्रेमतु बभ्रमुः, भ्रेमुः । बभ्रमिथ, भ्रेमिथ । भ्रम्यात् । भ्रमिता । भ्रमिष्यति । अभ्रमिष्यत् । अभ्रमत् । क्षमौच् सहने । क्षाम्यति । क्षाम्येत् । क्षाम्यतु । अक्षाम्यत । चक्षाम चक्षमतुः चक्षमुः । क्षमिता, क्षन्ता । क्षमिष्यति, क्षंस्यति । अक्षमिष्यत्, अक्षंस्यत् । अक्षमत् । मदैच् हर्षे । माद्यति । माद्येत् । माद्यतु । अमाद्यत् । ममाद मेदतु मेदुः । मेदिथ । मद्यात् । मदिता । मदिष्यति । अमदिष्यत् । अमदत् । क्लमूच् ग्लानौ । ‘ ष्ठिवूक्लम्वाचम ’ क्लाम्यति । क्लाम्येत । क्लाम्यतु । अक्लाम्यत् । क्लामति क्लामेत् । क्लामतु । अक्लामत् । चक्लाम । क्लम्यात् । क्लमिता । क्लमिष्यति । अक्लमिष्यत् । अक्लमत् । मुहौच् वैचित्त्ये । मुह्यति । मुह्येत् । मुह्यतु । अमुह्यत् । मुमोह । मुह्यात् । मोहिता, इडभावे ‘ मुहद्रुहष्णुहष्णिहो वा ’ मोग्धा पक्षे ढत्वे मोढा । मोहिष्यति, मोक्ष्यति । अमोहिष्यन्, अमोक्ष्यत् । अमुहत् । द्रुहौच् जिघांसायाम् । द्रुह्यति । द्रुह्येत् । द्रुह्यतु । अद्रुह्यत् । दुद्रोह । द्रुह्यात् । द्रोहिता, द्रोग्धा, द्रोढा । द्रोहिष्यति, ध्रोक्ष्यति । अद्रोहिष्यत्, अध्रोक्ष्यत् । अद्रुहत् । ष्णुहौच् उद्गिरणे । स्नुह्यति । स्नुह्येत् । स्नुह्यतु । अस्नुह्यत् । सुष्णोह । स्नुह्यात् । स्नोहिता, स्नोग्धा, स्नोढा । स्नोहिष्यति, स्नोक्ष्यति । अस्नोहिष्यत्, अस्नोक्ष्यत् । अस्नुहत् । ष्णिहौच् प्रीतौ । स्निह्यति । स्निह्येत् । स्निह्यतु ।

अस्निह्यत् । सिष्णेह । स्निह्यात् । स्नेहिता, स्नेग्धा, स्नेढा । स्नेहिष्यति, स्नेक्ष्यति । अस्नेहिष्यत्, अस्नेक्ष्यत् । अस्निहत् ।

### इति पुषादिः परिसमाप्तः ।

षूङौच् प्राणिप्रसवे । सूयते सूयेते सूयन्ते । सूयसे सूयेथे सूयध्वे । सूये सूयावहे सूयामहे । सूयेत सूयेयाताम् सूयेरन् । सूयताम् सूयेताम् सूयन्ताम् । सूयस्व । असूयत । सुषुवे सुषुवाते सुषुविरे । सविषीष्ट, सोषीष्ट । सविता, सोता । सविष्यते, सोष्यते । असविष्यत, असोष्यत । असविष्ट, असोष्ट । दूङ्च् परितापे । दूयते । दूयेत । दूयताम् । अदूयत । दुदुवे । दविता । दविष्यते । अदविष्यत । अदविष्ट । दीङ्च् क्षये । दीयते । दीयेत । दीयताम् । अदीयत ।

### दीय् दीङः क्ङिति स्वरे । ४ । ३ । ९३ ।

दीङः क्ङित्यशिति स्वरे दीय् भवति । दिदीये दिदीयाते दिदीयिरे ।

### यबक्ङिति । ४ । २ । ७ ।

दीङो यपि चाक्ङिति विषये आद् भवति । दासीष्ट । दाता । दास्यते । अदास्यत । अदास्त अदासाताम् अदासत । धींङ्च् अनादरे धीयते । धीयेत । धीयताम् । अधीयत । दिध्ये । धेषीष्ट । धेता । धेष्यते । अधेष्यत । अधेष्ट अधेषाताम् अधे-

षत। मीङ्च् हिंसायाम् । मीयते । मीयेत। मीयताम् । अमीयत। मिम्ये । मेषीष्ट । मेतासे । मेष्यते । अमेष्यत । अमेष्ट । लींङ्च् श्लेषणे । लीयते । लीयेत। लीयताम् । अलीयत । लिल्ये ।

## लीङ्लिनोर्वा। ४ । २ । ९ ।

अनयोर्यपि खल्अच्अल्वर्जितेऽक्ङिति च विषये आद् वा भवति। लेषीष्ट, लासीष्ट। लेता, लाता।लास्यते, लेष्यते। अलास्यत, अलेष्यत । अलास्त अलासाताम् अलासत। अलेष्ट अलेषत । डीङ्च् गतौ डीयते । डिड्ये । डयिषीष्ट । डयितासे । डयिष्यते । अडयिष्यत । अडयिष्ट । व्रीङ्च् वरणे । व्रीयते । विव्रिये । व्रेषीष्ट । व्रेतासे । व्रेष्यते । अव्रेष्यत । अव्रेष्ट । इति सूयत्यादि । पीङ्च् पाने । पीयते । पिप्ये । पेषीष्ट । पेता । पेष्यते । अपेष्यत । अपेष्ट । ईङ्च् गतौ । ईयते । ऐयत । अयाञ्चक्रे । अयाम्बभूव । अयामास । एषीष्ट । एता । एष्यते । ऐष्यत । ऐष्ट । प्रीङ्च् प्रीतौ । प्रीयते । पिप्रिये। प्रेषीष्ट। प्रेता। प्रेष्यते।अप्रेष्ट। युजिच् समाधौ । युज्यते । युज्येत । युज्यताम् । अयुज्यत । युयुजे । युक्षीष्ट । योक्ता । योक्ष्यते । अयोक्ष्यत । अयुक्त । सृजिच् विसर्गे । सृज्यते। ससृजे। स्रष्टा । स्रक्ष्यते । वृतूचि वरणे । पदिच् गतौ । पद्यते । पद्येत । पद्यताम् । अपद्यत । पेदे पेदाते पेदिरे । पत्सीष्ट । पत्ता । पत्स्यते । अपत्स्यत ।

## चिण् ते पदस्तलुक् च । ३ । ४ । ६६ ।

पद्यते कर्तर्यद्यतन्यास्ते परे ञिच् भवति, निमित्ततस्य च लुक् । अपादि अपत्साताम् अपत्सत । अपत्थाः अपत्साथाम् अपद्ध्वम् । अपत्सि अपत्स्वहि अपत्स्महि । विदिच् सत्तायाम् । विद्यते । अविद्यत । विविदे । वित्सीष्ट । वेत्ता । वेत्स्यते । अवेत्स्यत । अवित्त अवित्साताम् अवित्सत । खिदिच् दैन्ये । खिद्यते । चिखिदे । खित्सीष्ट । खेत्ता । खेत्स्यते । अखित्त । युधिच् सम्प्रहारे । युध्यते । युयुधे । युत्सीष्ट । योद्धा । योत्स्यते । अयोत्स्यत । अयुद्ध अयुत्साताम् अयुत्सत । अनो रुधिच् कामे । प्रायेणायमनुपूर्वः । अनुरुध्यते । अनुरुरुधे । अनुरुत्सीष्ट । अनुरोद्धा । अन्वरोत्स्यत । अन्वरुद्ध अन्वरुत्साताम् अन्वरुत्सत । बुधिं मनिच् ज्ञाने । बुध्यते । अबुध्यत । बुबुधे । भुत्सीष्ट । बोद्धासे । भोत्स्यते । अभोत्स्यत । ञिचि अबोधि । पक्षे अबुद्ध अभुत्साताम् अभुत्सत । मन्यते । अमन्यत । मेने मेनाते मेनिरे । मंसीष्ट । मन्ता । मंस्यते । अमस्यत । अमंस्त अमंसाताम् अमंसत । अनिच् प्राणने । जनैचि प्रादुर्भावे ।

**जा ज्ञाजनोऽत्यादौ । ४ । २ । १०४ ।**

ज्ञाजनो शिति जा भवति न त्वनन्तरे तिवादौ । जायते । जायेत । जायताम् । अजायत । जज्ञे जज्ञाते जज्ञिरे । जनिषीष्ट । जनिता । जनिष्यते । अजनिष्यत 'दीपजन–' इति ञिचि पक्षे

**न जनवधः । ४ । ३ । ५४ ।**

अनयोः ञिति णिति कृति ञौ च परे वृद्धिर्न भवति । अजनि, अजनिष्ट अजनिषाताम् अजनिषत । दीपैचि दीप्तौ । दीप्यते । दीप्येत । दीप्यताम् । अदीप्यत । दिदीपे दिदीपाते दिदीपिरे । दीपिषीष्ट । दीपिता । दीपिष्यते । अदीपिष्यत । अदीपि, अदीपिष्ट अदीपिषाताम् अदीपिषत । तपिच् ऐश्वर्ये वा । तप्यते । अतप्यत । तेपे तेपाते तेपिरे । तप्सीष्ट । तप्ता । तप्स्यते । अतप्स्यत । अतप्त अतप्साताम् अतप्सत । पूरैचि आप्यायने । पूर्यते । पूर्येत । पूर्यताम् । अपूर्यत । पुपूरे । पूरिषीष्ट । पूरिता । पूरिष्यते । अपूरिष्यत । अपूरि, अपूरिष्ट अपूरिषाताम् अपूरिषत । घूरैङ् जूरैचि जरायाम् । घूर्यते । अघूर्यत । जुघूरे । घूरिषीष्ट । घूरिता । घूरिष्यते । अघूरिष्यत । अघूरिष्ट । जूर्यते । अजूर्यत । जुजूरे । जूरिता । जूरिषीष्ट । जूरिष्यते । अजूरिष्यत । अजूरिष्ट । धूरैङ् गूरैचि गतौ । तूरैचि त्वरायाम् तूर्यते । तूर्येत । तूर्यताम् । अतूर्यत । तुतूरे । तूरिषीष्ट । तूरिना । तूरिष्यते । अतूरिष्यत । अतूरिष्ट । घूरादयो हिंसायां च । चूरैचि दाहे । क्लिशिच् उपतापे । क्लिश्यते । चिक्लिशे । क्लेशिषीष्ट । क्लेशिता । क्लेशिष्यते । अक्लेशिष्यत । अक्लेशिष्ट । लिशिच् अल्पत्वे । लिश्यते । अलिश्यत । लिलिशे । लिक्षीष्ट । लेष्टा । लेक्ष्यते । अलेक्ष्यत । अलिक्षत अलिक्षाताम् अलिक्षन्त । काशिच् दीप्तौ । काश्यते । अकाश्यत । चकाशे । काशिषीष्ट । काशिता । काशिष्यते ।

अकारिष्यत । अकारिष्ट । इत्यात्मनेपदं समाप्तम् ॥ शकींच् मर्षणे । शक्यते । शक्येत । शक्यताम् । अशक्यत । शेके । शक्षीष्ट । शक्ता । शक्ष्यते । अशक्ष्यत । अशक्त अशक्षाताम् अशक्षत । शक्यति । शक्येत् । शक्यतु । अशक्यत् । शशाक शेकतु शेकुः । शक्यात् । शक्ता । शक्ष्यति । अशक्ष्यत् । अशाक्षीत् अशाक्ताम् अशाक्षुः । शुचॄगैच् पूतिभावे । शुच्यति । शुच्यते । अशुच्यत् । अशुच्यत । शुशोच । शुशुचे । शुच्यात् । शोचिषीष्ट । शोचिता । शोचिष्यति । शोचिष्यते । अशोचिष्यत् । अशोचिष्यत । अशुचत्, अशोचीत् । अशोचिष्ट । रञ्जींच् रागे ।

## अकट्घिनोश्च रञ्जेः । ४ । २ । ५० ।

अकटि घिनणि शवि च परे रञ्जेरुपान्त्यस्य नो लुग् भवति । रज्यति । रज्यते । रज्येत् । रज्येत । रज्यतु । रज्यताम् । अरज्यत् । अरज्यत । ररञ्ज ररञ्जतु ररञ्जु । ररञ्जे ररञ्जाते ररञ्जिरे । रज्यात् । रङ्क्षीष्ट । रङ्क्ता । रङ्क्ष्यति । रङ्क्ष्यते । अरङ्क्ष्यत् । अरङ्क्ष्यत । अराङ्क्षीत् अराङ्क्ताम् अराङ्क्षुः । अरङ्क्त अरङ्क्षाताम् अरङ्क्षत । शपींच् आक्रोशे । शप्यति । शप्यते । अशप्यत् । अशप्यत । शशाप शेपतु शेपु । शेपे शेपाते शेपिरे । शप्यात् । शप्सीष्ट । शप्ता । शप्स्यति । शप्स्यते । अशप्स्यत् । अशप्स्यत । अशाप्सीत् अशाप्ताम् अशाप्सुः । अशप्त अशप्साताम् अशप्सत । मृषींच् तितिक्षायाम् । मृष्यति । मृष्यते ।

अमृष्यत् । अमृष्यत । ममर्ष । ममृषे । मृष्यात् । मर्षिषीष्ट । मर्षिता । मर्षिष्यति । मर्षिष्यते । अमर्षिष्यत् । अमर्षिष्यत । अमर्षीत् । अमर्षिष्ट । णहीच् बन्धने । नह्यति । नह्यते । नह्येत् । नह्येत । नह्यतु । नह्यताम् । अनह्यत् । अनह्यत । ननाह नेहतु. नेहुः । नेहे नेहाते नेहिरे । नह्यात् । 'नहाहोर्धतौ' नत्सीष्ट । नद्धा । नत्स्यति । नत्स्यते । अनत्स्यत् । अनत्स्यत । अनात्सीत् अनाद्धाम् अनात्सुः । अनद्ध अनत्साताम् अनत्सत । अनद्धाः अनत्साथाम् अनद्ध्वम् । अनत्सि अनत्स्वहि अनत्स्महि । इत्युभयपदं समाप्तम् ।

**इति दिवादिगणः परिसमाप्तः ।**

---

## अथ स्वादिगणः ।

---

टानुबन्धा स्वादय षुंगट् अभिषवे—

**स्वादेः श्नुः । ३ । ४ । ७५ ।**

स्वादे कर्तरि विहिते शिति श्नुर्भवति । 'उश्नो' इति गुणे सुनोति सुनुत सुन्वन्ति । सुनोषि सुनुथः सुनुथ । सुनोमि ।

**वम्यविति वा । ४ । २ । ८७ ।**

असंयोगात् परो य उस्तदन्तस्य प्रत्ययस्य लुग्वा भवति

वमादौ अविति परे । सुन्वः, सुनुवः सुन्मः, सुनुमः । सुनुते सुन्वाते सुन्वते । सुनुषे सुन्वाथे सुनुध्वे । सुन्वे सुन्वहे, सुनुवहे सुन्महे, सुनुमहे । सुनुयात् । सुन्वीत सुन्वीयाताम् सुन्वीरन् । सुनोतु, सुनुतात् सुनुताम् सुन्वतु । सुनु, सुनुतात् सुनुतम् सुनुत । सुनवानि सुनवाव सुनवाम । सुनुताम् सुन्वाताम् सुन्वताम् । सुनुष्व सुन्वाथाम् सुनुध्वम् । सुनवै सुनवावहै सुनवामहै । असुनोत् असुनुताम् असुन्वन् । असुनो असुनुतम् असुनुत । असुनवम् असुनुव, असुन्व असुनुम, असुन्म । असुनुत असुन्वाताम् असुन्वत । असुनुथा. असुन्वाथाम् असुनुध्वम् । असुन्वि असुनुवहि, असुन्वहि असुनुमहि, असुन्महि । सुषाव सुषुवतुः सुषुवुः । सुषुवे सुषुवाते सुषुविरे । सूयात् । सोषीष्ट । सोता । सोष्यति । सोष्यते । असोष्यत् । असोष्यत । 'धूगूसुस्तो परस्मै' असावीत् असाविष्टाम् असाविषु । असोष्ट असोषाताम् असोषत । उपसर्गात् तु—

**उपसर्गात् सुग्सुवसोस्तुस्तुभोऽड्व्यप्यद्वित्वे । २ । ३ । ३९ ।**

द्वित्वाभावे उपसर्गस्थाद् नाम्यादे परस्य सुनोत्यादेः सः ष् भवति, अड्व्यवधानेऽपि । अभिषुणोति । पर्यषुणोत् । षिंगृट् बन्धने । सिनोति । सिनुते । सिनुयात् । सिन्वीत । सिनोतु । सिनुताम् । असिनोत् । असिनुत । सिषाय । सिष्ये । सीयात् । सेषीष्ट । सेता । सेष्यति । सेष्यते । असेष्यत् । असेष्यत । असै-

असेष्ट असेषाताम् असेषत । शिगृट् निशाने । शिनोति । शिनुते । अशिनोत् । अशिनुत । शिशाय । शिश्ये । शीयात् । शेषीष्ट । शेता । शेष्यति । शेष्यते । अशेष्यत् । अशेष्यत । अशैषीत् । अशेष्ट । डुमिगृट् प्रक्षेपणे । मिनोति । मिनुते । मिनोतु । मिनुताम् ।

मिग्मीगोऽखलचलि । ४ । २ । ८ ।

अनयोर्यपि खल् अच् अल्वर्जितेऽक्ङिति प्रत्यये च आद् भवति । ममौ मिम्यतु मिम्यु । ममिथ, ममाथ मिम्यथुः मिम्य । ममौ मिम्यिव मिम्यिम । मिम्ये मिम्याते मिम्यिरे । मीयात् । मासीष्ट । माता । मास्यति । मास्यते । अमास्यत् । अमास्यत । अमासीत् । अमास्त । चिगृट् चयने । चिनोति । चिनुते । चिनुयात् । चिन्वीत । चिनोतु । चिनुताम् । अचिनोत् । अचिनुत ।

चेः किर्वा । ४ । १ । ३६ ।

सन्परोक्षयोर्द्वित्वे सति पूर्वस्मात् परस्य चे किर्वा भवति । चिकाय चिक्यतु· चिक्यु । चिक्ये चिक्याते चिक्यिरे । चिचाय चिच्यतु· चिच्यु । चिच्ये चिच्याते चिच्यिरे । चीयात् । चेषीष्ट । चेता । चेष्यति । चेष्यते । अचेष्यत् । अचेष्यत । अचैषीत् । अचेष्ट । धूगृट् कम्पने । धूनोति । धूनुते । अधूनोत् । अधूनुत । दुधाव दुधुवतु दुधुवु । दुधुवे दुधुवाते दुधुविरे । धूयात् । धोषीष्ट "धूगौदित" धविषीष्ट । धोता, धविता । धोष्यति, धविष्यति ।

धोष्यते, धविष्यते । अधोष्यत् , अधविष्यत् । अधोष्यत, अधविष्यत । अधावीत् , अधौषीत् । अधविष्ट, अधोष्ट । स्तृंगट् आच्छादने । स्तृणोति । स्तृणुते । अस्तृणोत् , अस्तृणुत । तस्तार 'संयोगादृदर्त्ते.' तस्तरतु तस्तरु । तस्तर्थ । तस्तरे तस्तराते तस्तरिरे । ' क्ययङाशीर्ये ' इति गुणे स्तर्यात् ।

### संयोगादृतः । ४ । ४ । ३७ ।

धातो संयोगात् परो य ऋकारस्तदन्तात् परयोरात्मनेपद-विषययो' सिजाशिषोरादिरिड् वा भवति । स्तरिषीष्ट, स्तृषीष्ट । स्तर्तासे । स्तरिष्यति । स्तरिष्यते । अस्तरिष्यत् । अस्तरिष्यत । अस्तार्षीत् अस्तार्ष्टाम् अस्तार्षुः । आत्मनेपदे इट्पक्षे अस्तरिष्ट अस्तरिषाताम् अस्तरिषत । अस्तृत अस्तृषाताम् अस्तृषत । कृंगट् हिंसायाम् । कृणोति । कृणुते । अकृणोत् । अकृणुत । चकार । चक्रे । क्रियात् । कृषीष्ट । कर्तास्मि । कर्तासे । करिष्यति । करिष्यते । अकरिष्यत । अकरिष्यत् । अकार्षीत् । अकृत अकृषाताम् अकृषत । वृंगट् वरणे । वृणोति । वृणुते । वृणुयात् । वृण्वीत । अवृणोत् । अवृणुत । ववार वव्रतु वव्रु । ववरिथ । वव्रे वव्राते वव्रिरे । व्रियात् ।

### इट् सिजाशिषोरात्मने । ४ । ४ । ३६ ।

वृत परयोरात्मनेपदविषये सिजाशिषोरादिरिड् वा भवति । वरिषीष्ट, वृषीष्ट । 'वृतो नवा ' इत्यादिना वरितासि, वरीतासि ।

वरितासे, वरीतासे । वरिष्यति, वरीष्यति । वरीष्यते, वरिष्यते । अवरीष्यत्, अवरिष्यत् । अवरीष्यत, अवरिष्यत । अवारीत् अवारिष्टाम् अवारिषु । अवरिष्ट, अवरीष्ट अवरिषाताम्, अवरीषाताम् अवरीषत, अवरिषत । पक्षे अवृत अवृषाताम् अवृषत । इत्युभयपदिनः स्वादयः समाप्ताः ।

## अथ परस्मैपदिनः स्वादयः ।

हिट् गतिवृद्ध्योः । हिनोति। हिनुयात् । हिनोतु । अहिनोत् ।

### अङे हिहनो हो घः पूर्वात् । ४ । १ । ३४ ।

हिहनोर्ङवर्जे प्रत्यये परे द्वित्वे सति पूर्वस्मात् परस्य हो घो भवति । जिघाय जिघ्यतु जिघ्यु । जिघयिथ, जिघेथ जिघ्यथु जिघ्य । जिघाय, जिघय जिघ्यिव जिघ्यिम । हीयात् । हेता । हेष्यति । अहेष्यत् । अहैषीत् अहैष्टाम् अहैषु । श्रुट श्रवणे । 'श्रौतिकृवु' इत्यादिना 'शृ' आदेशे शृणोति । शृणुयात् । शृणोतु । अशृणोत् । शुश्राव शुश्रुवतु शुश्रुवु । शुश्रोथ । श्रूयात् । श्रोता । श्रोष्यति । अश्रोष्यत् । अश्रौषीत् । टुदुंट् उपतापे । दुनोति । दुनुयात् । दुनोतु । अदुनोत् । दुदाव । दुदविथ, दुदोथ । दूयात् । दोता । दोष्यति । अदोष्यत् । अदौषीत् । पृंट् प्रीतौ । पृणोति । पृणुयात् । पृणोतु । अपृणोत् । पपार पप्रतुः पप्रुः । प्रियात् । पर्ता । परिष्यति । अपरिष्यत् । अपार्षीत् । स्मृंट् पालने च । स्मृणोति । स्मृणुयात् । स्मृणोतु ।

अस्मृणोत् । सस्मार सस्मरतु सस्मरुः । सस्मर्थ । स्मर्यात् ।
स्मर्ता । स्मरिष्यति । अस्मरिष्यत् । अस्मार्षीत् । शक्लृंट्
शक्तौ । शक्नोति । अशक्नोत् । शशाक शेकतु शेकुः ।
शेकिथ, शशक्थ । शक्यात् । शक्तासि । शक्ष्यति । अशक्ष्यत् ।
अशकत् अशकताम् अशकन् । तिक तिग षघट् हिंसायाम् ।
तिक्नोति । अतिक्नोत् । तितेक । अतेकीत् । तिग्नोति । तितेग ।
अतेगीत् । सघ्नोति । सघ्नुयात् । सघ्नोतु । असघ्नोत् । ससाघ
सेघतुः सेघुः । सेघिथ । सघ्यात् । सघिता । सघिष्यति । असघि-
ष्यत् । असाघीत्, असघीत् । राधं साधट् संसिद्धौ । राध्नोति
राध्नुतः राध्नुवन्ति । राध्नोषि राध्नुथ राध्नुथ । राध्नोमि
राध्नुव राध्नुमः । राध्नुयात् । राध्नोतु । अराध्नोत् । रराध
रेधतु रेधु । रेधिथ रेधथुः रेध । राध्यात् । राद्धा । रात्स्यति ।
अरात्स्यत् । अरात्सीत् अराद्धाम् अरात्सु । साध्नोति । साध्नुयात् ।
साध्नोतु । असाध्नोत् । ससाध । साध्यात् । साद्धा । सात्स्यति ।
असात्स्यत् । असात्सीत् असाद्धाम् असात्सु । ऋधुट् वृद्धौ ।
ऋध्नोति । आर्ध्नोत् । आनर्ध आनृधतु आनृधुः । ऋध्यात् ।
अर्धिता । अर्धिष्यति । आर्धिष्यत् । आर्धीत् । आप्लृट् व्याप्तौ ।
आप्नोति । आप्नुयात् । आप्नोतु । आप्नोत् । आप आपतुः
आपु । आपिथ । आप्यात् । आप्ता । आप्स्यति ।
आप्स्यत् । लृदित्त्वादङि आपत् आपताम् आपन् । आप ।
तृपट् प्रीणने । तृप्नोति । अतृप्नोत् । ततर्प ततृपतुः ततृपु ।

तृप्यात् । तर्पिता । तर्पिष्यति । अतर्पिष्यत् । अतर्पीत् । दम्भूट् दम्भे । दभ्नोति । दभ्नुयात् । दभ्नोतु । अदभ्नोत् । ददम्भ ।

**दम्भः । ४ । १ । २८ ।**

दम्भेः स्वरस्याबित्परोक्षायामेकारो भवति, न च द्विः । देभतुः देभुः ।

**थे वा । ४ । १ । २९ ।**

दम्भे स्वरस्य थवि परे एर्वा भवति । ददम्भिथ, देभिथ देभथुः देभ । ददम्भ देभिव देभिम । दभ्यात् । दम्भिता । दम्भिष्यति । अदम्भिष्यत् । अदम्भीत् । क्रृवुट् हिंसाकरणयोः । 'श्रौतिकृवु—' इत्यादिना 'कृ' आदेशो । कृणोति । कृणुयात् । कृणोतु । अकृणोत् । चकृन्व चकृन्वतुः चकृन्वुः । कृन्व्यात् । कृन्विता । कृन्विष्यति । अकृन्विष्यत् । अकृन्वीत् । धिवुट् गतौ । धिनोति । धिनुयात् । धिनोतु । अधिनोत् । दिधिन्व । धिन्व्यात् । धिन्विता । धिन्विष्यति । अधिन्विष्यत् । अधिन्वीत् । ञिधृषाट् प्रागल्भ्ये धृष्णोति । धृष्णुयात् । धृष्णोतु । अधृष्णोत् । दधर्ष । धर्षिता । अधर्षीत् । इति परस्मैपदम् ।

**। अथात्मनेपदम् ।**

ष्टिघिट् आस्कन्दने । स्तिघ्नुते स्तिघ्नुवाते स्तिघ्नुवते । स्तिघ्नुवीत । स्तिघ्नुताम् । अस्तिघ्नुत । तिष्टिघे तिष्टिघाते तिष्टिघिरे । स्तेघिषीष्ट । स्तेघितासे । स्तेघिष्यते ।

अस्तंघिष्यत । अस्तेघिष्ट । अशौटि व्याप्तौ । अश्नुते । अश्नुवीत । अश्नुताम् । आश्नुत । आनशे आनशाते आनशिरे । अशिषीष्ट, अक्षीष्ट । अशितासे, अष्टासे । अशिष्यते, अक्ष्यते । आशिष्यत, आक्ष्यत । आशिष्ट आशिषाताम् आशिषत । पक्षे आष्ट आक्षाताम् आक्षत । आष्ठाः आक्षाथाम् । 'सो धि वा' इति मिन्लुकि 'यजसृज'—इत्यादिना षत्वे 'तृतीयस्तृतीयचतुर्थे' इति डत्वे 'तवर्गस्य' इत्यादिना धो ढत्वे आड्ढ्वम् । आक्षि आक्ष्वहि आक्ष्महि । इत्यात्मनेपदं समाप्तम् ।

इति स्वादयः समाप्ताः ।

---

## अथ तुदादिगणः ।

नानुबन्धास्तुदादय । तुदीत् व्यथने ।

### तुदादेः शः । ३ । ४ । ८१ ।

एभ्य कर्तरि विहिते शिति शप्रत्ययो भवति । तुदति तुदतः तुदन्ति । तुदसि तुदथ तुदथ । तुदामि तुदाव तुदामः । तुदते तुदेते तुदन्ते । तुदसे तुदेथे तुदध्वे । तुदे तुदावहे तुदामहे । तुदेत् तुदेताम् तुदेयु । तुदे तुदेतम् तुदेत । तुदेयम् तुदेव तुदेम । तुदेत तुदेयाताम् तुदेरन् । तुदेथाः तुदेयाथाम् तुदेध्वम् । तुदेय तुदेवहि तुदेमहि । तुदतु, तुदतात् तुदताम् तुदन्तु । तुद, तुदतात्

तुदतम् तुदत । तुदानि तुदाव तुदाम । तुदताम् तुदेताम् तुदन्ताम् । तुदस्व तुदेथाम् तुदध्वम् । तुदै तुदावहै तुदामहै । अतुदत् अतुद-ताम् अतुदन् । अतुद अतुदतम् अतुदत । अतुदम् अतुदाव अतुदाम । अतुदत अतुदेताम् अतुदन्त । अतुदथा अतुदेथाम् अतुदध्वम् । अतुदे अतुदावहि अतुदामहि। तुतोद तुतुदतु तुतुदु । तुतोदिथ । तुतुदे तुतुदाते तुतुदिरे । तुद्यात् । तुत्सीष्ट । तोत्तासि । तोत्स्यति । तोत्स्यते । अतोत्स्यन् । अतोत्स्यत । अतौत्सीत् अतौत्ताम् अतौत्सुः । अतौत्सी । अतुत्त अतुत्साताम् अतुत्सत। क्षिपींत् प्रेरणे । क्षिपति । क्षिपते । क्षिपेत् । क्षिपेत । क्षिपतु । क्षिपताम् । अक्षिपत् । अक्षिपत । चिक्षेप । चिक्षिपे । क्षिप्यात् । क्षिप्सीष्ट । क्षेप्तासि । क्षेप्तासे । क्षेप्स्यति । क्षेप्स्यते । अक्षेप्स्यत् । अक्षेप्स्यत । अक्षैप्सीत् । अक्षिप्त । भ्रस्जींत् पाके ।

**ग्रहज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च।** ।४।१।८४।

एषां सम्प्रसारणं भवति, ङिति परे । ततः सस्य श्चुत्वं शस्य जत्वे च भृज्जति । भृज्जते । भृज्जेत् । भृज्जेत । भृज्जतु । भृज्जताम् । अभृज्जत् । अभृज्जत ।

**भ्रस्जो भर्ज्** । ४ । ४ । ६ ।

भृज्जतेरशिति विषये भर्ज् वा भवति । बभर्ज बभर्जतु बभर्जुः। बभर्जिथ, बभर्ष्ठ बभर्जथु बभर्ज । बभर्ज बभर्जिव बभर्जिम । बभ्रज्ज बभ्रज्जतुः बभ्रज्जुः । बभ्रज्जिथ, बभ्रष्ठ बभ्रज्जथु बभ्रज्ज । बभ्रज्ज

बभ्रज्जिव बभ्रज्जिम । बभर्जे बभर्जाते बभर्जिरे । बभ्रज्जे बभ्रज्जाते बभ्रज्जिरे । भृज्ज्यात्, भर्ज्यात् । भर्क्षीष्ट, भ्रक्षीष्ट । भ्रष्टासि, भर्ष्टासि । भ्रष्टासे, भर्ष्टासे । भ्रक्ष्यति, भर्क्ष्यति । भ्रक्ष्यते, भर्क्ष्यते । अभ्रक्ष्यत्, अभर्क्ष्यत् । अभ्रक्ष्यत, अभर्क्ष्यत । अभ्राक्षीत् अभ्राष्टाम् अभ्राक्षुः । अभार्क्षीत् अभार्ष्टाम् अभार्क्षु । अभ्रष्ट अभ्रक्षाताम् अभ्रक्षत । अभर्ष्ट अभर्क्षाताम् अभर्क्षत । दिशीत् अतिसर्जने । दिशति । दिशते । दिशेत् । दिशेत । दिशतु । दिशताम् । अदिशत् । अदिशत । दिदेश । दिदिशे । दिश्यात् । दिक्षीष्ट । देष्टासि । देष्टासे । देक्ष्यति । देक्ष्यते । अदेक्ष्यत् । अदेक्ष्यत । सकि अदिक्षत् अदिक्षताम् अदिक्षन् । अदिक्षत अदिक्षाताम् अदिक्षत । कृषींत् विलेखने । कृषति । कृषते । अकृषत् । अकृषत । चकर्ष । चकृषे । कृष्यात् । कृक्षीष्ट । क्रष्टासि, कर्ष्टासि । क्रष्टासे, कर्ष्टासे । क्रक्ष्यति, कर्क्ष्यति । क्रक्ष्यते, कर्क्ष्यते । अक्रक्ष्यत्, अकर्क्ष्यत् । अक्रक्ष्यत, अकर्क्ष्यत । अक्राक्षीत् अक्राष्टाम् । अकार्क्षीत् अकार्ष्टाम् । पक्षे सकि अकृक्षत् अकृक्षताम् अकृक्षन् । अकृष्ट अकृक्षाताम् अकृक्षत । अथ तुदाद्यन्तर्गणो मुचादि । मुच्लृती मोक्षणे ।

**मृचादितृफदृफगुफशुभोभः शे । ४ । ४ । ९९ ।**

एषां शे परे स्वरान्नोन्तो भवति । मुञ्चति । मुञ्चते । मुञ्चेत् । मुञ्चेत । मुञ्चतु । मुञ्चताम् । अमुञ्चत् । अमुञ्चत । मुमोच । मुमुचे । मुच्यात्, मुक्षीष्ट । मोक्तासि । मोक्तासे । मोक्ष्यति ।

मोक्ष्यते । अमोक्ष्यत् । अमोक्ष्यत । अङि अमुचत् अमुचताम् अमुचन् । अमुक्त अमुक्षाताम् अमुक्षत । षिचींत् क्षरणे । सिञ्चति । सिञ्चते । असिञ्चत् । असिञ्चत । सिषेच । सिषिचे । सिच्यात् । सिक्षीष्ट । सेक्तासि । सेक्तासे । सेक्ष्यति । सेक्ष्यते । असेक्ष्यत् । असेक्ष्यत । अङि असिचत् असिचताम् असिचन् । 'वाऽऽत्मने' असिचत असिचेताम् असिचन्त । पक्षे असिक्त असिक्षाताम् असिक्षत । असिक्थाः । 'स्थासेनिसिधसिचसञ्जाम्' इत्यादिना उपसर्गात् परस्य द्वित्वेऽपि अट्यपि षत्वम् । अभिषिञ्चति । अभिषिषेच । विदऌती लाभे । विन्दति । विन्दते । विन्देत् । विन्देत । विन्दतु । विन्दताम् । अविन्दत् । अविन्दत । विवेद । विविदे । विद्यात् । वित्सीष्ट । वेत्तासि । वेत्तासे । वेत्स्यति । वेत्स्यते । अवेत्स्यत् । अवेत्स्यत । अविदत् अविदताम् अविदन् । अवित्त अवित्साताम् अवित्सत । लुपॢती छेदने । लुम्पति । लुम्पते । लुम्पेत् । लुम्पेत । लुम्पतु । लुम्पताम् । अलुम्पत् । अलुम्पत । लुलोप । लुलुपे । लुप्यात् । लुप्सीष्ट । लोप्तासि । लोप्तासे । लोप्स्यति । लोप्स्यते । अलोप्स्यत् । अलोप्स्यत । अलुपत् अलुपताम् अलुपन् । अलुप्त अलुप्साताम् अलुप्सत । लिपीत् उपदेहे । लिम्पति । लिम्पते । अलिम्पत् । अलिम्पत । लिलेप । लिलिपे । लिप्यात् । लिप्सीष्ट । लेप्तासि । लेप्तासे । लेप्स्यति । लेप्स्यते । अलेप्स्यत् । अलेप्स्यत । अलि-

पत् अलिपताम् अलिपन् । अलिपत अलिपेताम् अलिपन्त । पक्षे अलिप्त अलिप्साताम् अलिप्सत ।

## इत्युभयपदिनः धातवः ।

कृतैत् छेदने । कृन्तति । कृन्तेत् । कृन्ततु । अकृन्तत् । चकर्त । कृत्यात् । कर्तिता । कर्तिष्यति, कर्त्स्यति । अकर्तिष्यत्, अकर्त्स्यत् । अकर्तीत् अकर्तिष्टाम् अकर्तिषु । खिदंत् परिघाते । खिन्दति । अखिन्दत् । चिखेद । खिद्यात् । खेत्तासि । खेत्स्यति । अखेत्स्यत् । अखैत्सीत् अखैत्ताम् अखैत्सु । पिशत् अवयवे पिशति । अपिशत् । पिपेश । पिश्यात् । पेशिता । पेशिष्यति । अपेशिष्यत् । अपेशीत् । इति मुचादिगण समाप्त ॥ रिं पिंत् गतौ । रियति । रियेत् । रियतु । अरियत् । रिराय रियतु । रियात् । रेतासि । रेष्यति । अरेष्यत् । अरैषीत् । पियति । पिपाय । पेता । धिंत् धारणे । धियति । धियेत् । धियतु । अधियत् । दिधाय दिध्यतुः । धीयात् । धेता । धेष्यति । अधेष्यत् । अधैषीत् । क्षित् निवासगत्योः । षूत् प्रेरणे । सुवति । असुवत् । सुषाव । सूयात् । सवितासि । सविष्यति । असविष्यत् । असावीत् । मृंत् प्राणत्यागे ।

## म्रियतेरद्यतन्याशिषि च । ३ । ३ । ४२ ।

अस्मादद्यतन्याशीर्विषयात् शिद्विषयाच्च कर्तर्यात्मनेपदं भवति । 'रिः शक्याशीर्ये' म्रियते । म्रियेत । म्रियताम् ।

अम्रियत । ममार मम्रतुः मम्रुः । ममर्थ । मृषीष्ट । मर्तासि । मरिष्यति । अमरिष्यत् । अमृत अमृषाताम् अमृषत । कॄत् विक्षेपे ' ऋतां क्ङितीर् ' किरति । किरेत् । किरतु । अकिरत् । चकार चकरतुः चकरु. । चकरिथ । कीर्यात् । करितासि, करीतासि । करिष्यति, करीष्यति । अकरीष्यत्, अकरिष्यत् । अकारीत् अकारिष्टाम् अकारिषुः । गॄत् निगरणे गिरति । गिलति । गिरेत् । अगिरत् । जगार जगरतु जगरुः । गीर्यात् । गरितासि, गरीतासि । गरिष्यति, गरीष्यति । अगरिष्यत् अगरीष्यत् । अगारीत् । लिखत् अक्षरविन्यासे । लिखति । लिखेत् । अलिखत् । लिलेख लिख्यात् । लेखिता । लेखिष्यति । अलेखिष्यत् । अलेखीत् । जर्च झर्चत् परिभाषणे । त्वचत् संवरणे । त्वचति । तत्वाच । अत्वाचीत् । ऋचत् स्तुतौ । ऋचति । ऋचेत् । ऋचतु । अऋचत् । आनर्च । ऋच्यात् । अर्चिता । अर्चिष्यति । आर्चीत् । ओव्रश्चौत् छेदने । ' ग्रहव्रश्चभ्रस्जप्रच्छ ' वृश्चति । वृश्चेत् । वृश्चतु । अवृश्चत् । वव्रश्च वव्रश्चतु वव्रश्चु । वृश्च्यात् । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । अव्रश्चिष्यत्, अव्रक्ष्यत् । अव्रश्चीत् अव्रश्चिष्टाम् अव्रश्चिषु । अव्राक्षीत् अव्राष्टाम् अव्राक्षु । ऋछत् इन्द्रियप्रलयमूर्तिभावयोः । ऋच्छति । ऋच्छेत् । ऋच्छतु । आर्च्छत् । आनर्च्छ आनर्च्छतुः आनर्च्छु । ऋच्छ्यात् । ऋच्छिता । ऋच्छिष्यति । आर्च्छिष्यत् । आर्च्छीत् आर्च्छिष्टाम् आर्च्छिषुः । विछत् गतौ । ' गुपौधूप ' इत्यायादेशे विच्छायति । विच्छायेत् ।

अविच्छायत् । विच्छायाञ्चकार. विच्छायाम्बभूव, विच्छायामास । पक्षे विविच्छ । विच्छाय्यात् , विच्छ्यात् । विच्छायिता, विच्छिता । विच्छायिष्यति, विच्छिष्यति । अविच्छायिष्यत् , अविच्छिष्यत् । अविच्छायीत् , अविच्छीत् । उछैत् विवासे उच्छति । उच्छेत् । उच्छतु । औच्छत् । उच्छाञ्चकार, उच्छाम्बभूव, उच्छामास । उच्छ्यात् । उच्छिता । औच्छीत् । प्रछंत् ज्ञीप्सायाम् । ग्वृति पृच्छति । पृच्छेत् । पृच्छतु । अपृच्छत् । पप्रच्छ पप्रच्छतु पप्रच्छुः । पप्रच्छिथ, पप्रष्ठ । पृच्छ्यात् । प्रष्टा । प्रक्ष्यति । अप्रक्ष्यत् । अप्राक्षीत् अप्राष्टाम् अप्राक्षु । उब्जत् आर्जवे । सृजंत् विसर्गे । सृजति । सृजेत् । सृजतु । असृजत् । ससर्ज ससृजतु ससृजु. । ससर्जिथ, सस्रष्ठ । सृज्यात् । स्रष्टा । स्रक्ष्यति । अस्रक्ष्यत् । अस्राक्षीत् अस्राष्टाम् अस्राक्षु । रुजोंत् भङ्गे । रुजति । अरुजत् । रुरोज । रुज्यात् । रोक्ता । रोक्ष्यति । अरौक्षीत् । भुजोंत् कौटिल्ये । भुजति । अभुजत् । बुभोज । अभोक्षीत । टुमस्जोंत् शुद्धौ । मज्जति । अमज्जत् । ममज्ज ममज्जतुः ममञ्जु । ममज्जिथ, ममष्ठ । मज्ज्यात् ।

**मस्जे सः । ४ । ४ । ११० ।**

मस्जेः स्वरात् परस्य धुडादौ प्रत्यये परे नोऽन्तो भवति । मङ्क्तासि । मङ्क्ष्यति । अमङ्क्ष्यत् । अमाङ्क्षीत् अमाङ्क्ताम् अमाङ्क्षुः । जर्ज झर्झंत् परिभाषणे । उद्झत् उत्सर्गे जुडत् गतौ । जुडति । अजोडीत् । कडत् मदे । कडति । अकाडीत् , अकडीत् ।

पृणत् पीणने । पृणति । पपर्ण । पर्णिता । अपर्णीत् । तुणत् कौटिल्ये । मृणत् हिंसायाम् । द्रुणत् गति-कौटिल्ययोश्च । घुण घूर्णत् भ्रमणे । घूर्णति । जुघूर्ण । घूर्णिता । अघूर्णीत् । णुदंत् प्रेरणे । नुदति । अनुदत् । नुनोद । नुद्यात् । नोत्ता । नोत्स्यति । अनोत्स्यत् । षद्लंत् अवसादने । 'श्रौति-कृवुधिवु—' इति सीदादेश । सीदति । ससाद । तृफ तृम्फत् तृप्तौ । 'मुचादितृफदृफ—' इति नकारे तृम्फति । अतृम्फत् । ततर्फ । तर्फिता । तृफति । अतृफत् । ततृम्फ । तृम्फिता । दृफ दृम्फत् उत्क्लेशे । दृम्फति । अदृम्फत् । ददर्फ । दर्फिता । अदर्फीत् । दृफति । अदृफत् । ददृम्फ । दृम्फिता । अदृम्फीत् । गुफ गुम्फत् ग्रन्थने । गुम्फति । अगुम्फत । जुगोफ । गोफिता । गुफति । अगुफत् । जुगुम्फ । गुम्फिता । उभ उम्भत् पूरणे । उम्भति । उवोभ । उभिता । औभीत् । उभति । उम्भाञ्चकार । उम्भिता । औम्भीत् । शुभ शुम्भत् शोभार्थे । पूर्ववत् । दृभत् ग्रन्थे । दृभति । दृभेत् । दृभतु । अदृभत् । ददर्भ ददृभतु· ददृभुः । दृभ्यात् । दर्भिता । दर्भिष्यति । अदर्भिष्यत् । अदर्भीत् । लुभत् विमोहने । लुभति । अलुभत । लुलोभ । लुभ्यात् । लोभिता, लोब्धा । लोभिष्यति । अलोभीत् । कुरत् शब्दे कुरति । अकुरत् । चुकोर । 'कुरच्छुर· ' इति दीर्घाभावे र्वादेरिति दीर्घे कूर्यात् । कोरिता । अकोरीत् । क्षुरत् विखनने । क्षुरति । चुक्षोर । क्षूर्यात् । क्षोरिता । अक्षोरीत् । खुरत् छेदने च । खुरति । चुखोर ।

खोरिता । अखोरीत् । घुरत भीमार्थशब्दयोः । घुरति । जुघोर । घोरिता । अघोरीत् । पुरत् अग्रगमने । पुरति । पुपोर । पूर्यात् । पोरिता । अपोरीत् । मुरत् संवेष्टने । मुरति । मुमोर । मोरिता । सुरत् ऐश्वर्यदीप्त्योः । स्फर स्फलत् स्फुरणे । इलत् गतिस्वप्नक्षेपणेषु । इलति । ऐलत् । इयेल ईलतुः ईलुः । इल्यात् । एलिता । एलिष्यति । ऐलीत् । चलत् विलसने । चलति । अचलत् । चचाल । चलिता । अचालीत् । चिलत् वसने । चिलति । चिचेल । चेलिता । अचेलीत् । विलत् वरणे । विलति । विवेल । वेलिता । अवेलीत् । मिलत् श्लेषणे । मिलति । अमिलत् । मिमेल मिमिलतुः मिमिलुः । मेलिता । मेलिष्यति । अमेलीत् । स्पृशत् संस्पर्शे । स्पृशति । स्पृशेत् । अस्पृशत् । पस्पर्श पस्पृशतुः पस्पृशुः । स्पृश्यात् । स्प्रष्टा, स्पर्ष्टा । स्प्रक्ष्यति, स्पर्क्ष्यति । अस्प्रक्ष्यत्, अस्पर्क्ष्यत् । अस्प्राक्षीत् अस्प्राष्टाम् अस्प्राक्षुः । अस्पार्क्षीत् अस्पार्ष्टाम् अस्पार्क्षुः । पक्षे सकि अस्पृक्षत् अस्पृक्षताम् । रुशं रिशंत् हिंसायाम् । रुशति । अरुशत् । रुरोश । रोष्टा । रोक्ष्यति । अरोक्ष्यत् । अरुक्षत् अरुक्षताम् अरुक्षन् । रिशति । अरिशत् । रिरेश । रिश्यात् । रेष्टा । रेक्ष्यति । अरेक्ष्यत् । अरिक्षन् । विशंत् प्रवेशने । विशति । विशतु । अविशत् । विवेश, विविशतुः विविशुः । विवेशिथ । विश्यात् । वेष्टा । वेक्ष्यति । अवेक्ष्यत् । अविक्षत् अविक्षताम् अविक्षन् । मृशंत् आमर्शने । मृशति । अमृशत् । ममर्श ममर्शिथ, मम्रष्ठ । मृश्यात् । म्रष्टा,

मर्ष्टा । म्रक्ष्यति, मर्क्ष्यति । अम्रक्ष्यत्, अमर्क्ष्यत् । अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् । लिशं ऋषैत् गतौ । लिशति । अलिशत् । लिलेश । लिश्यात् । लेष्टा । लेक्ष्यति । अलेक्ष्यत् । अलिक्षत् । इषत् इच्छायाम् । इच्छति । इच्छेत् । इच्छतु । ऐच्छत् । इयेष ईषतुः ईषुः । इष्यात् । एष्टा, एषिता । एषिष्यति । ऐषिष्यत् । ऐषीत् । मिषत् स्पर्द्धायाम् । वृहौत् उद्यमे । वृहति । अवृहत् । ववर्ह । वृह्यात् । वर्हिता, वर्ढा । वर्हिष्यति, वर्क्ष्यति । अवर्हिष्यत्, अवर्क्ष्यत् । अवर्हीत् । अवृक्षत् अवृक्षताम् अवृक्षन् । तृहौ तृंहौ स्तृहौ स्तृंहौत् हिंसायाम् । तृहति । तृहेत् । तृहतु । अतृहत् । ततर्ह । तृह्यात् । तर्हिता, तर्ढा । तर्हिष्यति, तर्क्ष्यति । अतर्हिष्यत्, अतर्क्ष्यत् । अतर्हीत्, अतृक्षत् । तृंहेर्नलोपे तृहति । ततृंह । तृह्यात् । तृंहिता, तृण्ढा । तृंहिष्यति, तृङ्क्ष्यति । अतृंहिष्यत्, अतृङ्क्ष्यत् । अतृंहीत्, अतार्ङ्क्षीत् ।

## अथ कुटादिगणः ।

कुटत् कौटिल्ये । कुटति । चुकोट । कुट्यात् ।

**कुटादेर्ङिद्वदञ्णित् । ४ । ३ । १७ ।**

कुटादेः परो ञिद्णिद्वर्जप्रत्ययो ङिद्वद् भवति । कुटिता । कुटिष्यति । अकुटिष्यत् । अकुटीत् । गुंत् पुरीषोत्सर्गे । गुवति । गुवेत् । गुवतु । अगुवत् । जुगाव जुगुवतुः जुगुवुः । गूयात् । गुतासि । गुष्यति । अगुष्यत् । अगुषीत् । धुड्ह्रस्वादित्यादिना सिचो लोपे अगुताम् अगुषुः । अगुषीः अगुतम् अगुत । अगु-

ष्म् अगुष्व अगुष्म । ध्रुंत् गतिस्थैर्ययोः । ध्रुवति । अध्रुवत् । दुध्राव । ध्रूयात् । ध्रुता । ध्रुष्यति । अध्रुष्यत् । अध्रुषीत् अध्रुताम् अध्रुषुः । अध्रुषीः अध्रुतम् अध्रुत । णूत् स्तवने । नुवति । नुवेत् । अनुवत् । नुनाव । नूयात् । नुविता । नुविष्यति । अनुविष्यत् । अनुवीत् । धूत् विधूनने । धुवति । धुवेत् । धुवताम् । अधुवत् । दुधाव दुधुवतुः दुधुवुः । धूयात् । धुविष्यति । अधुविष्यत् । अधुवीत् । कुचत् संकोचने । कुचति । चुकोच । कुचिता । व्यचत् व्याजीकरणे ।

## व्यचोऽनसि । ४ । १ । ८२ ।

व्यचेः सस्वरान्तस्था य्वृत् भवति, अस्वर्जे क्ङिति प्रत्यये परे । विचति । विचेत् । विचतु । अविचत् । विव्याच विविचतुः विविचुः । विव्यचिथ विविचथुः विविच । विव्याच, विव्यच विविचिव विविचिम । विच्यात् । विचिता । विचिष्यति । अविचिष्यत् । अव्याचीत्, अव्यचीत् । गुजत् शब्दे । गुजति । अगुजीत् । घुटत् प्रतीघाते । घुटति । घुटेत् । घुटतु । अघुटत् । जुघोट । घुटिता । घुटिष्यति । अघुटीत् । चुट छुट त्रुटत् छेदने । तुटत् कलहकर्मणि । मुटत् आक्षेपप्रमर्दनयोः । स्फुटत् विकसने । स्फुटति । पुस्फोट । स्फुटिता । स्फुटिष्यति । अस्फुटिष्यत् । अस्फुटीत् । पुट लुठत् संश्लेषणे । कृडत् घसने । कुडत् बाल्ये च । गुडत् रक्षायाम् । गुडति । जुगोड । गुडिता । अगुडीत् ।

जुडत् बन्धे । तुडत् तोडने । लुड थुड स्थुडत् सवरणे । बुडत् उत्सर्गे च । ब्रुड भ्रुडत् संघाते । दुड हुड त्रुडत् निमज्जने । चुणत् छेदने । चुणति । चुचोण । चुण्यात् । चुणिता । अचुणीत् । डिपत क्षेपे । छुरत् छेदने । छुरति । अच्छुरत् । चुच्छोर । छुरिता । अछुरीत् । स्फुरत् स्फुरणे । स्फुरति । स्फुलत संचये च । **इति परस्मैपदं समाप्तम्** ।

## अथात्मनेपदम् ।

कुंङ् कूङ्त् शब्दे । कुवते । कुवेत । कुवताम् । अकुवत । चुकुवे । कुषीष्ट । कुतासे । कुष्यते । अकुष्यत । अकुत अकुषाताम् अकुषत । कुवते । कुवेत । चुकुवे । कुविता । गुरैति उद्यमे । गुरते । गुरिता । अगुरिष्ट । इति कुटादिगणः समाप्तः ॥ पृंङ्त् व्यायामे । प्रियते । प्रियेत । प्रियताम् । अप्रियत । पप्रे पप्राते पप्रिरे । पृषीष्ट । पर्तासे । परिष्यते । अपरिष्यत । अपृत । दृङ्त् आदरे । प्रायेणायमाङ्पूर्व, आद्रियते । आद्रियेत । आद्रियताम् । आद्रियत । आदद्रे । आदृषीष्ट । आदर्तासे । आदरिष्यते । आदरिष्यत । आदृत आदृषाताम् आदृषत । धृंङ्त् स्थाने । ध्रियते । ध्रियेत । ध्रियताम् । अध्रियत । दध्रे । दध्रिषे । धृषीष्ट । धर्ता । धरिष्यते । अधरिष्यत । अधृत । ओविजैति भयचलनयोः । उद्विजते । उद्विजताम् । उदविजत । उद्विविजे । उद्वेजिता । उद्वेजिष्यते । उदवेजिष्ट । ओलजैङ ओलस्जैति व्रीडे ।

लजते । लेजे । लजितासे । अलजिष्ट । लज्जते । ललज्जे । लज्जिता । अलज्जिष्ट । ष्वञ्जित् सङ्गे 'नो व्यञ्जनस्य' इत्यादिना नो लुकि स्वजते । स्वजेन । स्वजताम् । अस्वजत ।

स्वञ्जश्च । २ । ३ । ४५ ।

उपसर्गस्थाद् नाम्यादं परस्य स्वञ्जे सकारस्य षकारो भवति, द्वित्वेऽपि, अट्यपि । आभिष्वजते । अभिष्वजेत । अभिष्वजताम् । अभ्यष्वजत ।

स्वञ्जेर्नवा । ४ । ३ । २२ ।

स्वञ्जे. परोक्षा किद्वद् वा भवति । इति नलुगभावे सस्वञ्जे, परिषस्वञ्जे । पक्षे सस्वजे । परिषस्वजे परिषस्वजाते परिषस्वजिरे । स्वङ्क्षीष्ट । स्वङक्तासे । स्वङ्क्ष्यते । अस्वङ्क्ष्यत । नञा निर्दिष्टस्यानित्यत्वादिटि अस्वञ्जिष्ट । जुषैति प्रीतिसेवनयो. । जुषते । जुषेत । जुषताम् । अजुषन । जुजुषे । जोषिषीष्ट । जोषितासे । जोषिष्यते । अजोषिष्यत । अजोषिष्ट अजोषिषाताम् अजोषिषत ।

॥ इति तुदादिगणः समाप्तः ॥

---

## अथ रुधादिगणः ।

पानुबन्धा रुधादयः । रुधृंपी आवरणे । आवरणं व्यापित्वम् ।

**रुधां स्वराच्छ्नो नलुक् च । ३ । ४ । ८२ ।**

रुधादीनां स्वरात् पर कर्तरि विहिते शिति श्नो भवति, तद्योगे च प्रकृतेर्नो लुक् च यथासम्भवम् । शकारः शित्कार्यार्थः । ङित्त्वाद् गुणाभावे नकारस्य णकारे तकारस्य च धकारे धातोर्धकारस्य दकारे रुणद्धि । अविति शिति 'श्नास्त्योर्लुक्' इति अकारस्य लुकि रुन्द्धः । ननु अत्र णत्वं कथं न ? उच्यते 'ञ्नां धुड्वर्गेऽन्त्योऽपदान्ते' इत्यत्र 'ञ्नां' इति बहुवचनत्वेन णत्वस्याप्यपवादभूतमिदं सूत्रमिति ज्ञाप्यते, तेनानेन नस्य न एव । रुन्धन्ति । रुणत्सि रुन्द्धः रुन्द्ध । रुणध्मि रुन्ध्वः रुन्ध्मः । रुन्द्धे रुन्धाते रुन्धते । रुन्त्से रुन्धाथे रुन्द्ध्वे । रुन्धे रुन्ध्वहे रुन्ध्महे । रुन्ध्यात् रुन्ध्याताम् रुन्ध्युः । रुन्ध्याः रुन्ध्यातम् रुन्ध्यात । रुन्ध्याम् रुन्ध्याव रुन्ध्याम । रुन्धीत रुन्धीयाताम् रुन्धीरन् । रुन्धीथाः रुन्धीयाथाम् रुन्धीध्वम् । रुन्धीय रुन्धीवहि रुन्धीमहि । रुणद्धु रुन्द्धात् रुन्द्धाम् रुन्धन्तु । रुन्द्धि, रुन्द्धात् रुन्द्धम् रुन्द्ध । रुणधानि रुणधाव रुणधाम । रुन्द्धाम्, रुन्धाताम् रुन्धताम् । रुन्त्स्व रुन्धाथाम् रुन्द्ध्वम् । रुणधै रुणधावहै रुणधामहै । अरुणत् अरुन्द्धाम् अरुन्धन् । सेर्लोपे धस्य त्व

सत्वे विसर्गे अरुण:, अरुन्द्ध्वम् अरुन्द्ध । अरुणधम् अरुन्ध्व अरुन्ध्म । अरुन्द्ध अरुन्धाताम् अरुन्धत । अरुन्द्धा. अरुन्धाथाम् अरुन्द्ध्वम् । अरुन्धि अरुन्ध्वहि अरुन्ध्महि । रुरोध रुरुधतु । रुरोधिथ रुरोद्ध । रुरुधे । रुध्यात् । रुत्सीष्ट । रोद्धामि । रोद्धासे । रोत्स्यति । रोत्स्यते । अरोत्स्यत् । अरोत्स्यत । इरदित्वादद्यतन्यामङि अरुधत् अरुधताम् अरुधन् । पक्षे अरौत्सीत् अरौद्धाम् अरौत्सु: । आत्मनेपदे अरुद्ध अरुत्साताम् अरुत्सत । रिचूंपी विरेचने । विरेचनं निःसारणम् । रिणक्ति रिङ्क्तः रिञ्चन्ति । रिङ्क्ते रिञ्चाते रिञ्चते । रिञ्च्यात् । रिञ्चीत । रिणक्तु । रिङ्क्ताम् । अरिणक् । अरिङ्क्त । रिरेच । रिरेचिथ, रिरेक्थ । रिरिचे । रिच्यात् । रिक्षीष्ट । रेक्तासि । रेक्तासे । रेक्ष्यति । रेक्ष्यते । अरेक्ष्यत् । अरेक्ष्यत । अरिचत् , अरैक्षीत् । अरिक्त । विचूंपी पृथग्भावे । विनक्ति । विङ्क्ते । विञ्च्यात् । विञ्चीत । विनक्तु विङ्क्ताम् । अविनक् । अविङ्क्त । विवेच । विवेचिथ, विवेक्थ । विविचे । विच्यात् । विक्षीष्ट । वेक्तासि । वेक्तासे । वेक्ष्यति । वेक्ष्यते । अवेक्ष्यत् । अवेक्ष्यत । अविचत् , अवैक्षीत् । अविक्त । युजूंपी योगे । युनक्ति युङ्क्त. युञ्जन्ति । युङ्क्ते युञ्जाते युञ्जते । युञ्ज्यात् । युञ्जीत । युनक्तु । युङ्क्ताम् । अयुनक् । अयुङ्क्त । युयोज । युयुजे । युज्यात् । युक्षीष्ट । योक्तासि । योक्तासे । योक्ष्यति । योक्ष्यते । अयोक्ष्यत् । अयोक्ष्यत ।

अयुजत्, अयौक्षीत्। अयुक्त। क्षुदृॣपी संपेषे। क्षुणत्ति क्षुन्तः क्षुन्दन्ति। क्षुन्ते क्षुन्दाते क्षुन्दते। क्षुन्द्यात्। क्षुन्दीत। क्षुणत्तु। क्षुन्ताम्। अक्षुणत्। अक्षुन्त। चुक्षोद। चुक्षुदे। क्षुद्यात्। क्षुत्सीष्ट। क्षोत्तासि। क्षोत्तासे। क्षोत्स्यति। क्षोत्स्यते। अक्षोत्स्यत्। अक्षोत्स्यत। अक्षुदत्। अक्षौत्सीत्। अक्षुत्त अक्षुत्साताम् अक्षुत्सत। भिदृॣपी विदारणे। भिनत्ति। भिन्ते। भिन्द्यात्। भिन्दीत। भिनत्तु। भिन्ताम्। अभिनत्। अभिन्त। बिभेद। बिभिदे। भिद्यात्। भित्सीष्ट। भेत्तासि। भेत्तासे। भेत्स्यति। भेत्स्यते। अभेत्स्यत्। अभेत्स्यत। अभिदत्, अभैत्सीत्। अभित्त। छिदृॣपी द्वैधीकरणे अद्वैधस्य पृथक्त्वे। छिनत्ति। छिन्ते। छिन्द्यात्। छिन्दीत। छिनत्तु। छिन्ताम्। अच्छिनत्। अच्छिन्त। चिच्छेद। चिच्छिदे। छिद्यात्। छित्सीष्ट। छेत्तासि। छेत्तासे। छेत्स्यति। छेत्स्यते। अच्छेत्स्यत्। अच्छेत्स्यत। अच्छिदत्, अच्छैत्सीत्। अच्छित्त। ऊछृदृॣपी दीप्तिदेवनयोः। छृणत्ति। छृन्ते। छृन्द्यात्। छृन्दीत। छृणत्तु। छृन्ताम्। अच्छृणत्। अच्छृन्त। चच्छर्द चच्छर्दतुः चच्छर्दुः। चच्छृदे। छृद्यात्। छर्दिषीष्ट। छर्दितासि। छर्दितासे। छर्दिष्यति, छर्त्स्यति। छर्दिष्यते, छर्त्स्यते। अच्छर्दिष्यत्, अच्छर्त्स्यत्। अच्छर्दिष्यत, अच्छर्त्स्यत। अच्छृदत्, अच्छर्दीत्। अच्छर्दिष्ट। ऊतृदृॣपी हिंसाऽनादरयोः। तृणत्ति। तृन्ते। तृन्द्यात्। तृन्दीत। तृणत्तु। तृन्ताम्। अतृणत्। अतृन्त।

ततर्द । ततृदे । तृद्यात् । तर्दिषीष्ट । तर्दितासि । तर्दितासे : तर्दिष्यति, तर्त्स्यति । तर्दिष्यते, तर्त्स्यते । अतर्दिष्यत्, अतर्त्स्यत् । अतर्दिष्यत, अतर्त्स्यत । अतृदत्, अतर्दीत् । अतर्दिष्ट ।
इति रुधादिगणे उभयपदिनो धातवः समाप्ताः ॥

पृचैप् सम्पर्के । पृणक्ति । पृञ्च्यात् । पृणक्तु । अपृणक् । पपर्च पपृचुः । पृच्यात् । पर्चिता । पर्चिष्यति । अपर्चिष्यत् । अपर्चीत् । वृचैप् वरणे । वृणक्ति वृङ्क्त वृञ्चन्ति । वृञ्च्यात् । अवृणक् । ववर्च ववृचुः । वर्चिता । अवर्चीत् । तञ्चू तञ्जौप् संकोचने । तनक्ति । अतनक् । ततञ्च । तच्यात् । तञ्चिता । तञ्चिष्यति । अतञ्चिष्यत् । अतञ्चीत् । तनक्ति । अतनक् । ततञ्ज । तज्यात् । तञ्जिता, तङ्क्ता । तञ्जिष्यति, तङ्क्ष्यति । अतञ्जिष्यत्, अतङ्क्ष्यत् । अतञ्जीत्, अताङ्क्षीत् । भञ्जौप् आमर्दने । भनक्ति । अभनक् । बभञ्ज । भज्यात् । भङ्क्ता । भङ्क्ष्यति । अभङ्क्ष्यत् । अभाङ्क्षीत् अभाङ्क्ताम् अभाङ्क्षुः । भुजंप् पालनाभ्यवहारयोः । अभ्यवहारो भोजनम् । भुनक्ति भुञ्ज्यात् । अभुनक् । बुभोज । भुज्यात् । भोक्तासि । भोक्ष्यति । अभोक्ष्यत् । अभौक्षीत् । त्राणादन्यत्र भुनज इत्यात्मनेपदे हविर्भुङ्क्ते । बुभुजे । अभुङ्क्त । अञ्जौप् व्यक्तिम्रक्षणगतिषु । व्यक्तिः प्रकटता, म्रक्षणं घृतादिसेकः । अनक्ति । अञ्ज्यात् । अनक्तु । आनक् । आनञ्ज । अ-

ञ्यात् । अञ्जितासि, अङ्क्तासि । अञ्जिष्यति, अङ्क्ष्यति । आञ्जिष्यत्, आङ्क्ष्यत् ।

**सिचोऽञ्जेः । ४ । ४ । ८४ ।**

अञ्जेर्धातोः सिच आदिरिड् भवति । आञ्जीत् आञ्जिष्टाम् आञ्जिषुः । ओविजैप् भयचलनयोः । विनक्ति । विङ्क्तः । विञ्ज्यात् । विनक्तु । अविनक् । विवेज ।

**विजेरिट् । ४ । ३ । १८ ।**

विजेरिड् ङिद्वद् भवति । विविजिथ । विज्यात् । विजिता । विजिष्यति । अविजिष्यत् । अविजीत् । कृतैप् वेष्टने । कृणत्ति कृन्त्तः । कृन्त्यात् । अकृणत् । चकर्त । कृत्यात् । कर्तितासि । कर्त्स्यति, कर्तिष्यति । अकर्त्स्यत्, अकर्तिष्यत । अकर्तीत् । उन्दैप् क्लेदने । उनत्ति । उन्द्यात् । औनत् । उन्दाञ्चकार । उन्दाम्बभूव । उन्दामास । उद्यात् । उन्दिता । उन्दिष्यति । औन्दीत् । शिषॢंप् विशेषणे । विशेषण गुणान्तरोत्पादनम् । शिनष्टि । शिंष्यात् । शिनष्टु । अशिनट् । शिशेष । शिष्यात् । शेष्टा । शेक्ष्यति । अशेक्ष्यत् । अशिषत् अशिषताम् अशिषन् । पिष्ॢंप् सञ्चूर्णने । पिनष्टि पिंष्ट पिंषन्ति । पिनक्षि । अपिनट् । पिपेष । पिष्यात् । पेष्टा । पेक्ष्यति । अपेक्ष्यत् । अपिषत् । हिसु तृहप् हिंसायाम् । हिनस्ति हिंस्त हिंसन्ति । हिनस्सि । हिंस्यात् । हिंसन्तु । हौ ' हुधुटो हेर्धिः ' इति हेर्धित्वे ' सो धि

वा ' इति सो लुकि हिन्धि पक्षे हिन्द्धि । अहिनत् । जिहिंस । हिंस्यात् । हिंसिता । हिंसिष्यति । अहिंसीत् ।

**तृहः श्नादीत् । ४ । ३ । ६२ ।**

तृहेः श्नात् परो व्यञ्जनादौ विति परे ईद् भवति । तृणेढि तृण्ढ. तृंहन्ति । तृणेक्षि तृण्ढः तृण्ढ । तृणेह्मि तृंह्व' तृंह्मः । तृंह्यात् । तृणेढु । तृण्ढि । तृणहानि तृणहाव तृणहाम । अतृणेट् । ततर्ह । तृह्यात् । तर्हिता । तर्हिष्यति । अतर्हिष्यत् । अतर्हीत् । इति परस्मैपदं समाप्तम् ।

**अथात्मनेपदम्—**

खिर्दिप् दैन्ये । खिन्ते खिन्दाते खिन्दते । खिन्दीत । खिन्ताम् । अखिन्त । चिखिदे । खित्सीष्ट । खेत्तासे । खेत्स्यते । अखेत्स्यत । अखित्त अखित्साताम् अखित्सत । विर्दिप् विचारणे । विन्त्ते । विन्दीत । विन्ताम् । अविन्त । विविदे । वित्सीष्ट । वेत्तासे । वेत्स्यते । अवेत्स्यत । अवित्त । ञिइन्धैपि दीप्तौ । इन्धे, इन्द्धे एवं यथायोगं ' धुटो धुटि स्वे वा ' इति वा दलुक् विधेय । इन्धाते इन्धते । इन्धीत । इन्द्धाम् । ऐन्ध । ' जागुष-समिन्धेर्नवा ' समिन्धाञ्चक्रे, समिन्धाम्बभूव, समिन्धामास । पक्षे कित्त्वात् नो लुकि समीधे समीधाते समीधिरे । इन्धिषीष्ट । इन्धितासे । इन्धिष्यते । ऐन्धिष्यत । ऐन्धिष्ट ।

इति रुधादिगण समाप्त. ॥

## अथ तनादिगणः ।

यानुबन्धास्तनादयः । तनूयी विस्तारे ' कृग्तनादेरुः ' इति कर्तरि शिति परे उप्रत्यये ' उश्नोः ' इति अक्ङिति परे गुणे तनोति तनुतः तन्वन्ति । तनोषि तनुथः तनुथ । तनोमि । ' वम्यविति वा ' इति तनुवः, तन्वः तनुम . तन्मः । तनुते तन्वाते तन्वते । तनुषे तन्वाथे तनुध्वे । तन्वे तनुवहे, तन्वहे तनुमहे, तन्महे । तनुयात् तनुयाताम् तनुयु । तनुया तनुयातम् तनुयात । तनुयाम् तनुयाव तनुयाम । तन्वीत तन्वीयाताम् तन्वीरन् । तन्वीथाः तन्वीयाथाम् तन्वीध्वम् । तन्वीय तन्वीवहि तन्वीमहि । तनोतु, तनुतात् तनुताम् तन्वन्तु । तनु, तनुतात् तनुतम् तनुत । तनवानि तनवाव तनवाम । तनुताम् तन्वाताम् तन्वताम् । तनुष्व तन्वाथाम् तनुध्वम् । तनवै तनवावहै तनवामहै । अतनोत् अतनुताम् अतन्वन् । अतनो अतनुतम् अतनुत । अतनवम् अतनुव, अतन्व अतनुम अतन्म । अतनुत अतन्वाताम् अतन्वत । अतनुथा अतन्वाथाम् अतनुध्वम् । अतन्वि अतनुवहि, अतन्वहि अतनुमहि, अतन्महि । ततान तेनतु. तेनु । तेनिथ तेनथु तेन । ततान, ततन तेनिव तेनिम । तेने तेनाते तेनिरे । तेनिषे तेनाथे तेनिध्वे । तेने तेनिवहे तेनिमहे । तन्यात् तन्यास्नाम् तन्यासु । तन्याः तन्यास्तम् तन्यास्त । तन्यासम् तन्यास्व तन्यास्म । तनिषीष्ट तनिषीयास्ताम् तनिषीरन् । तनितासि । तनितासे । तनिष्यति । तनिष्यते । अतनिष्यत् । अतनिष्यत । अतानीत्, अतनीत् अतनिष्टाम् अतनिषुः ।

**तन्भ्यो वा तथासि न्णोश्च । ४ । ३ । ६८ ।**

तनादिभ्य: परस्य सिच: ते थासि च लुब् वा, तद्योगे न्णोश्च लुब् न चेड् भवति । अतत, अतनिष्ट अतनिषाताम् अतनिषत । अतथा:, अतनिष्ठा: अतनिषाथाम् अतनिड्ढ्वम्, अतनिध्वम् । अतनिषि अतनिष्वहि अतनिष्महि । षणूयी दाने । सनोति । सनुते । सनुयात् । सन्वीत । सनोतु । सनुताम् । असनोत् । असनुत । ससान सेनतु सेनु । सेने सेनाते सेनिरे । सन्यात् । सनिषीष्ट । सनितासि । सनितासे । सनिष्यति । सनिष्यते । असनिष्यत् । असनिष्यत । असानीत्, असनीत् ।

**सनस्तत्रा वा । ४ । ३ । ६९ ।**

सनो लुपि सत्यामा वा भवति । असात, असत, असनिष्ट असनिषाताम् असनिषत । असाथा:, असनिष्ठा: असनिषाथाम् असनिध्वम्, असनिड्ढ्वम् । असनिषि असनिष्वहि असनिष्महि । क्षणूग् क्षिणूयी हिंसायाम् । क्षणोति । क्षणुते । क्षणुयात् । क्षण्वीत । अक्षणोत् । अक्षणुत । चक्षाण । चक्षणे । क्षण्यात् । क्षणिषीष्ट । क्षणितासि । क्षणितासे । क्षणिष्यति । क्षणिष्यते । अक्षणिष्यत् । अक्षणिष्यत । व्यञ्जनादेरिति वा वृद्धेर्न श्वि-जाग्रिति प्रतिषेधे अक्षणीत् । अक्षत, अक्षणिष्ट । अक्षथा:, अक्षणिष्ठा । क्षिणोति । क्षिणुते । क्षिणुयात् । क्षिण्वीत । क्षिणोतु । क्षिणुताम् । अक्षि-

णोत् । अक्षिणुत । चिक्षेण । चिक्षिणे । क्षिण्यात् । क्षेणिषीष्ट । क्षेणितासि । क्षेणिष्यति । क्षेणिष्यते । अक्षेणीत् । अक्षित । अक्षेणिष्ट । अक्षेथाः, अक्षेणिष्ठाः । ऋणूयी गतौ । अर्णोति अर्णुते । अर्णुयात् । अर्ण्वीत । अर्णोतु । अर्णुहि । अर्णुताम् । आर्णोत् । आर्णुत । आनर्ण आनृणतुः आनृणुः । आनृणे । ऋण्यात् । अर्णिषीष्ट । अर्णितासि । अर्णितासे । अर्णिष्यति । अर्णिष्यते । आर्णिष्यत् । आर्णिष्यत । आर्णीत् आर्णिष्टाम् आर्णिषुः । आर्त, आर्णिष्ट आर्थाः, आर्णिष्ठाः । तृणूयी अदने । तर्णोति । तर्णुते । तर्णुहि । तर्णुताम् । अतर्णोत् । अतर्णुत । ततर्ण । ततृणे । तृण्यात् । तर्णिषीष्ट । तर्णिता । तर्णिष्यति, तर्णिष्यते । अतर्णिष्यत् । अतर्णिष्यत । अतर्णीत् । अतर्त, अतर्णिष्ट । अतर्थाः, अतर्णिष्ठाः । घृणूयी दीप्तौ । घर्णोति । घर्णुते । जघर्ण । जघृणे । घर्णिता । अघर्त, अघर्णिष्ट । अघर्थाः, अघर्णिष्ठाः । इति तनादिगणे उभयपदं समाप्तम् । अथात्मनेपदम्—

वनूयि याचने । वनुते । वन्वीत । वनुताम् । अवनुत । ववने ववनाते ववनिरे । वनिषीष्ट । वनिता । अवनिष्यत । अवत, अवनिष्ट । अवथाः, अवनिष्ठाः । मनूयि बोधने । मनुते मन्वाते मन्वते । मनुमहे, मन्महे । मन्वीत मन्वीयाताम् मन्वीरन् । मनुताम् मन्वाताम् मन्वताम् । अमनुत । मेने मेनाते मेनिरे । मनिषीष्ट । मनिता । अमत, अमनिष्ट । अमथाः, अमनिष्ठाः । इत्यात्मनेपदं समाप्तम् । इति समाप्तः तनादिगणः ॥

## अथ क्र्यादिगणः ।

शानुबन्धाः क्र्यादयः । डुक्रीञ्श् द्रव्यविनिमये । विनिमयः परिवर्तः ।

### क्र्यादेः । ३ । ४ । ७९ ।

क्र्यादेः कर्तरि विहिते शिति श्ना भवति । क्रीणाति 'एषामीर्व्यञ्जनेऽदः' क्रीणीत 'श्नाभ्यस्तयोरातः' क्रीणन्ति । क्रीणासि क्रीणीथः क्रीणीथ । क्रीणामि क्रीणीवः क्रीणीमः । क्रीणीते क्रीणाते क्रीणते । क्रीणीषे क्रीणाथे क्रीणीध्वे । क्रीणे क्रीणीवहे क्रीणीमहे । क्रीणीयात् क्रीणीयाताम् क्रीणीयुः । क्रीणीत क्रीणीयाताम् क्रीणीरन् । क्रीणातु, क्रीणीतात् क्रीणीताम् क्रीणन्तु । क्रीणीहि क्रीणीतम् क्रीणीत । क्रीणानि क्रीणाव क्रीणाम । क्रीणीताम् क्रीणाताम् क्रीणताम् । क्रीणीष्व क्रीणाथाम् क्रीणीध्वम् । क्रीणै क्रीणावहै क्रीणामहै । अक्रीणात् अक्रीणीताम् अक्रीणन् । अक्रीणाः अक्रीणीतम् अक्रीणीत । अक्रीणम् अक्रीणीव अक्रीणीम । अक्रीणीत अक्रीणाताम् अक्रीणत । अक्रीणीथाः अक्रीणाथाम् अक्रीणीध्वम् । अक्रीणि अक्रीणीवहि अक्रीणीमहि । चिक्राय चिक्रियतुः चिक्रियुः । चिक्रिये । क्रीयात् । क्रेषीष्ट । क्रेतासि । क्रेतासे । क्रेष्यति । क्रेष्यते । अक्रेष्यत् । अक्रेष्यत । अक्रैषीत् । अक्रैष्टाम् अक्रैषुः । अक्रेष्ट अक्रेषाताम् अक्रेषत । षिञ्श् बन्धने । सिनाति । सिनीते । सिनीयात् । सिनीत ।

सिनातु । सिनीताम् । असिनात् । असिनीत । सिषाय । सिष्ये । सीयात् । सेषीष्ट । सेतासि । सेतासे । सेष्यति । सेष्यते । असेष्यत् । असेष्यत । असैषीत् । प्रींगूश् तृप्तिकान्त्योः । प्रीणाति । प्रीणीते । अप्रीणात् । अप्रीणीत् । पिप्राय । पिप्रिये । प्रेता । प्रेष्यति । प्रेष्यते । अप्रैषीत् । अप्रेष्ट । श्रींगूश् पाके । श्रीणाति । श्रीणीते । शिश्राय । शिश्रिये । श्रीयात । श्रेषीष्ट । श्रेता । अश्रैषीत् । अश्रेष्ट । मीगूश् हिंसायाम् । मीनाति । प्रमीणाति । मीनीते । मीनीयात् । मीनीत । मीनातु । मीनीहि । मीनीताम् । अमीनात् । अमीनीत् । 'मिगूमीगोऽखलचलि' इति अक्ङिति आत्वे ममौ मिम्यतुः मिम्यु । ममिथ, ममाथ मिम्यथुः मिम्य । मिमाय, मिमय मिम्यिव मिम्यिम । मिम्ये मीयात् । मासीष्ट । मातासि । मातासे । मास्यति । मास्यते । अमास्यत् । अमास्यत । अमासीत् । अमास्त । युंगूश् बन्धने । युनाति । युनीते । युनीयात् । युनीत । युनातु । युनीताम् । अयुनात् । अयुनीत । युयाव । युयविथ, युयोथ । युयुवे । यूयात् । योषीष्ट । योता । अयौषीत् । अयोष्ट । स्कुंगूश् आप्रवणे । आप्रवणमुद्धरणम् ।

**स्तम्भूस्तुम्भूस्कम्भूस्कूम्भूस्कोः श्ना च । ३ । ४ । ७८ ।**

स्तम्भ्वादेः सौत्रधातोः स्कुगश्च कर्तरि विहिते शिति श्ना श्नुश्च भवति । स्कुनाति, स्कुनीते । स्कुनोति, स्कुनुते । स्कुनीयात्,

स्कुनीत । स्कुनुयात्, स्कुन्वीत । स्कुनातु, स्कुनीताम् । स्कुनोतु, स्कुनुताम् । अस्कुनात्, अस्कुनीत । अस्कुनोत्, अस्कुनुत । चुस्काव । चुस्कुवे । स्कूयात् । स्कोषीष्ट । स्कोता । अस्कौषीत् । अस्कोष्ट । क्नूग्श् शब्दे । क्नूनाति, क्नूनीते । चुक्नाव । चुक्नुवे । क्नविता । क्नविष्यति । क्नविष्यते । अक्नावीत् । अक्नविष्ट । द्रूग्श् हिंसायाम् । द्रूणाति । द्रूणीते । अद्रूणात् । अद्रूणीत । दुद्राव । दुद्रुवे । द्रूयात् । द्रविषीष्ट । द्रवितासि । द्रवितासे । अद्रावीत् । अद्रविष्ट । ग्रहीश् उपादाने । उपादानं स्वीकारः । गृह्णाति । गृह्णीते 'ग्रहव्रश्च—' इत्यादिना य्वृत् । गृह्णीयात् । गृह्णीत । गृह्णातु ।

## व्यञ्जनाच्छ्नाहेरानः । ३ । ४ । ८० ।

व्यञ्जनात् परस्य श्नायुक्तस्य हेरानो भवति । गृहाण । गृह्णीतात् । गृह्णीताम् । अगृह्णात् । अगृह्णीत । जग्राह । जगृहे जगृहाते जगृहिरे । गृह्यात् ।

## गृह्णोऽपरोक्षायां दीर्घः । ४ । ४ । ३४ ।

ग्रहेर्धातोर्विहित इड् दीर्घो भवति, न तु परोक्षायाम् । ग्रहीषीष्ट । ग्रहीतासि । ग्रहीतासे । ग्रहीष्यति । ग्रहीष्यते । अग्रहीष्यत् । अग्रहीष्यत । 'न श्वि' इत्यादिना वृद्धिनिषेधात् अग्रहीत्

अग्रहीष्टाम् अग्रहीषु । अग्रहीष्ट अग्रहीषाताम् अग्रहीषत ।

## अथ क्र्याद्यन्तर्गणः प्वादिः ।

### प्वादेर्ह्रस्वः । ४ । २ । १०५ ।

प्वादेरत्यादौ शिति ह्रस्वो भवति । पूगृश् पवने । पवनं शुद्धिः । पुनाति । पुनीते । अपुनात् । अपुनीत । पुपाव । पुपुवे । पूयात् । पविषीष्ट । पवितासि । पवितासे । पविष्यति । पविष्यते । अपावीत् अपाविष्टाम् अपाविषुः । अपविष्ट अपविषाताम् अपविषत । लूगृश् छेदने । लुनाति । लुनीते । लुनीयात् । लुनीत । लुनातु । लुनीताम् । अलुनात् । अलुनीत । लुलाव * लुलुवे । अलावीत् । अलविष्ट । धूगृश् कम्पने । धुनाति । धुनीते । धुनातु । धुनीताम् । अधुनात् । अधुनीत । दुधाव । दुधुवे । धूयात् । धविषीष्ट । धोतासि, धवितासि । धोतासे, धवितासे । धविष्यति । धविष्यते । अधविष्यत् । अधविष्यत । अधावीत् । अधोष्ट, केचित् सुसाहचर्यात् तत्र सूत्रे प्वादेर्ग्रहणादस्य अधविष्ट इतीच्छन्ति । स्तॄगृश् आच्छादने । स्तृणाति । स्तृणीते । स्तृणीयात् । स्तृणीत । अस्तृणात् । अस्तृणीत । तस्तार तस्तरतुः तस्तरुः । तस्तरिथ । तस्तरे तस्तराते तस्तरिरे । स्तीर्यात् । 'इट् सिजाशिषोरात्मने' इति वा इट् स्तरिषीष्ट, स्तीर्षीष्ट । 'वृतो नवाऽनाशीःसिच्परस्मै च' इतीटो वा दीर्घे स्तरीतासि, स्तरितासि । स्तरीतासे, स्तरितासे । स्तरीष्यति, स्तरिष्यति । स्तरिष्यते, स्तरीष्यते । अस्त-

रिष्यत्, अस्तरीष्यत् । अस्तरिष्यत, अस्तरीष्यत । अस्तारीत् अस्तारिष्टाम् अस्तारिषुः । अस्तरिष्ट अस्तरिषाताम् अस्तरिषत । अस्तरिष्ठाः अस्तरिषाथाम् अस्तारिड्ढ्वम्, अस्तरिढ्वम्, अस्त-रिध्वम् । अस्तरिषि अस्तरिष्वहि अस्तरिष्महि । पक्षे दीर्घः अस्तरीष्ट अस्तरीषाताम् अस्तरीषत इत्यादि । इडभावे तु 'ऋवर्णात्' इति कित्वे अस्तीर्ष्ट अस्तीर्षाताम् अस्तीर्षत । कॄगृ्श् हिंसायाम् । कृणाति । कृणीते । चकार चकरतु चकरुः । चकरिथ । चकरे चकराते चकरिरे । कीर्यात् । करिषीष्ट, कीर्षीष्ट । करितासि, करीतासि । करितासे, करीतासे । करिष्यति, करी-ष्यति । करिष्यते, करीष्यते । अकरिष्यत्, अकरीष्यत् । अक-रिष्यत, अकरीष्यत । अकारीत् । अकरिष्ट अकरिषाताम् अकरि-षत । अकरीष्ट अकरीषाताम् अकरीषत । अकीर्ष्ट अकीर्षाताम् अकीर्षत । वॄगृ्श् वरणे । वृणीयात् । वृणीत । ववार ववरतुः ववरुः । ववरिथ । ववरे ववराते ववरिरे । उरादेशे दीर्घे च वूर्यात् । वरिषीष्ट, वूर्षीष्ट । वरितासि, वरीतासि । वरितासे, वरीतासे । वरिष्यति, वरीष्यति । वरिष्यते, वरीष्यते । अवरिष्यत्, अवरी-ष्यत् । अवरिष्यत, अवरीष्यत । अवारीत् अवारिष्टाम् अवारिषुः । अवरिष्ट अवरिषाताम् अवरिषत । अवरीष्ट अवरीषाताम् अवरीषत । अवूर्ष्ट अवूर्षाताम् अवूर्षत । इत्युभयपदम् ॥

ज्यांश् हानौ 'ज्याव्यधः क्ङिति' इति संवृति

**दीर्घमवोऽन्त्यम् । ४ । १ । १०३ ।**

वेग्वर्जस्य य्वृदन्त्यं दीर्घं भवति । प्वादित्वाद् ह्रस्वे जिनाति । जिनीयात् । जिनातु । अजिनात् । 'ज्याव्येव्यधिव्यचिव्यथेरिः' इति द्वित्वे पूर्वस्य इत्वे जिज्यौ । 'ज्याव्यध' इत्यादिना य्वृति जिज्यतुः जिज्युः । जिज्यिथ, जिज्याथ जिज्यथु जिज्य । जिज्यौ जिज्यिव जिज्यिम । जीयात् । ज्यातासि । ज्यास्यति । अज्यास्यत् । अज्यासीत् अज्यासिष्टाम् अज्यासिषुः । रीश् गतिरेषणयोः । रिणाति । रिणीयात् । रिणातु । अरिणात् । रिराय रिर्यतुः रिर्यु । रीयात् । रेतासि । अरैषीत् । लीश् श्लेषणे । लिनाति । लिनीयात् । लिनातु । अलिनात् । लिलाय । लीयात् । लाता, लेता । अलैषीत् । व्लीश् वरणे । ल्वीश् गतौ । कॄ मॄ शॄश् हिंसायाम् । कृणाति । चकार चकरतु चकरुः । करिता, करीता । मृणाति । अमृणात् । ममार ममरतुः ममरुः । ममरिथ । मूर्यात् । मरितासि, मरीतासि । अमारीत् । शृणाति । अशृणात् । शशार ।

ऋः शॄदॄप्रः । ४ । ४ । २० ।

एषां परोक्षायामृर्वा भवति । शश्रतु, शशरतु । शश्रुः, शशरुः । शशरिथ । शीर्यात् । शरितासि, शरीतासि । अशारीत् । पॄश् पालनपूरणयोः । पृणाति । पपार पप्रतु, पपरतु पप्रुः, पपरुः । पपरिथ । पूर्यात् । परिता, परीता । परिष्यति, परीष्यति । अपारीत् । बॄश् भरणे । बृणाति । बबार बबरतुः बबरुः । बूर्यात् । बरिता,

बरीता । अबरिष्यत्, अबरीष्यत् । अबारीत् । भॄश् भर्जने च । भृणाति । बभार बभरतु । बभरिथ । भूर्यात् । भरिता, भरीता । भरिष्यति, भरीष्यति । अभरिष्यत्, अभरीष्यत् । अभारीत् । दॄश् विदारणे । दृणाति । अदृणात् । ददार ददरतु, दद्रतु, ददरु, दद्रुः । ददरिथ । दीर्यात् । अदारीत् । जॄश् वयोहानौ । नॄश् नये । नृणाति । अनृणात् । ननार ननरतु, ननरु । नीर्यात् । नरिता, नरीता । अनारीत् । गॄश् शब्दे । गृणीयात् । जगार जगरतु । गीर्यात् गरिता, गरीता । गरिष्यति, गरीष्यति । अगारीत् । ॠश् गतौ । ऋणाति । आर्णात् । आर । आरीत् । अरिता, अरीता ।

इति प्वादिगण समाप्त ॥

ज्ञाश् अवबोधने । 'जा ज्ञाजनोऽत्यादौ' जानाति । जानीयात् । अजानात् । जज्ञौ जज्ञतु जज्ञु । जज्ञिथ, जज्ञाथ । ज्ञेयात्, ज्ञायात् । ज्ञातासि । ज्ञास्यति । अज्ञास्यत् । अज्ञासीत अज्ञासिष्टाम् । क्षिष्श् हिंसायाम् । क्षिणाति । क्षिणातु । चिक्षाय चिक्षियतुः चिक्षियुः । क्षेता । क्षेष्यति । अक्षेष्यत् । अक्षैषीत् व्रींश् वरणे । व्रीणाति । विव्राय विव्रियतु विव्रियु. । व्रेता । भ्रींश् भरणे । भ्रीणाति । बिभ्राय बिभ्रियतु बिभ्रियु. । भ्रेता । अभ्रैषीत् । हेठश् भूतप्रादुर्भावे । तवर्गस्येति नस्य णत्वे । हेठ्णाति । हेठान । अहेठ्नात् । जिहेठ । हेठिता । अहेठीत् । मृडश् सुखने । मृड्णाति । मृड्णातु । मृडान । ममर्ड ममृडतुः ।

ममर्दिथ । मर्दिता । अमर्दीत् । श्रन्थश् मोचनप्रतिहर्षयोः । श्रथ्नाति । श्रथ्नातु । श्रथान । शश्रन्थ 'वा श्रन्थग्रन्थोर्नलुक् च' अनेन अवित्परोक्षासेट्थवोर्वा तद्योगे नो लुक् न च द्विः इति श्रेथतुः, शश्रन्थतुः । श्रेथुः, शश्रन्थुः । श्रेथिथ, शश्रन्थिथ । श्रथ्यात् । श्रन्थिता । अश्रन्थीत् । मन्थश् विलोडने । मथ्नाति । मथ्नातु । मथान । अमथ्नात् । ममन्थ । मथ्यात् । मन्थिता । अमन्थीत् । ग्रन्थश् संदर्भे ग्रथ्नाति । ग्रथ्नीयात् । ग्रथ्नातु । ग्रथान । अग्रथ्नात् । जग्रन्थ जग्रन्थतुः, ग्रेथतुः जग्रन्थुः, ग्रेथुः । जग्रन्थिथ, ग्रेथिथ । ग्रथ्यात् । ग्रन्थितासि । ग्रन्थिष्यति । अग्रन्थिष्यत् । अग्रन्थीत् । कुन्थश् सङ्क्लेशे । कुथ्नाति । कुथान । चुकुन्थ । कुथ्यात् । कुन्थिता । अकुन्थीत् । मृदश् क्षोदे । मृद्नाति । मृद्नातु मृदान । ममर्द ममृदतुः । मर्दिता । अमर्दिष्यत् । अमर्दीत् । गुधश् रोषे । गुध्नाति । गुधान । जुगोध । गोधिता । अगोधीत् । बन्धश् बन्धने । बध्नाति । बध्नीयात् । बध्नातु । बधान । अबध्नात् । बबन्ध । बबन्धिथ । बबन्ध । बन्द्धासि । भन्त्स्यति । अभन्त्स्यत् । अभान्त्सीत् अबान्द्धाम् अभान्त्सुः । णभ तुभश् हिंसायाम् । नभ्नाति । नभान । ननाभ नेभतुः नेभुः । नेभिथ । नभिता । अनाभीत् । तुभ्नाति । तुभान । तुतोभ तुतुभतुः तुतुभुः । तोभिता । अतोभीत् । क्लिशौश् विबाधने । क्लिश्नाति । क्लिश्नातु । क्लिशान । चिक्लेश । क्लिश्यात् । क्लेशिता, क्लेष्टा । क्लेशिष्यति, क्लेक्ष्यति । अक्लेशीत्, अक्लिक्षत् ।

अशश् भोजने । अश्नाति । अश्नीयात् । अश्नातु । अशान । आश्नात् । आश आशतु आशु. । अशिता । अशिष्यति । आशीत् । इषश् आभीक्ष्ण्ये । आभीक्ष्ण्यं पौनः पुन्यम् । इष्णाति । इष्णीयात् । इष्णातु । इषाण । ऐष्णात् । इयेष ईषतु ईषु. । इयेषिथ ईषथु । ऐषीत् । विषश् विप्रयोगे । विष्णाति । विषाण । विवेष । वेषिता । वेषिष्यति । अवेषीत् । मुषश् स्तेये । मुष्णाति । मुष्णीयात् । मुष्णातु । मुषाण । अमुष्णात् । मुमोष । मोषिता । मोषिष्यति । अमोषीत् । पुषश् पुष्टौ । पुष्णाति । पुष्णीयात् । पुष्णातु । पुषाण । पुपोष । पोषिता । अपोषीत् । कुषश् निष्कर्षे । कुष्णाति । कुष्णीयात् । कुष्णातु । कुषाण । अकुष्णात् । चुकोष । कुष्यात् । कोषिता । कोषिष्यति । अकोषीत् ।

### निष्कुषः । ४ । ४ । ३९ ।

नि पूर्वात् कुष. परस्य स्ताद्यशित आदिरिड् वा भवति । निष्कोष्टा, निष्कोषिता । निष्कोक्ष्यति, निष्कोषिष्यति । निरकोक्ष्यत्, निरकोषिष्यत् । निरकुक्षत् निरकुक्षताम् निरकुक्षन् । निरकोषीत् ।

### कुषिरञ्जेर्व्याप्ये वा परस्मै च । ३ । ४ । ७४ ।

आभ्यां कर्मकर्तरि शिद्विषये परस्मैपदं वा भवति, तद्योगे च श्यः । रोगः पादं कुष्णाति, रोग· किम् ? पादः स्वयमेव कुष्यति,

कुष्यते वा । कर्मकर्तुरभावे रोग: पादं कुष्णातीत्येव । अथ स्तम्भू स्तुम्भू स्कम्भू स्कुम्भू एते सौत्रा धातवस्तेषामपि श्नुपक्षे श्नाभवनात् रूपाणि दर्श्यन्ते–स्तभ्नाति । स्तभ्नीयात् । स्तभ्नातु । स्तभान । अस्तभ्नात् । तस्तम्भ । स्तभ्यात् । स्तम्भिता । अस्तम्भीत्, अस्तभत् । स्तुभ्नाति । स्तुभ्नीयात् । स्तुभ्नातु । अस्तुभ्नात् । तुस्तुम्भ । स्तुभ्यात् । स्तुम्भिता । स्तुम्भिष्यति । अस्तुम्भीत् । स्कभ्नाति । स्कभान । अस्कभ्नात् । चस्कम्भ । स्कभ्यात् । अस्कम्भीत् । स्कुभ्नाति । स्कुभ्नीयात् । स्कुभ्नातु । स्कुभान । अस्कुभ्नात् । चुस्कुम्भ । स्कुभ्यात् । स्कुम्भिता । स्कुम्भिष्यति । अस्कुम्भीत् ।

## इति परस्मैपदं समाप्तम् ॥

वृङ्श् संभक्तौ । संभक्ति संसेवा । वृणीते वृणाते वृणते । वृणीत वृणीयाताम् वृणीरन् । वृणीताम् वृणाताम् वृणताम् । अवृणीत अवृणाताम् अवृणत । वव्रे वव्राते वव्रिरे । वृषीष्ट वृषीयास्ताम् वृषीरन् । वरितासे, वरीतासे । वरिष्यते, वरीष्यंते । अवरिष्यत, अवरीष्यत । अवरिष्ट अवरिषाताम् अवरिषत । अवरिष्ठाः, अवरिषाथाम् अवरिढ्वम्, अवरिड्ढ्वम् । अवरिषि अवरिष्वहि अवरिष्महि । पक्षे दीर्घे अवरीष्ट अवरीषाताम् अवरीषत । अवरीष्ठा. अवरीषाथाम् अवरीढ्वम्, अवरीड्ढ्वम् । अवरीषि अवरीष्वहि अवरीष्महि । सिचोऽभावे अवृत अवृषाताम् अवृषत ।

अवृष्ठाः, अवृषाथाम् अवृढ्वम्, अवृड्ढ्वम् । अवृषि अवृष्वहि अवृष्महि ।

इति समाप्तः क्र्यादिगणः ।

---

## अथ चुरादिगणः ।

णानुबन्धाश्चुरादय । चुरण् स्तेये ।

### चुरादिभ्यो णिच् । ३ । ४ । १७ ।

चुरादिधातुभ्यः स्वार्थे णिच् प्रत्ययो भवति । ' शेषात् ' इति परस्मैपदे चुर्+इ+ति इति स्थिते गुणे कृते चोरि+ति इति स्थिते शवि कृते गुणे च अयादेशे च चोरयति चोरयत चोरयन्ति । चोरयसि चोरयथ चोरयथ । चोरयामि चोरयावः चोरयामः । चोरयेत् चोरयेताम् चोरयेयुः । चोरयेः चोरयेतम् चोरयेत । चोरयेयम् चोरयेव चोरयेम । चोरयतु, चोरयतात् चोरयताम् चोरयन्तु चोरय, चोरयतात् चोरयतम् चोरयत । चोरयाणि चोरयाव चोरयाम । अचोरयत् अचोरयताम् अचोरयन् । अचोरयः अचोरयतम् अचोरयत । अचोरयम् अचोरयाव अचोरयाम । चोरयाञ्चकार चोरयाम्बभूव । चोरयामास ।

**णेरनिटि । ४ । ३ । ८३ ।**

अनिटि अशिति प्रत्यये णेर्लुग् भवति । चोर्यात् । चोरयिता । चोरयिष्यति । अचोरयिष्यत् । अद्यतन्या ' णिश्रिद्रुस्रुकमः कर्तरि ङः ' इति ङे कृते 'आद्योंऽश एकस्वर ' इत्यनेन आद्यस्य एकस्वरवतोऽवयवस्य द्वित्वे चो+चोर्+इ+अ+त् इति स्थिते द्वित्वे पूर्वस्य ह्रस्वे—

**उपान्त्यस्यासमानलोपिशास्वृदितो ङे । ४ । २ । ३५ ।**

समानलोपिशास्वृदिद्वर्जस्य धातोरुपान्त्यस्य ङपरे णौ ह्रस्वो भवति । इति ह्रस्वे कृते—

**लघोर्दीर्घोऽस्वरादेः । ४ । १ । ६४ ।**

अस्वरादेरसमानलोपे ङपरे णौ द्वित्वे पूर्वस्य लघोर्लघुनि धात्वक्षरे परे दीर्घो भवति । अडागमे च णेर्लोपे च अचूचुरत् अचूचुरताम् अचूचुरन् । अचूचुरः अचूचुरतम् अचूचुरत । अचूचुरम् अचूचुराव अचूचुराम । पॄण् पूरणे । णौ ' नामिनोऽकलिहलेः ' इति वृद्धौ आरादेशे शवि गुणे च पारयति पारयतः पारयन्ति । पारयेत् । पारयतु । अपारयत् । पारयाञ्चकार । पारयाम्बभूव । पारयामास । पार्यात् । पारयिता । पारयिष्यति । अपारयिष्यत् । अद्यतन्यां दिप्रत्यये ङे च कृते पार्+इ+अ+त्

इति स्थिते द्वित्वे तस्य च ह्रस्वत्वे पपार्+इ+अ+त् इति स्थिते उपान्त्यस्य ह्रस्वे कृते पपर्+इ+अ+त् इति जाते

असमानलोपे सन्वल्लघुनि ङे । ४ । १ । ६३ ।

न विद्यते समानस्य लोपो यस्मिन् तस्मिन् ङपरे णौ द्वित्वे पूर्वस्य लघुनि धात्वक्षरे परे सनीव कार्यं भवति । सनि परे द्वित्वे पूर्वस्याकारस्य यथा इत्वं भवति तथाऽत्रापीत्यर्थ । अडागमे अ-पिपर्+इ+अ+त् इति जाते 'लघोर्दीघ' इत्यादिना दीर्घे 'णेरनिटि' इति णेर्लोपे अपीपरत् अपीपरताम् अपीपरन् । घृण् स्रवणे । घार-यति । घारयेत् । घारयतु । अघारयत् । घारयाञ्चकार । घारया-म्बभूव । घारयामास । घार्यात् । घारयिष्यति । अजीघरत् अजी-घरताम् अजीघरन् । श्वल्क वल्कण् भाषणे । श्वल्कयति । अश्वल्कयत् । श्वल्कयाञ्चकार । श्वल्कयाम्बभूव । श्वल्कयामास । श्वल्क्यात् । अश्वल्कयिष्यत् । परस्मिन् लघुधात्वक्षराभावात् न दीर्घः अशश्व-ल्कत् । नक्क धक्कण् नाशने । नक्कयति । अननक्कत् । धक्कयति । अदधक्कत् । चक्क चुक्कण् व्यथने । चक्कयति । अचचक्कत् । चुक्कयति । अचुचुक्कत् । टकुण् बन्धने । टङ्कयति । टङ्कयाञ्चकार । अटटङ्कत् । अर्कण् स्तवने । अर्कयति । आर्कयत् । अर्कयाञ्चकार । अर्क्यात् । अर्कयिता । अर्कयिष्यति ।

स्वरादेर्द्वितीयः । ४ । १ । ४ ।

द्व्युक्तिभाजः स्वरादेर्धातोर्द्वितीयोंऽश एकस्वरो द्विर्भवति। इति 'किं' इत्यस्य द्वित्वे प्राप्ते।

**अयि रः । ४ । १ । ६ ।**

स्वरादेर्धातोर्द्वितीयस्यांशस्यैकस्वरस्य संयोगादी रो द्विर्न भवति, न तु रादनन्तरे यि। आर्किकत् आर्किकताम् आर्किकन्। ङपरे णौ लघ्वक्षराभावात् न सन्वत्कार्यं दीर्घश्च। पचुण् विस्तारे पञ्चयति। अपञ्चयत्। पञ्च्यात्। पञ्चयिता। पञ्चयिष्यति। अपञ्चयिष्यत्। अपपञ्चत् अपपञ्चताम् अपपञ्चन्। म्लेच्छण् म्लेच्छने। म्लेच्छयति। म्लेच्छ्यात्। अमिम्लेच्छत् अमिम्लेच्छताम् अमिम्लेच्छन्। ऊर्जण् बलप्राणनयोः। प्राणनं जीवनम्। ऊर्जयति। और्जयत्। ऊर्ज्यात्। ऊर्जयिता। ऊर्जयिष्यति। और्जयिष्यत्। और्जिजत् और्जिजताम् और्जिजन्। तुजु पिजुण् हिंसाबलदाननिकेतनेषु। तुञ्जयति। पिञ्जयति। अपिपिञ्जत् अपिपिञ्जताम् अपिपिञ्जन्। पूजण् पूजायाम्। पूजयति। पूजयाञ्चकार। पूज्यात्। पूजयिता। अपूपुजत् अपूपुजताम् अपूपुजन्। तिजण् निशाने। तेजयति। तेजयतु। तेजयामास। तेज्यात्। अतीतिजत् अतीतिजताम् अतीतिजन्। वज व्रजण् मार्गणसंस्कारगत्योः। मार्गणो बाणस्तस्य संस्कारे गतौ च। अवीवजत्। अविव्रजत्। रुजण् हिंसायाम्। नटण् अवस्यन्दने। अवस्यन्दनं भ्रंशः। तुट चुट चुट्ट छुट्टण् छेदने। कुट्टण् कुत्सने च। पुट मुटण् संचूर्णने। लुण्टण् स्तेये। लुण्टयति। अलुलुण्टत्। स्फुटण् परिहासे।

वटुण् विभाजने । शुठण् आलस्ये । शोठयति । अशूशुठत् । गुठुण् वेष्टने । लडण् उपसेवायाम् । लाडयति । लाड्यात् । अलीलडत् । डस्य लत्वे लालयति । स्फुडुण परिहासे । ओलडुण् उत्क्षेपे। ओलण्डयति ओदिदयमित्यन्ये तन्मते लण्डयति । पीडण् गहने । गहनं बाधा । पीडयति ।

**भ्राजभासभाषदीपपीडजीवमीलकणरणवणभणश्रणह्वेहेठ-लुटलुपलपां नवा । ४ । २ । ३६ ।**

एषा डपरे णावुपान्त्यस्य ह्रस्वो वा भवति । अपीपिडत्, अपिपीडत् । तडण् आघाते । कडुण् खण्डने च । चुडुण् छेदने । मडुण् भूषायाम् । मण्डयति । मण्डयाञ्चकार । अममण्डत् । भडुण् कल्याणे । भण्डयति । अबभण्डत् । ईडण् स्तुतौ । ईडयति । ऐडिडत् । चडुण् कोपे । चण्डयति अचचण्डत् । चूण तूणण् संकोचने । चूणयति । अचूचुणत् । तूणयति । तूण्यात् । अतूतुणत् । श्रणण् दाने । श्राणयति । अशिश्रणत्, अशश्राणत् । चितुण् स्मृत्याम् । चिन्तयति । अचिचिन्तत् । पुस्त बुस्तण् आदरानादरयो' । पुस्तयति। पुस्ताञ्चकार । पुस्त्यात्, अपुपुस्तत् । बुस्तयति । अबुबुस्तत् । मुस्तण् संघाते । कृतण् संशब्दने ।

**कृतः कीर्तिः । ४ । ४ । १२२ ।**

कृतण. कीर्तिर्भवति। कीर्तयति । अकीर्तयत्। कीर्तयाञ्चकार।

**ऋदृ ऋवर्णस्य । ४ । २ । ३७ ।**

उपान्त्यऋवर्णस्य ङपरे णौ वा ऋर्भवति । अचीकृतत्, अचिकीर्तत् । श्रथण् प्रतिहर्षे । पृथण् प्रक्षेपणे । पर्थयति । प्रथण् प्रख्याने । छदण् संवरणे । चुदण् संचोदने । संचोदनं नोदनम् । चोदयति । चोदयाञ्चकार । अचूचुदत् । मिदुण् स्नेहने । मिन्दयति । छर्दण् वमने । छर्दयति । छर्दयाञ्चकार । अचच्छर्दत् । बुधुण् हिंसायाम् । बुधयति । वर्धण् छेदनपूरणयो. । वर्धयति । गर्धण् अभिकाङ्क्षायाम् । गर्धयति । बन्ध बधण् संयमने । बन्धयति । अबबन्धत् । बाधयति । बाधयाञ्चकार । अबीबधत् । छपुण् गतौ । स्तूपण् समुच्छ्राये । स्तूपयति । क्षपुण् क्षान्तौ । डिपण् क्षेपे । डपु डिपुण् संघाते । शूर्पण् माने । शूर्पयति । अशुशूर्पत् । डबु डिबुण् क्षेपे । लुबु तुबुण् अर्दने । पुर्बण् निकेतने । यमण् परिवेषणे । यमयति । अयीयमत् । व्ययण् क्षये । यत्रुण् संकोचने । यन्त्रयति । यन्त्रयाञ्चकार । अययन्त्रत् । तिलण् स्नेहने । जलण् अपवारणे । क्षलण् शौचे । पुलण् समुच्छ्राये । बिलण् भेदे । तलण् प्रतिष्ठायाम् । तुलण् उन्माने । दुलण् उत्क्षेपे । बुलण् निमज्जने । मूलण् रोहणे । कल किल पिलण् क्षेपे । पलण रक्षणे । पालयति । पालयाञ्चकार । अपीपलत् । इलण् प्रेरणे । एलयति । एलयाञ्चकार । एल्यात् । ऐलिलत् । चलण् भृतौ । सान्त्वण् सामप्रयोगे । धूशण् कान्तीकरणे । लूषण हिंसायाम् । रूषण् रोषे । रोषयति । रोषयाञ्चकार । रोष्यात् । अरूरुषत् ।

रक्षणे । भक्षण अदने । पक्षण परिग्रहे । पक्षयति । पक्षया-

ञ्चकार । अपपक्षत् । लक्षीण् दर्शनाङ्कनयोः । लक्षयति । लक्षयाञ्चकार । अललक्षत् । ज्ञाण् मारणादिनियोजनेषु ।

अर्तिरीब्लीह्रीक्नूयिक्ष्माय्यातां पुः । ४ । २ । २१ ।

एषामादन्तानां च णौ पुरन्तो भवति ।

मारणतोषणनिशाने ज्ञश्च । ४ । २ । ३० ।

मारणादिष्वर्थेषु वर्त्तमानस्य जानातेर्धातोर्णिचि अणिचि च णौ परे ह्रस्वो भवति, ञिणम्परे तु वा । मारणे सञ्ज्ञपयति पशून् हिनस्तीत्यर्थः । तोषणे विज्ञपयति गुरून् तोषयतीत्यर्थः । निशाने प्रज्ञपयति शस्त्रम् तीक्ष्णयतीत्यर्थः । अन्यत्र तु आज्ञापयति भृत्यान् आज्ञां करोतीत्यर्थः । ज्ञपयति । अजिज्ञपत् अजिज्ञपताम् अजिज्ञपन् । भूण् अवकल्कने । अवकल्कनं मिश्रीकरणम् । दध्ना ओदनं भावयति । अन्ये त्ववकल्कने नेच्छन्ति तन्मते साधु समयं भावयति विचारयतीत्यर्थः । भावयेत् । भावयतु । अभावयत् । भावयाञ्चकार । भावयाम्बभूव । भावयामास । भाव्यात् । भावयिता । भावयिष्यति । अभावयिष्यत् अबीभवत् । लिगुण् चित्रीकरणे । लिङ्गयति । चर्चण् अध्ययने । चर्चयति । अचचर्चत् । अञ्चण् विशेषणे । विशेषणमतिशयः । अञ्चयति मुचण् प्रमोचने । अर्जण् प्रतियत्ने । भजण् विश्राणने । चट स्फुटण् भेदे । चाटयति । उच्चाटयति । स्फोटयति । आस्फोटया-

ञ्चकार। णिचोऽनित्यत्वात् चटति, स्फोटति। घटण् संघाते। अर्था-न्तरे घटिष् चेष्टायाम्, अयमेवार्थान्तरे घटादौ बोध्य इत्यर्थः।

## घटादेर्ह्रस्वो दीर्घस्तु वा ञिणम्परे। ४। २। २४।

घटादीनां धातूनां णौ परे ह्रस्वो भवति। ञिणम्परे तु णौ वा दीर्घः। घटयति। घटयेत्। घटयतु। अघटयत्। घटयाञ्चकार। घटयाम्बभूव। घटयामास। अजीघटत् अजीघटताम् अजीघटन्। हन्त्यर्थाश्च ये धातवोऽन्यत्र पठिता हिंसार्थास्तेषामपि चुरादौ पाठो बोध्यः। यतण् निकारोपस्कारयोः। यातयति शत्रून् चैत्रः। उपस्कारं यातयति दरिद्रः परस्य धनम्। अयीयतत्। निरश्च प्रतिदाने निःपूर्वो यत्धातुश्चुरादौ ज्ञातव्य, स च प्रतिदानेऽर्थे। निर्यातयति ऋणम्। शब्दण् उपसर्गाद् भाषाविष्कारयोः। शब्दयति। अशशब्दत्। ष्वदण् आस्वादने। स्वादयति। असिष्वदत्। मुदण् संसर्गे। मोदयति सक्तून् सर्पिषा संयोजयतीत्यर्थ। ज्रमुण् नाशने। अमण् रोगे। चरण् असंशये। पूरण् आप्यायने। दलण् विदारणे। पश पषण् बन्धने। पुषण् धारणे। घुषृण् विशब्दने। विशब्दन विशिष्टशब्दकरणं नानाशब्दनं वा। घोषयति। अजूघुषत्। ऋदित्करणात् अनित्यो णिच् चुरादीनामिति ज्ञापितं तेनाङि अघुषत् अघुषताम् अघुषन्। अर्थान्तरे तु घुषृ शब्दे घोषति चैत्रः शब्दं करोतीत्यर्थः। आङ परस्तु घुषृण् क्रन्दार्थे ज्ञेयः, आघोषयति क्रन्दते इत्यर्थः। भूष तसुण् अलङ्कारे। भूषयति।

तंमयति कन्याम् । अवतंसयति । उत्तंसयति । अततंसत् । जसण् ताडने । जासयति । अजीजसत् । त्रसण् वारणे । त्रासयति मृगान् व्याध । अतित्रसत् । वमण् स्नेहच्छेदावहरणेषु । वासयति । अवीवमत् । ध्रसण् उत्क्षेपे । ग्रसण् ग्रहणे । लसण् शिल्पयोगे । अर्हण् पूजायाम् । अर्हयति । आर्हयत् । अर्हयाञ्चकार, अर्हयाम्बभूव, अर्हयामास । अर्ह्यात् । अर्हयिता । अर्हयिष्यति। आर्हयिष्यत् । आर्जिहत् । मोक्षण् असने । लोकृ तर्क रघु लघु लोचृ विच्छ अञ्जु तुञ्जु पिञ्जु लञ्जु लुञ्जु भञ्जु पट पुट लुट घट घट्ट वृत पुथ नद वृध गुप धूप कुप चीब दशु कुशु त्रसु पिसु कुसु दसु वर्ह वृहु वल्ह अहु वहु महुण् भामार्थाः । लोकयति । ऋदित्त्वादुपान्त्यह्रस्वाभावे अलुलोकत् । लोचयति । अलुलोचत् । अञ्जयति । आञ्जिजत् । तुञ्जयति । अतुतुञ्जत् । लञ्जयति । अललञ्जत् । त्रंसयति ।अतत्रंसत् ।

**इति परस्मैपदं समाप्तम् ।**

---

## अथात्मनेपदम्—

युणि जुगुप्सायाम् । यावयते । यावयेत । यावयताम् । अयावयत । यावयाञ्चक्रे । यावयिषीष्ट। यावयितासे ।यावयिष्यते। अयावयिष्यत । अद्यतन्यां णौ कृतस्य स्थानिवद्भवनाद् ‘ यु ’ इत्यस्य द्वित्वे ‘ असमानलोपे सन्वल्लघुनि डे ’ इत्यनेन सनीव कार्ये कृते अस्य धातोः सनि तु ‘ ओर्जान्तस्थापवर्गेऽवर्णे ’ इति

पूर्वस्योकारस्येत्वमिति अयियवत् । गॄणि विज्ञाने । गारयते । वञ्चिण् प्रलम्भने । प्रलम्भनं मिथ्याफलाख्यानम् । वञ्चयते । अवञ्चयत । वञ्चयाञ्चक्रे । वञ्चयाम्बभूव । वञ्चयामास । वञ्चयिषीष्ट । वञ्चयितासे । वञ्चयिष्यते । अवञ्चयिष्यत । अववञ्चत अववञ्चेताम् अववञ्चन्त । इदित्वादेव णिगन्तादप्यात्मनेपदे सिद्धे ' प्रलम्भे गृधिवञ्चे: ' इत्यनेनात्मनेपदविधानं णिगन्तादफलवति कर्तर्यपि आत्मनेपदविधानार्थम् । मदिण् तृप्तियोगे । मादयते । मादयताम् । मादयाञ्चक्रे । मादयिष्यते । अमीमदत अमीमदेताम् । विदिण् चेतनाख्याननिवासेषु । वेदयते । वेदयेत । वेदयाञ्चक्रे । वेदयिष्यते । अवीविदत अवीविदेताम् अवीविदन्त । मनिण् स्तम्भे । स्तम्भो गर्व: । मानयते गर्वं करोतीत्यर्थ: । मानयाञ्चक्रे । मानयाम्बभूव । मानयामास । अमीमनत । बलि भलिण् आभण्डने । आभण्डनं निरूपणम् । बालयते भालयते रूपं निरूपयतीत्यर्थ । भालयाञ्चक्रे । भालयामास । अबीभलत । दिविण् परिकूजने । देवयते । देवयताम् । अदेवयत । देवयाञ्चक्रे । अदीदिवत । लक्षिण् आलोचने । लक्षयते । अलक्षयत । लक्षयाञ्चक्रे । अललक्षत । कूटिण् अप्रमादे । शठिण् श्लाघायाम् । कूणिण् संकोचने । तूणिण् पूरणे । भ्रूणिण् आशायाम् । चितिण् संवेदने । वस्ति गन्धिण् अर्दने । शमिण् आलोचने । ' अमोऽकम्यमिचम: ' इत्यनेन ह्रस्वे प्राप्ते ' शमोऽदर्शने ' इत्यनेनादर्शने एव णौ परे शमो ह्रस्वत्वकरणात् शामयते । निशामयते । अशामयत । शामयाञ्चक्रे । अशीशमत ।

गूरिण् उद्यमे । गूरयते । अजूगुरत । ललिण ईप्सायाम् । लालयते । अलीललत । दंशिण् दशने । यक्षिण् पूजायाम् । यक्षयते । अययक्षत ।

इत्यात्मनेपदं समाप्तम् ॥

---

अथ अदन्ता धातवः—

अङ्कण् लक्षणे । अङ्कयति । आञ्चिकत् । सुख दुःखण् तन्क्रियायाम् ।

अतः । ४ । ३ । ८२ ।

अदन्ताद् धातोर्विहितेऽशिति प्रत्यये परे धातोरकारस्य लुग् भवति । सुखयति । नन्वत्र अकारलुकि गुणः कथं न भवतीति चेत्, स्थानिवद्भावात् । सुखयेत् । असुखयत् । सुखयाञ्चकार । असुसुखत् समानलोपित्वात् सन्वद्भावदीर्घत्वयोरभावः । अङ्कादीनामदन्तेषु पाठः पूर्वाचार्यानुरोधादेव, णिजभावेऽनेकस्वरत्वेन यङ्प्रत्ययाभावार्थ इत्यन्ये । केचित्तु एवंविधानामदन्तत्वविधानसामर्थ्यादेवाल्लोपाभावं मन्वाना ञिणति परे वृद्धौ प्वागमे च अङ्कापयति इत्यादीन्युदाहरन्ति । एवं सुखापयति, दुःखापयति, वण्टापयति, कथापयति, अर्थापयते, सूत्रापयते, गर्वापयते इत्यादीन्यपीच्छन्ति । रचण् प्रतियत्ने । रचयति । रचयाञ्चकार । अरचयत् । अररचत् । सूचण् पैशून्ये । भाजण् पृथक्कर्मणि । सभाजण् प्रीतिसेवनयोः । कूटण् दाहे । पट वटण ग्रन्थे । खेटण् भक्षणे । खोटण् क्षेपे ।

दण्डण् दण्डनिपातने । गणण् सङ्ख्याने । गणयति । गणयेत् । गणयतु । अगणयत् । गणयाञ्चकार । गणयिता । गणयिष्यति । अद्यतन्या ङ कृते

**ई च गणः । ४ । १ । ६७ ।**

गणेः ङपरे णौ द्वित्वे पूर्वस्य ईरश्च भवतः । अजीगणत् अजीगणताम् अजीगणन् । अजगणत् अजगणताम् अजगणन् । अदन्तत्वं सुखादीनां णिज्योगे एवातोऽनित्यत्वेन णिजोऽभावे जगाण जगणतु जगणु । आनङ्क आनङ्कतु आनङ्कु इत्यादीन्येव, नात्राम् । पतण् गतौ वा । वाशब्दो णिजदन्तत्वयोर्युगपद्विकल्पार्थ । वातण् गतिसुखसेवनयो । कथण् वाक्यप्रबन्धे । कथयति । अचकथत् । छेदण् द्वैधीकरणे । गदण् गर्जे । अन्धण् दृष्ट्युपघाते । स्तनण् गर्जे । ध्वनण् शब्दे । स्तेनण् चौर्ये । ऊनण् परिहाणे । ऊनयति । औनिनत् औनिनताम् औनिनन् । मा भवान् ऊनिनत् । रूपण् रूपक्रियायाम् । भामण क्रोधे । गोमण् उपलेपने । सामण् सान्त्वने । स्तोमण् श्लाघायाम् । व्ययण् वित्तसमुत्सर्गे । सूत्रण् विमोचने । सूत्रयति । असुसूत्रत् । मूत्रण् प्रस्रवणे । मूत्रयति । अमुमूत्रत् । पार तीरण् कर्मसमाप्तौ । पारयति । पारयाञ्चकार । अपपारत् । तीरयति । तीरयाञ्चकार । अतितीरत् । चित्रण् चित्रक्रियाकदाचिद्दृष्ट्यो । वरण ईप्सायाम् । शारण् दौर्बल्ये । कुमारण् क्रीडायाम् । कलण सङ्ख्यानगत्योः । शीलण् उपधारणे । वेल कालण उपदेशे । पल्यूलण् लवनपवनयो । गवेषण मार्गणे ।

मृषण् क्षान्तौ । रसण् आस्वादस्नेहनयोः । वासण् उपसेवायाम् । निवासण आच्छादने । चहण् कल्कने । महण पूजायाम् । रहण् त्यागे । स्पृहण् ईप्सायाम् । रूक्षण पारुष्ये । गुरूपान्त्यत्वेन गुणाभावे सिद्धेऽदन्तत्वमध्ये पाठ णिजभावेऽपि अदन्तत्वस्याप्नार्थस्तेनानेकस्वरत्वाद यङ् न भवति ।

इति परस्मैपदं समाप्तम् ।

---

अथादन्तेष्वात्मनेपदम् ।

मृगणि अन्वेषणे । मृगयते । अममृगत । अर्थणि उपयाचने । पदणि गतौ । संग्रामणि युद्धे । सग्रामयते । शूर वीरणि विक्रान्तौ । सत्रणि संदानक्रियायाम् । स्थूलणि परिबृंहणे । गर्वणि माने । गृहणि ग्रहणे । कुहणि विस्मापने । कुहयते । अचुकुहत । इत्यात्मनेपदम्, इत्यदन्ता धातव समाप्ता ।

अथ वृत युजादिः । युजण् सपर्चने—

युजादेर्नवा । ३ । ४ । १८ ।

एभ्यो धातुभ्यो णिज् वा भवति । योजयति । अयोजयत् । योजयाञ्चकार । योजयिता । अयूयुजत् । पक्षे योजति । योजेत् । योजतु । अयुजत् । युयुज । युज्यात् । योजिता । योजिष्यति । अयोजीत् । लीण् द्रवीकरणे—

लियो नोऽन्तः स्नेहद्रवे । ४ । २ । १९ ।

लीधातो स्नेहद्रवे गम्यमाने णौ परे नोऽन्तो वा भवति। घृतं विलीनयति। पक्षे वृद्धौ विलाययति। 'लीङ्लिनोर्वा' इत्यनेनात्त्वं केचिदिच्छन्ति तन्मते आत्त्वे कृते

**लो लः । ४ । २ । १६ ।**

लारूपस्य धातोः णौ परे स्नेहद्रवे गम्यमाने लोऽन्तो वा भवति। विलालयति पक्षे विलापयति इत्यादीनि भवन्ति। विलीनयेत्। विलाययेत्। विलीनयाञ्चकार। विलाययाञ्चकार। व्यलीलिनत्, व्यलीलयत्, व्यलीललत्, व्यलीलपत्। प्रीगृण् तर्पणे। धूगृण कम्पने। गित्त्वमुभयपदार्थम्।

**धूग्प्रीगोर्नः । ४ । २ । १८ ।**

अनयोर्णौ परे नोऽन्तो भवति। धूनयति। धूनयते। प्रीणयति। प्रीणयते। धूनयाञ्चकार। प्रीणयाञ्चकार। अदूधुनत्। अपिप्रिणत्। वृगण् आवरणे। वारयति। जॄग् वयोहानौ। जारयति। चीक शीकण आमर्षणे। मार्गण् अन्वेषणे। मार्गयति। मार्गयाञ्चकार। पृचण सम्पर्चने। रिचण् वियोजने च। रेचयति। वचण् भाषणे। वाचयति। अर्चिण् पूजायाम्। अर्चयति, पक्षे इदित्त्वादात्मनेपदे शवि अर्चते। वृजैण् वर्जने। मृजौण शौचालङ्कारयोः। 'मृजोऽस्य वृद्धौ' इति मार्जयति। मार्जयेत्। अमार्जयत्। मार्जयाञ्चकार। अमीमृजत्, अममार्जत्। णिजभावे मार्जति। मार्जेत्। अमार्क्षीत्, अमार्जीत्। कठुण शोके। कण्ठयति। उत्कण्ठयति। उदचकण्ठत्। कण्ठति। अकण्ठीत्। क्रथ अर्दिण्

हिंसायाम् । वदिण् भाषणे । वादयति । वदते । अवीवदत् । छदण् अपवारणे । आङ मदण् गतौ । आसादयति । पक्षे आसीदति । सदिता । असदीत् । मानण पूजायाम् । मानयति । मानति । अमीमनत् । तपिण् दाहे । तापयति, तपते । अतीतपत् । आप्लृण् लम्भने । आपयति । प्रापयति । आपिपत् । पक्षे आपति । आपिता । आपत् । ईरण क्षेपे । ईरयति । ऐरिरत् । ईरति । ईराञ्चकार । ऐरीत् । मृषिण तितिक्षायाम् । मर्षयति । अमीमृषत्, अममर्षत् । पक्षे इदित्त्वादात्मनेपदे मर्षते । अमर्षिष्ट । शिषण् असर्वोपयोगे । असर्वोपयोगोऽनुपयुक्तत्वम् । शेषयति । अशीशिषत् । विपूर्वस्तूत्कर्षे । विशेषयति । पक्षे शेषति । शेषिता । अशेषीत् । धृषण् प्रसहने । प्रसहनमभिभव । धर्षयति । अदीधृषत्, अदधर्षत् । पक्षे धर्षति । अधर्षीत् । हिंसुण हिंसायाम् । हिंसयति, हिंसति । अजिहिंसत् । गर्हण विनिन्दने । गर्हयति, गर्हति । अजगर्हत् । षहण् मर्षणे । साहयति । असीषहत् । सहति । सहिता । असाहीत, असहीत् । एतन्निदर्शनं बहुलं द्रष्टव्य तेनात्रापठिता अपि क्लविप्रभृतयो लौकिका', स्तम्भ्वादयश्च सौत्रा, चुलुम्पादयश्च वाक्यकरणीया धातव उदाहरणीया:—ढिवि ग्रहा विक्लवन्ते विच्छायीभवन्तीत्यर्थ । उपक्षपयति प्रावृड् आसन्नीभवतीत्यर्थ, उत्तभ्नातीत्यादय ।

इति युजादिगणः समाप्तः, तत्समाप्तौ समाप्तश्चुरादिगणोऽपि ।

# अथ णिगन्तप्रक्रिया ।

## प्रयोक्तृव्यापारे णिग् । ३ । ४ । २० ।

कुर्वन्तं यः प्रयुङ्क्ते तस्य व्यापारे वाच्ये धातोः णिग् वा भवति । चैत्रो भवति, भवन्त चैत्र मैत्रः प्रेरयतीति भावयति चैत्रं मैत्रः । गित्त्वादात्मनेपदमपि भावयते । भावयेत् । भावयेत । भावयतु । भावयताम् । अभावयत् । अभावयत । भावयाञ्चकार । भावयाञ्चक्रे । भावयाम्बभूव । भावयामास । भाव्यात् । भावयिषीष्ट । भावयिष्यति । भावयिष्यते । अद्यतन्यां तु णौ कृतस्य कार्यस्य स्थानिवद्भावाद् अबुभव्+इ+अ+त् इति स्थिते 'असमानलोपे' इत्यादिना सन्वत्कार्ये सनि च 'ओर्जान्तस्थापवर्गेऽवर्णे' इतीकारे तस्य च 'ल्घोर्दीर्घ–' इत्यादिना दीर्घे अबीभव्+इ+अ+त् णेर्लुकि अबीभवत् अबीभवताम् अबीभवन् । अबीभवत अबीभवेताम् अबीभवन्त । जु गतौ । जवन्तं प्रेरयति जावयति । जावयते । अजावयत् । अजावयत । जाव्यात् । जावयिषीष्ट । अजीजवत् अजीजवताम् अजीजवन् । अजीजवत अजीजवेताम् । युंक् मिश्रणे । यावयति । यावयेत् । यावयाञ्चकार । याव्यात् । यावयिषीष्ट । अयीयवत् । अयीयवत । रि गतौ । राययति । अरीरयत् । अरीरयत । श्रुट् श्रवणे । श्रावयति । श्रावयेत् ।

## श्रुस्रुद्रुप्रुप्लुच्योर्वा । ४ । १ । ६१ ।

एषा धातूना सनि परे द्वित्वे सति पूर्वस्योकारस्य इत्वं वा भवति, अवर्णान्तेऽन्तःस्थायां परे । ' असमानलोपेसन्वल्लघुनिङे ' इति अशुश्रवत्, अशिश्रवत् । अशुश्रवत, अशिश्रवत । स्रावयति । स्रावयते । स्रावयेत् । असुस्रवत्, असुस्रवत । असिस्रवत्, असिस्रवत । अदिद्रवत्, अदिद्रवत । अदुद्रवत्, अदुद्रवत । अपिप्रवत्, अपुप्रवत् । अपिप्लवत्, अपुप्लवत् । च्यावयति । अचिच्यवत्, अचुच्यवत् ।

**ञ्णिति घात् । ४ । ३ । १०० ।**

ञिति णिति च प्रत्यये परे हन्तेर्घातादेशो भवति । घ्नन्तं प्रयुङ्क्ते घातयति, घातयते । घात्यात् । घातयिषीष्ट । अजीघतत्, अजीघतत ।

**शदेरगतौ शात् । ४ । २ । २३ ।**

अगत्यर्थे वर्तमानस्य शदिधातोः शातादेशो भवति, णौ परे । शातयति । अशीशतत् । शात्यात् । ष्ठां गतौ । स्थापयति । स्थापयते । स्थापयेत् । अस्थापयत् ।

**तिष्ठतेः । ४ । २ । ३९ ।**

स्थाधातोरुपान्त्यस्य ङपरे णौ इर्भवति । अतिष्ठिपत् । स्थाप्यात् । घ्रा घ्रापयति । घ्रापयेत् । घ्रापयेत ।

**जिघ्रतेरिः । ४ । २ । ३८ ।**

घ्राधातोरुपान्त्यस्य ङपरे णौ इर्वा भवति । अजिघ्रिपत्, अजिघ्रपत् ।

**ऊद् दुषो णौ ।४।२।४०।**

दुष्धातोरुपान्त्यस्य णौ परे ऊद् भवति । दूषयति । दूषयते । अदूदुषत् । ङे न ह्रस्व इत्यन्ये अदुदूषत् । दूष्यात् ।

**चित्ते वा ।४।२।४१।**

चित्तकर्तृकस्य दुष्धातोरुपान्त्यस्य णौ वा ऊद् भवति । चित्तं दूषयति, दोषयति वा ।

**णौ क्रीजीङः ।४।२।१०।**

एषां धातूना णौ परे आद् भवति । क्रापयति । अचिक्रपत् । जापयति । अजीजपत् । अध्यापयति । अध्यापयते । अध्यापयताम् । अध्यापिपत् ।

**सिध्यतेरज्ञाने ।४।२।११।**

अज्ञानार्थे वर्तमानस्य सिध्यते णौ आद् भवति । मन्त्रं साधयति । असीषधत् । अज्ञानादन्यत्र तप तापस सेधयति ।

**चिस्फुरोर्नवा ।४।२।१२।**

अनयोर्णौ आत्त्व वा भवति । चापयति, चाययति । अचीचपत्, अचीचयत् । स्फारयति, स्फोरयति । अपिस्फरत्, अपुस्फुरत् ।

**वियः प्रजने ।४।२।१३।**

गर्भाधानार्थे वर्तमानस्य वियो णौ आत्त्व वा भवति । पुरो वातो गाः प्रवापयति, प्रवाययति । प्रावीवपत्, प्रावीवयत् ।

**रुहः पः ।४।२।१४।**

रुहो णौ पो वा भवति । रोपयति, रोहयति । अरूरुपत्, अरूरुहत् ।

**पातेः । ४ । २ । १७ ।**

पाधातोर्णौ लोऽन्तो भवति । पालयति । अपीपलत् ।

**वो विधूनने जः । ४ । २ । १९ ।**

विधूननार्थे वर्तमानस्य वाधातो णौ जोऽन्तो भवति । पक्षेणोपवाजयति । उपावीवजत् ।

**पाशाच्छासावेव्याह्वो यः । ४ । २ । २० ।**

एषा णौ परे योऽन्तो भवति । पाययति ।

**ङे पिबः पीप्य् । ४ । १ । ३३ ।**

ण्यन्तस्य पाधातो ङे परे पीप्यादेशो भवति, न च द्वि० । अपीप्यत् । शाययति । अशीशयत् । छाययति । अचिच्छयत् । साययति । असीषयत् । वाययति । अवीवयत् । व्याययति । अविव्ययत् । ह्वाययति ।

**णौ ङसनि । ४ । १ । ८८ ।**

ह्वेग्धातो. ङपरे सन्परे च णौ सस्वरान्तस्था य। य्वृद् भवति । 'भ्राजभास–' इत्यादिना वा ह्रस्वे अजुहावत्, अजूहवत् ।

**स्फाय स्फाव् । ४ । २ । २२ ।**

णौ स्फाय स्फावादेशो भवति । स्फावयति । अपिस्फवत् ।

**घटादेर्ह्रस्वो दीर्घस्तु वा ञिणम्परे । ४ । २ । २४ ।**

घटादीना णौ ह्रस्वो भवति, ञिणम्परे तु वा दीर्घः। घटयति। अजीघटत्। ञिपरे अघाटि, अघटि। घाटं घाटम्, घटं घटम्। व्यथयति। अविव्यथत्। अव्याथि, अव्यथि।

**कगेवनूजनैजृष्क्नसञ्जः। ४। २। २५।**

एषां णौ ह्रस्वः, ञिणम्परे तु वा दीर्घो भवति। कगयति। अचीकगत्। अकागि, अकगि। कागं कागम्, कगं कगम्। वनयति। अवीवनत्। अवानि, अवनि। जनयति। अजीजनत्। अजानि, अजनि। जानं जानम्, जनं जनम्।

**अमोऽकम्यमिचमः। ४। २। २६।**

अमन्तस्य धातोः णौ परे ह्रस्वो भवति, ञिणम्परे तु वा दीर्घः, न तु कम्यमिचमीनाम्। रमयति। अरीरमत्। अरामि, अरमि। कम्यमिचमीनां वर्जनात् कामयते। आमयति। चामयति, आचामयति। अचामि। चामं चामम्।

**पर्यपात् स्खदः। ४। २। २७।**

आभ्यामेव परस्य स्खदे णौ ह्रस्वो भवति, ञिणम्परे तु वा दीर्घः। परिस्खदयति। पर्यस्खादि, पर्यस्खदि। अपस्खदयति। एवमदर्शनार्थे शमः। शमयति। अशामि, अशमि। अशीशमत्। अपरिवेषणार्थस्य यमोऽपि। यमयति। अयीयमत्। अयामि, अयमि। मारणतोषणनिशानेष्वर्थेषु ज्ञाधातोरपि। ज्ञपयति। अजिज्ञपत्। ज्ञापं ज्ञापम्, ज्ञपं ज्ञपम्। अज्ञापि, अज्ञपि।

**चहणः शाठ्ये । ४ । २ । ३१ ।**

शाठ्यार्थे वर्तमानस्याम्य णिचि णौ ह्रस्वो भवति, ञिणम्परे तु वा दीर्घ । चहयति । अचहत् । अचाहि, अचहि । चाहं चाहम्, चहं चहम् ।

**ज्वल-ह्वल-ह्मल-ग्ला-स्ना-वनूवमनमोऽनुपसर्गस्य वा । ४ । २ । ३२ ।**

उपसर्गरहितानामेषां णौ ह्रस्वो वा भवति । ज्वलयति, ज्वालयति । ह्मलयति, ह्मालयति । क्नूयि शब्दे ।

**स्वोः प्वय्व्यञ्जने लुक् । ४ । ४ । १२१ ।**

पौ यवर्जव्यञ्जनादौ च परे य्वोर्लुग् भवति । क्नोपयति । अचुक्नुपत् । क्ष्मापयति । अचिक्ष्मपत् ।

**रभोऽपरोक्षाशवि । ४ । ४ । १०२ ।**

रभेः स्वरात् परो नोऽन्तो भवति, परोक्षाशव्वर्जे स्वरादौ प्रत्यये । रम्भयति । अररम्भत् । परोक्षाशवयोः आरेभे । आरभते ।

**लभः । ४ । ४ । १०३ ।**

लभ्धातोः स्वरात् परो नोऽन्तो भवति, परोक्षाशव्वर्जे स्वरादौ प्रत्यये । लम्भयति । अललम्भत् । हि गतिवृद्ध्योः । हाययति । अजीहयत् । स्मारयति । असिस्मरत् । दारयति । अदीदरत् ।

**णौ मृगरमणे । ४ । २ । ५१ ।**

रञ्जूधातोरुपान्त्यस्य नो णौ परे लुग् भवति, मृगाणां क्रीडायाम्। रजयति मृगं व्याधः। अरीरजत्।

**वा वेष्टचेष्टः। ४। १। ६६।**

अनयोर्धात्वोरसमानलोपे ङपरे णौ द्वित्वे सति पूर्वस्याद् वा भवति। अववेष्टत्, अविवेष्टत्। अचचेष्टत्, अचिचेष्टत्। स्वप्धातोः स्वापयति। अद्यतन्याम्—

**स्वपेर्यङ्ङे च। ४। १। ८०।**

स्वप्धातोर्यङि ङे किति च सस्वरान्तस्था य्वृद् भवति। असूषुपत्। सोषुप्यते। सुप्यते। श्वि-श्वाययति।

**श्वेर्वा। ४। १। ८९।**

श्विधातोः सस्वरान्तस्था ङपरे सन्परे च णौ विषये य्वृद् वा भवति। अशूशवत्, अशिश्वयत्। इंक् स्मरणे। इणक् गतौ—

**णावज्ञाने गमुः। ४। ४। २४।**

अज्ञानार्थे वर्तमानयोः इणिको णौ गम्वादेशो भवति। अधिगमयति प्रियम्। अध्यजीगमत्। गमयति। अजीगमत्। ज्ञाने तु प्रत्याययति शब्दोऽर्थम्।

**इति णिगन्तप्रक्रिया।**

---

# अथ सन्नन्तप्रक्रिया।

तुमर्हादिच्छायां सन्नतत्सन । ३ । ४ । २१ ।

यो धातुरिषेर्धातो कर्म तथेषिधातुना सह समानकर्तृकः स तुमार्ह, तस्माद् धातो इच्छार्थे सन् प्रत्ययो भवति । इच्छा-सन्नन्तात् पुनरिच्छायां सन् न भवति । भवितुमिच्छति भू+स इति स्थिते ।

सन्यङश्च । ४ । १ । ३ ।

सन्प्रत्ययान्तस्य यङ्प्रत्ययान्तस्य च धातोराद्य एकस्वरों-ऽशो द्विर्भवति । भू+भू+स पूर्वस्य भस्य बत्वे स षत्वे तिवि शवि च बुभूषति । बुभूषेत् । बुभूषतु । अबुभूषत् । बुभूषाञ्चकार । बुभूषाम्बभूव । बुभूषामास । बुभूष्यात । बुभूषिता । बुभूषिष्यति । अबुभूषिष्यत् । अबुभूषीत् अबुभषिष्टाम् अबुभूषिषु । कर्तुमिच्छति—

ऋवर्णश्र्युर्ण्णुगः कित । ४ । ४ । ५७ ।

ऋवर्णान्ताद् श्रेरुर्णोश्च धातोरेकस्वराद् विहितस्य कित आदिरिड् न भवति ।

स्वरहनगमोः सनि धुटि । ४ । १ । १०४ ।

स्वरान्तस्य हनो गमोश्च धुडादौ सनि परे दीर्घो भवति । पूर्वेण इनिषेधे 'ऋतां क्ङितीर्' इतीरादेशे द्वित्वे चत्वे षत्वे

चिकीर्षति चिकीर्षेत्। चिकीर्षतु। अचिकीर्षत्। चिकीर्षाञ्चकार। चिकीर्ष्यात्। चिकीर्षिता। चिकीर्षिष्यति। अचिकीर्षीत्। तरितुमिच्छति 'इवृध–' इत्यादिना वट् 'वृतो नवा' इत्यादिना वा दीर्घे। तितीर्षति, तितरीषति, तितरिषति। अतितीर्षीत्, अतितरिषीत्, अतितरीषीत्। ग्रहीतुमिच्छति।

**ग्रहगुहश्च सनः। ४। ४। ५९।**

आभ्यामुवर्णान्ताच्च विहितस्य सन आदिरिड् न भवति।

**रुदविदमुषग्रहस्वपप्रच्छ सन् च। ४। ३। ३२।**

एभ्य क्त्वा सन् च किद्वद् भवति। 'ग्रहव्रश्च–' इत्यादिना ग्वृति, द्वित्वे पूर्वस्यात्वे—

**सन्यस्य। ४। १। ५९।**

सनि परे द्वित्वे सति पूर्वस्याकारस्येकारो भवति। जिघृक्षति। जिघृक्षेत्। जिघृक्षतु। अजिघृक्षत्। जिघृक्षाञ्चकार। जिघृक्ष्यात्। जिघृक्षिता। जिघृक्षिष्यति। अजिघृक्षीत्। प्रष्टुमिच्छति।

**ऋस्मिपूङ्अशौकॄगॄदृधृप्रच्छः। ४। ४। ४८।**

एभ्यो धातुभ्यः सन आदिरिड् भवति। पिपृच्छिषति। पिपृच्छिषतु। अपिपृच्छिषत्। पिपृच्छिषाञ्चकार। पिपृच्छिष्यात्। पिपृच्छिषिता। पिपृच्छिषिष्यति। अपिपृच्छिषिष्यत्। अपिपृच्छिषीत्। रुरुदिषति। अरुरुदिषीत्। विविदिषति। अविविदिषीत्। मुमुषि-

षति । असुसुषिषीत्, कित्त्वान्न गुणः। स्वप्—सुषुप्सति। सुषुप्सेत्। सुषुप्सतु । असुषुप्सत् । सुषुप्साञ्चकार। सुषुप्स्यात् । सुषुप्सिता। सुषुप्सिष्यति। असुषुप्सीत्। ऋ—अरिरिषति। अरिरिषेत्। अरिरिषतु। आरिरिषत्। अरिरिषाञ्चकार। आरिरिषीत्। स्मि—सिस्मयिषते। असिस्मयिषत । सिस्मयिषाञ्चक्रे। असिस्मयिषिष्ट। पूङ्-पिपविषते। पिपविषेत। पिपविषताम् । अपिपविषत। अपिपविषिष्ट। अञ्ज्—अञ्जिजिषति। अञ्जिजिषाञ्चकार। आञ्जिजिषीत्। अशौ—अशिशिषते। आशिशिषत । अशिशिषाञ्चक्रे । आशिशिषिष्ट । कॄ—चिकरिषति, चिकरीषति। चिकरिषेत्, चिकरीषेत्। अचिकरीषत्। चिकरीषाञ्चकार। अचिकरीषीत्। गॄ—जिगरीषति, जिगरिषति, जिगलिषति। जिगरीषतु। अजिगरीषत्। जिगरीषाञ्चकार। अजिगरीषीत्। दृङ्—दिदरिषते। आदिदरिषते। आदिदरिषेत। आदिदरिषताम्। आदिदरिषत। आदिदरिषिषीष्ट। आदिदरिषिष्ट । धृङ्—दिधरिषते। दिधरिषेत। दिधरिषताम्। अदिधरिषत। दिधरिषिता। अदिधरिषिष्ट। दिव्—

**इवृधभ्रस्जदम्भश्रियूर्णुभरज्ञपिसनितनिपतिवृद्‌दरिद्रः सनः । ४ । ४ । ४७ ।**

इवन्ताद् ऋधादिभ्यः ॠदन्तेभ्यश्च धातुभ्यो दरिद्रश्च सन आदिरिड् वा भवति ।

**उपान्त्ये । ४ । ३ । ३४ ।**

नाम्युपान्त्यस्य धातोः परेऽनिट् सन् किद्वद् भवति ।

**अनुनासिके च च्छ्वः शूट् । ४ । १ । १०८ ।**

अनुनासिकादौ क्वौ धुडादौ च धातोः च्छ्वोर्यथासङ्ख्यं शूटौ भवत । दुद्यूषति । दुद्यूषेत् । दुद्यूषतु । अदुद्यूषत् । दुद्यूषाञ्चकार । दुद्यूषिता । दुद्यूषिष्यति । अदुद्यूषीत् । पक्षे दिदेविषति । दिदेविषेत् । दिदेविषतु । अदिदेविषत् । अदिदेविषीत् ।

**ऋध ईर्त् । ४ । १ । १७ ।**

ऋधूधातोः सादौ मनि परे ईर्तादेशो भवति । ईर्त्सति । ईर्त्सेत् । ईर्त्सतु । ऐर्त्सत् । ईर्त्साञ्चकार । ऐर्त्सीत् । इट्पक्षे अर्दिधिषति । आर्दिधिषीत् । भ्रस्ज्--बिभर्क्षति, बिभ्रक्षति, बिभर्जिषति, बिभ्रज्जिषति । दम्भ्--

**दम्भो धिप् धीप् । ४ । १ । १८ ।**

दम्भे. सादौ सनि धिप्--धीपौ भवतः । धिप्सति, धीप्सति । धिप्सेत्, धीप्सेत । धिप्सतु, धीप्सतु । अधिप्सत्, अधीप्सत् । अधिप्सीत्, अधीप्सीत् । पक्षे दिदम्भिषति । दिदम्भिषेत् । दिदम्भिषतु । अदिदम्भिषत् । अदिदम्भिषीत् । श्रि--शिश्रीषति--ते, शिश्रयिषति--ते । यु--युयूषति, यियविषति । ऊर्णु--प्रोर्णुनूषति--ते, प्रोर्णुनविषति--ते, प्रोर्णुनुविषति--ते । भृ--बुभूर्षति--ते, बिभरिषति--ते । अबुभूर्षीत्, अबिभरिषीत् । ज्ञप्--

**ज्ञप्यापो ज्ञीपीप् न च द्विः सि सनि । ४ । १ । १६ ।**

ज्ञप्-आप्धातो॰ सादौ सनि परे यथासङ्ख्यं ज्ञीपीपौ भवत., न च द्वित्वम् । ज्ञीप्सति--ते । ज्ञीप्सेत् । ज्ञीप्सतु । अज्ञीप्सत् ।

प्साञ्चकार । ज्ञीप्सिता । ज्ञीप्सिष्यति । अज्ञीप्सिष्यत् । अज्ञी-
ीत् । पक्षे जिज्ञपयिषति-ते । अजिज्ञपयिषीत् । आप्-ईप्सति ।

**सनि । ४ । २ । ६१ ।**

खन्सन्जनां धातूनां धुडादौ सनि आत्वं भवति । सिषासति-ते,
सनिषति-ते । चिखासति, चिखनिषति । जिजासति, जिजनिषति ।
तंसति, तितनिषति ।

**रभलभशकपतपदामिः । ४ । १ । २१ ।**

एषां स्वरस्य सादौ सनि परे इकारो भवति, न च द्विः ।
प्सते, आरिप्सते । आरिप्सेत । आरिप्सिष्ट । लिप्सते ।
लिप्सिष्ट । शिक्षति । अशिक्षीत् । पित्सति, पिपतिषति । अपित्सीत् ।
त्सते । अपित्सिष्ट । बुवूर्षति, विवरिषति, विवरीषति । तिती-
ति, तितरिषति, तितरीषति । दिदरिद्रासति, दिदरिद्रिषति ।

**शान्दान्मान्बधाद् निशानार्जवविचारवैरूप्ये**
**दीर्घश्चेतः । ३ । ४ । ७ ।**

निशानाद्यर्थेभ्य एभ्यो यथासङ्ख्यं स्वार्थे सन् भवति, द्वित्वे
वस्येतो दीर्घश्च । शीशांसति-ते । दीदांसति-ते । मीमांसते ।
भत्सते । अर्थान्तरे न भवति ।

**गुप्तिजो गर्हाक्षान्तौ सन् । ३ । ४ । ५ ।**

गुपेर्गर्हायां तिजः क्षान्तौ स्वार्थे सन् भवति । 'स्वार्थे' इति
ट् जुगुप्सते । तितिक्षते । अन्यत्र प्रायेण त्यादयो न भवन्ति
न सन्व्यवधानेऽप्यात्मनेपदम् । अर्थान्तरे णौ गोपयति । तेजनम् ।

**कितः संशयप्रतीकारे । ३ । ४ । ६ ।**

संशयप्रतीकारार्थात् कित स्वार्थे सन् भवति । विचिकित्सति मे मनः । व्याधिं चिकित्सति । अन्यत्र केतयति ।

**अव्याप्यस्य मुचेर्मोग् वा । ४ । १ । १९ ।**

अकर्मकस्य मुचेः सादौ सनि मोग् वा भवति, न च द्विः । मोक्षति–ते । मुमुक्षति–ते । व्याप्ये सनि तु मुमुक्षति वत्सम् ।

**मिमीमादामित् स्वरस्य । ४ । १ । २० ।**

एषां दासञ्ज्ञाना च स्वरस्य सादौ सनि परे इत् भवति, न च द्विः । मित्सति । मित्सते । मित्सते । दित्सति, दित्सते । धित्सति, धित्सते ।

**राधेर्वधे । ४ । १ । २२ ।**

हिंसार्थस्य राध्धातोः स्वरस्य इर्भवति सादौ सनि । प्रतिरित्सति । वध इति किम् । आरिरात्सति गुरुम् ।

**इति सन्नन्तप्रक्रिया समाप्ता ।**

---

# अथ यङन्तप्रक्रिया ।

व्यञ्जनादेरेकस्वराद् भृशाभीक्ष्ण्ये यङ् वा । ३ । ४ । ९ ।

गौणक्रियाणामधिश्रयणादीनां क्रियान्तराव्यवधानेन सम्पत्तिः फलातिरेको वा भृशत्वम्, प्रधानक्रियाया विक्लेदादेः क्रियान्तराव्यवधानेनाऽऽवृत्तिराभीक्ष्ण्यम् , तद्विशिष्टार्थे वर्तमानाद् धातोर्यङ् प्रत्ययो भवति । भृशं पुनः पुनर्वा पचति इति पच्+य 'सन्यङश्च' इति द्वित्वेऽनादेर्व्यञ्जनस्य लुकि प+पच्+य इति जाते

आगुणावन्यादेः । ४ । १ । ४८ ।

यङन्तस्य धातोर्द्वित्वे सति न्याद्यागमवर्जितस्य पूर्वस्य आकारगुणौ भवतः । पापच्यधातुत्वात् त्यादौ शवि अतो लोपे पापच्यते । पापच्येत । पापच्यताम् । अपापच्यत ।

योऽशिति । ४ । ३ । ८० ।

व्यञ्जनान्ताद् धातोः परस्य यकारस्य अशिति प्रत्यये लुग् भवति । पापचाञ्चक्रे । पापचिषीष्ट । पापचिता । पापचिष्यते । अपापचिष्यत । अपापचिष्ट । पुनः पुनरतिशयेन वा भवति बोभूयते । बोभूयेत । बोभूयताम् । अबोभूयत । बोभूयाञ्चक्रे । बोभूयाम्बभूव, बोभूयामास । बोभूयिषीष्ट । बोभूयितासे । बोभूयिष्यते । अबोभूयिष्यत । अबोभूयिष्ट ।

**न कवतेर्यङः । ४ । १ । ४७ ।**

यङन्तस्य कवतेर्द्वित्वे सति पूर्वस्य कस्य चकारो न भवति । 'दीर्घोऽकितः' इत्यादिना दीर्घे कोकूयते । कोकूयताम् । अकोकूयत । कोकूयाञ्चक्रे । कोकूयिषीष्ट । अकोकूयिष्ट । कवतेरिति वचनात् कौतिकुवत्योर्भवत्येव चोकूयते ।

**अट्यर्त्तिसूत्रिमूत्रिसूच्यशूर्णोः । ३ । ४ । १० ।**

एभ्यो भृशाभीक्ष्ण्ये यङ् भवति । अटाट्यते । अटाट्येत । अटाट्यताम् । आटाट्यत । अटाटाञ्चक्रे । अटाटिषीष्ट । अटाटिष्यते । आटाटिष्ट ।

**अयि रः । ४ । १ । ६ ।**

स्वरादेर्धातोर्द्वितीयांशस्यैकस्वरस्य संयोगादौ रो द्विर्न भवति, न तु रादनन्तरे य । और्णोनूयत । अनन्तरे ये अरार्यते । अरार्येत । अरार्यताम् । आरार्यत । अराराञ्चक्रे । अरारिषीष्ट । अरारिता । अरारिष्यते । आरारिष्यत । आरारिष्ट । सोसूत्र्यते । सोसूत्राञ्चक्रे । असोसूत्रिष्ट । मोमूत्र्यते । मोमूत्राञ्चक्रे । अमोमूत्रिष्ट । सोसूच्यते । सोसूचाञ्चक्रे । असोसूचिष्ट । अशाश्यते । अशाशाञ्चक्रे । आशाशिष्ट । प्रोर्णोनूयते । प्रोर्णोनूयेत । प्रोर्णोनूयताम् । प्रौर्णोनूयत । प्रोर्णोनूयाञ्चक्रे । प्रोर्णोनूयिषीष्ट । प्रोर्णोनूयिता । प्रोर्णोनूयिष्यते । प्रौर्णोनूयिष्यत । प्रौर्णोनूयिष्ट ।

**गत्यर्थात् कुटिले । ३ । ४ । ११ ।**

व्यञ्जनादेरेकस्वराद् गत्यर्थात् कुटिले एवार्थे धातोर्यङ् भवति। कुटिलं व्रजति वाव्रज्यते । वाव्रजाञ्चक्रे । वाव्रजिषीष्ट । अवाव्रजिष्यत । अवाव्रजिष्ट । अन्यत्र भृशं व्रजतीत्येव वाक्यम् ।

**गॄलुपसदचरजपजभदशदहो गर्हे । ३ । ४ । १२ ।**

एभ्यो धातुभ्यो गर्हेऽर्थे एव यङ् प्रत्ययो भवति । गर्हितं गिलति जेगिल्यते । जेगिलाञ्चक्रे । अजेगिलिष्ट । लोलुप्यते । लोलुपिष्यते । अलोलुपिष्ट । सासद्यते । असासद्यत । सासदाञ्चक्रे । सासदिष्यते । असासदिष्यत । असासदिष्ट ।

**चरफलाम् । ४ । १ । ५३ ।**

एषा यङन्तानां धातूना द्वित्वे सति पूर्वस्य मुरन्तो भवति । उकार उच्चारणार्थः ।

**ति चोपान्त्यातोऽनोदुः । ४ । १ । ५४ ।**

यङन्ताना चरफला तादौ च प्रत्यये परे उपान्त्यस्याकारस्य उर्भवति, तस्य च ओत्त्व न भवति । चञ्चूर्यते । चञ्चुराञ्चक्रे । अचञ्चुरिष्ट । पम्फुल्यते । पम्फुलाञ्चक्रे । अपम्फुलिष्ट ।

**जपजभदहदशभञ्जपशः । ४ । १ । ५२ ।**

एषां यङन्तानां धातूनां द्वित्वे सति पूर्वस्य मुरन्तो भवति । जञ्जप्यते । अजञ्जपिष्ट । दन्दह्यते । अदन्दहिष्ट । दन्दश्यते । अदन्दशिष्ट । बम्भज्यते । अबम्भजिष्ट । पम्पश्यते । अपम्पशिष्ट ।

**न गृणाशुभरुचः । ३ । ४ । १३ ।**

एभ्यो यङ् न भवति । निन्दितं गृणाति । भृशं शोभते । भृशं रोचते ।

**वञ्चस्रंसध्वंसभ्रंशकसपतपदस्कन्दोऽन्तो नीः । ४ । १ । ५० ।**

एषां यङन्तानां द्वित्वे सति पूर्वस्य नीरन्तो भवति । वनीवच्यते । अवनीवचिष्ट । सनीस्रस्यते । असनीस्रसिष्ट । दनीध्वस्यते । अदनीध्वसिष्ट । बनीभ्रश्यते । अबनीभ्रशिष्ट । चनीकस्यते । अचनीकसिष्ट । पनीपत्यते । अपनीपतिष्ट । पनीपद्यते । अपनीपदिष्ट । चनीस्कद्यते । अचनीस्कदिष्ट ।

**मुरतोऽनुनासिकस्य । ४ । १ । ५१ ।**

आत् परो योऽनुनासिकस्तदन्तस्य यङन्तस्य धातोर्द्वित्वे सति पूर्वस्य मुरन्तो भवति । बम्भण्यते । चङ्क्रम्यते । नंनम्यते । यंयम्यते । रंरण्यते । चङ्कण्यते । अत इति किम् तेतिम्यते । अनुनासिकस्येति किम् । पापच्यते ।

**ऋमतां रीः । ४ । १ । ५५ ।**

ऋमतां यङन्तां धातूनां द्वित्वे सति पूर्वस्य रीरन्तो भवति । नरीनृत्यते । चरीकृत्यते । वरीवृश्च्यते । जरीगृह्यते । परीपृच्छ्यते । चलीक्लृप्यते ।

**वशेरयङि । ४ । १ । ८३ ।**

वश्धातोः यङि परे य्वृद् न भवति । वावश्यते । वावश्यताम् । अवावशिष्ट ।

**वा परोक्षायङि । ४ । १ । ९० ।**

श्विधातोः परोक्षायां यङि च वा य्वृद् भवति । शोशूयते । शोशूयाञ्चक्रे । अशोशूयिष्ट । पक्षे शेश्वीयते । अशेश्वीयिष्ट । स्मृ-सास्मर्यते । असास्मरिष्ट ।

**ऋतो रीः । ४ । ३ । १०९ ।**

ऋदन्तानां क्यादौ परे ऋत स्थाने रीर्भवति । चेक्रीयते । जेह्रीयते । वेव्रीयते ।

**ईर्व्यञ्जनेऽयपि । ४ । ३ । ९७ ।**

गापास्थासादामाहाकां धातूनां यपूवर्जे व्यञ्जनादौ क्ङित्यशिति परे ईर्भवति । जेगीयते । पेपीयते । तेष्ठीयते । सेषीयते । देदीयते । देधीयते । मेमीयते । जेहीयते ।

**घ्राध्मोर्यङि । ४ । ३ । ९८ ।**

अनयोर्यङि परे ईर्भवति । जेघ्रीयते । देध्मीयते । यङ्लुपि न ईर्भवति ।

**हनो घ्नीर्वधे । ४ । ३ । ९९ ।**

हिंसार्थस्य हन्धातोर्यङि घ्नीर्भवति । जेघ्नीयते । जेघ्नीयाञ्चक्रे । अजेघ्नीयिष्ट । स्वप्धातोर्यङि य्वृति सोसुप्यते । असोसुपिष्ट ।

**व्येस्यमोर्यङि । ४ । १ । ८९ ।**

व्येगुस्यमो: सस्वरान्तस्था यङि य्वृद् भवति । वेवीयते । वेवीयाञ्चक्रे । अवेवीयिष्ट । सेसिम्यते । असेसिमिष्ट ।

**द्वित्वे ह्वः । ४ । १ । ८७ ।**

ह्वेगूधातोः द्वित्वविषये य्वृद् भवति । जोहूयते । जोहूयाञ्चक्रे । अजोहूयिष्ट ।

**प्यायः पीः । ४ । १ । ९१ ।**

प्यायूधातोः परोक्षायङि पीर्भवति । पेपीयते । पेपीयाञ्चक्रे । अपेपीयिष्ट । 'चाय कीर्वक्तव्य:' चेकीयते । अचेकीयिष्ट । शीङ्धातोस्तु शयादेशो शाशय्यते । शाशयाञ्चक्रे । अशाशयिष्ट । सिचूधातोर्यङि षत्वं न भवति । सेसिच्यते । सेसिचाञ्चक्रे । असेसिचिष्ट ।

इति यङन्तप्रक्रिया समाप्ता ।

---

# अथ यङ्लुबन्तप्रक्रिया ।

## बहुलं लुप् । ३ । ४ । १४ ।

यङो लुब् बहुलं भवति । लुपि सत्यां तन्निमित्तकं कार्यमपि न भवति, तेन यङ्लुबन्तात् परस्मैपदं भवति । यङ्लुबन्तानां धातूनामदाद्यन्तर्गणत्वादौ पाठाद् विकरणप्रत्ययाभावः ।

## यङ्तुरुस्तोर्बहुलम् । ४ । २ । ६४ ।

यङ्लुबन्तात् तुरुस्तुभ्यश्च पर ईर्भवति व्यञ्जनादौ विति परे, स च परादि । बाहुलकात् क्वचिद् विकल्प, क्वचिदविकल्पः । बोभवीति, बोभोति बोभूत बोभुवति । बोभवीषि, बोभोषि बोभूथ. बोभूथ । बोभवीमि, बोभोमि बोभूव. बोभूमः । बोभूयात् बोभूयाताम् बोभूयु । बोभूयाः बोभूयातम् बोभूयात । बोभूयाम् बोभूयाव बोभूयाम । बोभवीतु, बोभोतु, बोभूतात् बोभूताम् बोभुवतु । बोभूहि, बोभूतात् बोभूतम् बोभूत । बोभवानि बोभवाव बोभवाम । अबोभवीत्, अबोभोत् अबोभूताम् अबोभवुः । अबोभवीः, अबोभोः अबोभूतम् अबोभत । अबोभवम् अबोभूव अबोभूम । बोभवाञ्चकार । बोभवाम्बभूव । बोभवामास । बोभूयात् । बोभविता । बोभविष्यति । अबोभविष्यत् । अबोभूवीत्, अबोभोत् । पापचीति, पापक्ति । पापचीषि, पापक्षि । पापच्यात् । पापचीतु,

पापक्तु । अपापचीत्, अपापक् । पापचाञ्चकार । पापच्यात् । पापचिता । पापचिष्यति । अपापचिष्यत् । अपापचीत् ।

**द्व्युक्तोपान्त्यस्य शिति स्वरे । ४ । ३ । १४ ।**

द्व्युक्तस्य धातोरुपान्त्यस्य नामिनो गुणो न भवति, स्वरादौ शिति परे । नेनिजीति, नेनेक्ति नेनिक्तः । नेनिजीषि, नेनेक्षि । नेनिज्यात् । नेनिजीतु, नेनेक्तु । अनेनिजीत्, अनेनेक् । अनेनिजी:, अनेनेः । नेनेजाञ्चकार । नेनिज्यात् । नेनेजिता । नेनेजिष्यति । अनेनेजिष्यत् । अनेनेजीत् । बोभुजीति, बोभोक्ति । बोभुज्यात् । बोभुजीतु, बोभोक्तु । अबोभुजीत्, अबोभोक् । बोभोजाञ्चकार । बोभुज्यात् । बोभोजिता । बोभोजिष्यति । अबोभोजिष्यत् । अबोभोजीत् । वद् व्यक्तायां वाचि । वावदीति, वावत्ति । वावद्यात् । वावदीतु, वावत्तु । अवावदीत्, अवावत् अवावत्ताम् अवावदुः ।

**सेः स्-द्-धां च रुर्वा । ४ । ३ । ७९ ।**

व्यञ्जनान्ताद् धातोः परस्य सेर्लुग् भवति, यथासम्भवं स्-द्-धां च रुर्वा भवति । अवावः, अवावत् । वावदाञ्चकार । वावद्यात् । वावदिता । वावदिष्यति । अवावदिष्यत् । अवावदीत् । घट चेष्टायाम् । जाघटीति, जाघट्टि । जाघट्यात् । जाघटीतु, जाघट्टु । अजाघटीत्, अजाघट् । जाघटाञ्चकार । जाघट्यात् । जाघटिता । जाघटिष्यति । अजाघटिष्यत् । अजाघटीत् । स्पर्ध संघर्षे । पास्पर्धीति,

पास्पर्द्धि पास्पर्द्धः पास्पर्धति। पास्पर्धीषि, पास्पर्त्सि। पास्पर्ध्यात्। पास्पर्धीतु, पास्पर्द्धु। हौ पास्पर्द्धि। अपास्पर्धीत्, अपास्पर्त् अपास्पर्द्धाम् अपास्पर्धुः। अपास्पर्धीः, अपास्पर्त्, अपास्पाः। पास्पर्धाञ्चकार। पास्पर्ध्यात्। पास्पर्धिता। पास्पर्धिष्यति। अपास्पर्धिष्यत्। अपास्पर्धीत्। गाधृ प्रशंसालिप्साग्रन्थेषु। जागाधीति, जागाद्धि। जागाधीषि, जागात्सि। जागाध्यात्। जागाधीतु, जागाद्धु। अजागाधीत्, अजागात्। नाथृ याञ्चायाम्। नानाथीति, नानात्ति। नानाथ्यात्। नानाथीतु, नानात्तु। अनानाथीत्, अनानात्। नानाथाञ्चकार। नानाथ्यात्। नानाथिष्यति। अनानाथिष्यत्। अनानाथीत्। दधि धारणे। दादधीति, दादद्धि। दादधीषि, दादत्सि। दादध्यात्। दादधीतु, दादद्धु। अदादधीत्, अदाधत्। अदादधः, अदाधत्। दादधाञ्चकार। दादध्यात्। अदादधीत्। मुदि हर्षे। मोमुदीति, मोमोत्ति। मोमुद्यात्। मोमुदीतु, मोमोत्तु। अमोमुदीत्, अमोमोत्। अमोमुदीः, अमोमोत्, अमोमोः। मोमोदाञ्चकार। मोमोदिता। मोमोदिष्यति। अमोमोदीत्। कुर्दि गुर्दि (खुर्दि) गुदि क्रीडायाम्। चोकूर्दीति, चोकूर्त्ति। चोकूर्द्यात्। चोकूर्दीतु, चोकोर्त्तु। चोकूर्द्धि। अचोकूर्दीत्। अचोकूः, अचोकूर्त्, अचोकूर्दीः। चोकूर्दाञ्चकार। चोकूर्दिता। अचोकूर्दिष्यत्। अचोकूर्दीत्। कृ—

**रिरौ च लुपि। ४। १। ५६।**

ऋमतां धातूनां यङो लुपि द्वित्वे सति पूर्वस्य रिरौ

रीश्चान्तो भवति । चरिकरीति, चर्करीति, चरीकरीति, चरिकर्ति, चर्कर्ति, चरीकर्ति । चरिकृतः, चर्कृतः, चरीकृतः । चरिक्रति, चर्क्रति, चरीक्रति । चरिकरीषि, चर्करीषि, चरीकरीषि। चरिकर्षि, चर्कर्षि, चरीकर्षि । चरिकृथ, चर्कृथः, चरीकृथः । चरिकृथ, चर्कृथ, चरीकृथ। चरिकरीमि, चर्करीमि, चरीकरीमि, चर्कर्मि, चरिकर्मि, चरीकर्मि । चरिकृव, चर्कृवः, चरीकृवः। चरिकृम, चर्कृम, चरीकृम । चरिकृयात्, चर्कृयात्, चरीकृयात् । चरिकरीतु, चर्करीतु, चरीकरीतु, चरिकर्तु, चर्कर्तु, चरीकर्तु। अचरिकरीत्, अचर्करीत्, अचरीकरीत्, अचर्क, अचरिक, अचरीकः। अचरिकरीः, अचर्करीः, अचरीकरीः, अचरिक, अचर्क, अचरीकः । चरिकराञ्चकार, चर्कराञ्चकार, चरीकराञ्चकार। चरिक्रियात्, चर्क्रियात्, चरीक्रियात् । चरिकरिता, चर्करिता, चरीकरिता। चरिकरिष्यति, चर्करिष्यति, चरीकरिष्यति । अचरिकरिष्यत्, अचर्करिष्यत्, अचरीकरिष्यत्। अचरिकारीत्, अचर्कारीत्, अचरीकारीत् । वृ वरणे । वरिवरीति, वर्वरीति, वरीवरीति, वरिवर्ति, वर्वर्ति, वरीवर्ति । वरिवृयात्, वर्वृयात्, वरीवृयात् । वरिवरीतु, वर्वरीतु. वरीवरीतु, वरिवर्तु, वर्वर्तु, वरीवर्तु । अवरिवरीत्, अवर्वरीत्, अवरीवरीत्, अवरिव, अवर्वः, अवरीव, । वरिवराञ्चकार । अवरिवारीत्, अवरीवारीत्, अवर्वारीत् । वृत्—वरिवृतीति, वर्वृतीति, वरीवृतीति, वरिवर्त्ति, वर्वर्त्ति, वरीवर्त्ति । वरिवृत्यात्, वर्वृत्यात्, वरीवृत्यात् । वरिवृतीतु, वर्वृतीतु, वरीवृतीतु, वरिवर्त्तु,

वर्वर्त्तु, वरीवर्त्तु । अवरिवृतीत, अवर्वृतीत्, अवरीवृतीत्, अवरिवर्त्, अवर्वर्त्, अवरीवर्त् । अवरिवृती, अवर्वृती, अवरीवृती, अवर्वर्त्, अवरिर्वर्त्, अवरीवर्त्, अवरिवः, अवर्व, अवरीव. । वरिवर्ताञ्चकार, वर्वर्ताञ्चकार, वरीवर्ताञ्चकार । वरिवृत्यात्, वर्वृत्यात्, वरीवृत्यात् । वरिवर्तिता, वर्वर्तिता, वरीवर्तिता । वरिवर्तिष्यति, वर्वर्तिष्यति, वरीवर्तिष्यति । अवरिवर्तिष्यत्, अवर्वर्तिष्यत्, अवरीवर्तिष्यत् । अवरिवर्तीत्, अवर्वर्तीत्, अवरीवर्तीत् । वञ्चु- वनीवञ्चीति 'वञ्चस्रंस-' इत्यादिना पूर्व नोऽन्त., वनीवङ्क्त । वनीवञ्चीषि, वनीवङ्क्षि । वनीवच्यात । वनीवञ्चीतु, वनीवङ्क्तु । वनीवग्धि । अवनीवञ्चीत्, अवनीवन् । वनीवञ्चाञ्चकार । वनीवच्यात् । वनीवञ्चिता । वनीवञ्चिष्यति । अवनीवञ्चीत् । गम्लृ- जङ्गमीति, जङ्गन्ति । जङ्गतः 'यमिरमि' इत्यादिना मो लुक् । जङ्गमति । जङ्गमीषि, जङ्गंसि जङ्गथः जङ्गथ । जङ्गमीमि, जङ्गन्मि जङ्गन्व जङ्गन्म । जङ्गम्यात् । जङ्गमीतु, जङ्गन्तु । जङ्गहि । अजङ्गमीत्, अजङ्गन् । जङ्गमाञ्चकार । जङ्गम्यात् । जङ्गमिता । अजङ्गमीत् । हन्—वधेऽर्थे घ्नीः जेघ्नेति, जेघ्नयीति । जेघ्नीयात् । जेघ्नेतु, जेघ्नयीतु । जेघ्नीहि । अजेघ्नयीत्, अजेघ्नेत् । जेघ्नयाञ्चकार । अजेघ्नायीत् । रथादन्यत्र गतौ जङ्घनीति, जङ्घन्ति जङ्घतः जङ्घ्नति । जङ्घनीषि, जङ्घंसि जङ्घथ जङ्घथ । जङ्घनीमि, जङ्घन्मि जङ्घन्वः जङ्घन्म । जङ्घन्यात् । जङ्घनीतु, जङ्घन्तु । हौ तु जहि ।

अजङ्घनीत्, अजङ्घन् अजङ्घताम् अजङ्घ्नुः । जङ्घनाञ्चकार । अजङ्घनीत् । ये तु 'यमिरमि—' इति लुगभावं क्ङिति च 'अहन्पञ्चमस्य' इति हन्तेरपि दीर्घत्वमिच्छन्ति तन्मते तसि जङ्घान्तः । जङ्घान्थः । हौ जङ्घांहि इत्याद्यपि भवति । आशिषि वध्यात् । अद्यतन्याम् अवधीत् प्रकृतिग्रहणे यङ्लुपोऽपि ग्रहणात् । चर भक्षणे चञ्चुरीति, चञ्चूर्ति चञ्चूर्त चञ्चुरति । चञ्चूर्यात् । चञ्चुरीतु, चञ्चूर्तु । चञ्चूर्हि । अचञ्चुरीत्, अचञ्चूः । चञ्चुराञ्चकार । चञ्चूर्यात् । अचञ्चुरीत् । स्कुदु—चोस्कुन्दीति, चोस्कुन्ति चोस्कुन्त. चोस्कुन्दति । चोस्कुन्द्यात् । चोस्कुन्दीतु, चोस्कुन्तु । चोस्कुन्द्धि । अचोस्कुन्दीत्, अचोस्कुन् अचोस्कुन्ताम् अचोस्कुन्दुः । अचोस्कुन्दीः, अचोस्कुन् । चोस्कुन्दाञ्चकार । चोस्कुन्दिता । अचोस्कुन्दीत् । खन् चङ्खन्ति, चङ्खनीति । चङ्खान 'आ. खनिसनिजन' इत्याः । चङ्खनति । चङ्खनीषि, चङ्खंसि चङ्खाथ चङ्खाथ । चङ्खनीमि, चङ्खन्मि चङ्खन्वः चङ्खन्म । 'ये नवा' चङ्खन्यात्, चङ्खायात् । चङ्खनीतु, चङ्खन्तु, चङ्खातात् चङ्खाताम् चङ्ख्नतु । चङ्खाहि । अचङ्खनीत्, अचङ्खन् अचङ्खाताम् अचङ्ख्नुः । चङ्खनाञ्चकार । चङ्खन्यात् । चङ्खनिता । चङ्खनिष्यति । अचङ्खनीत्, अचङ्खानीत् । यु—योयवीति, योयोति योयुतः योयुवति । केचित्तु औत्त्वमपीच्छन्ति योयौति । योयुयात् । योयवीतु, योयोतु । अयोयवीत्, अयोयोत् । योयवाञ्चकार । अयोयावीत् । णु

नोनवीति, नोनोति । अनोनवीत्, अनोनोत । अनोनावीत । हाक्– जहेति, जहाति ' न हाको लुपि ' इति पूर्वमात्त्वं न । जहीतः जहति । जहीयात् । जहेतु, जहातु । अजहेत्, अजहात् अजहीताम् अजहुः । जहाञ्चकार । जहीयात् । जहिता । जहिष्यति । अजहासीत् । दा–दादेति, दादाति दात्तः दादति । दादेषि, दादासि दात्थः । दाद्यात् । । दादेतु, दादातु, दात्तात् दात्ताम् । देहि, दात्तात् दात्तम् दात्त । अदादेत्, अदादात् अदात्ताम् अदादुः । दादाञ्चकार । दादेयात् । दादिता । दादिष्यति । अदादात् । ट्धे– दाधेति, दाधाति । दाध्यात् । दाधेतु, दाधातु । धेहि । अदाधेत्, अदाधात् अधात्ताम् अदाधुः । दाधाञ्चकार । दाधेयात् । अदाधात्, अदाधासीत् । दैव् शोधने दांव् लवने दादाति, दादेति । दादीयात् । दादेतु, दादातु । दादीहि । अदादेत्, अदादात् । अदादासीत् । स्वप्–यङ्लुप्यपि य्वृति सोषुपीति, सोषोप्ति सोषुप्तः सोषुपति । सोषुप्यात् । सोषुपीतु, सोषोप्तु । असोषुपीत्, असोषोप् । सोषुपाञ्चकार । सोषुप्यात् । सोषुपिता । सोषुपिष्यति । असोषुपिष्यत् । असोषोपीत् । केचिद् य्वृतं नेच्छन्ति तन्मते सास्वप्ति । सास्वप्यात् । सास्वप्तु, सास्वपीतु । असास्वप्, असास्वपीत् । सास्वपाञ्चकार । सासुप्यात् । सास्वपिता । असास्वापीत्, असास्वपीत् । कॄ विक्षेपे– चाकरीति, चाकर्ति चाकीर्तः चाकिरति । चाकीर्यात् । चाकरीतु, चाकर्तु, चाकीर्तात् । चाकीर्हि । अचाकरीत्, अचाकः

अचाकीर्ताम् अचाकरु: । चाकराञ्चकार । चाकीर्यात् । चाक-रिता, चाकरीता । चाकरिष्यति, चाकरीष्यति । अचाकरिष्यत्, अचाकरीष्यत् । अचाकारीन् । तॄ—तातरीति, तातर्ति तातीर्त: । तातीर्यात् । तातरीतु, तातर्तु । अतातरीत्, अतात: । तातराञ्च-कार । तातीर्यात् । तातरीता, तातरिता । तातरीष्यति, तातरि-ष्यति । अतातारीत् । ऋ— यङ्लुपि द्वित्वे पूर्वस्य ऋतोऽत्वे 'रिरौ च लुपि' इति रागमे अरृ इति रूपम्, रि री आगमे च अरिऋ, अरीऋ तत्र ' पूर्वस्यास्वे स्वरे ' इतीयादेशो अरियृ । अत्र केचि-दियादेशा नेच्छन्ति इति यत्वे अर्यृ इति रूपं भवति ततो विभक्ति । स्वमते तु अरृ—अरियृ—इत्येतयो: विभक्तौ रूपाणि लिख्यन्ते अररीति, अरर्ति अरृत: । अन्ति प्रत्यये अरृ+अन्ति इति स्थिते ' इवर्णादे: ' इति रत्वे ' रो रे लुक् ' इति रो लुकि पूर्वस्य दीर्घत्वे च आरति । अररीषि, अरर्षि अरृथ: अरृथ । अररीमि, अरर्मि अरृव: अरृम: । अरृयात् अरृयाताम् अरृयु: । अररीतु, अरर्तु, अरृतात् अरृताम् आरतु । अरृहि, अरृतात् अरृतम् अरृत । अरराणि अरराव अरराम । आररीत्, आर: आरृताम् आररु: । आररी:, आर: आरृतम् आरृत । आररम् आरृव आरृम । अरराञ्चकार, अरराम्बभूव, अररामास । आरियात् ' रि: शक्याशीर्ये ' इति रि: ' रो रे लुक् ' इति लुग्दीर्घौ च । अररिता । अररिष्यति । आररिष्यत् । आरारीत् आरारिष्टाम् आरारिषु: । आरारी: आरारिष्टम् आरा-

रिष्ट । आरारिषम् आरारिष्व आरारिष्म । अरियृ इत्यस्य रूपाणि– अरियरीति, अरियर्ति अरियृतः अरियूति। अरियृयात्। अरियरीतु, अरियर्तु । आरियरीत्, आरियः आरियृताम् आरियरुः । अरियराञ्चकार । अरियि्रयात् । अरियरिता । अरियरिष्यति । आरियरिष्यत् । आरियारीत् । गृह ग्रहणे । जरिगृहीति, जरीगृहीति, जर्गृहीति, जरिगर्ढि, जरीगर्ढि, जर्गर्ढि । जरिगृढः, जरीगृढः, जर्गृढः । जरिगृहति, जरीगृहति, जर्गृहति। जरिगृह्यात्, जरीगृह्यात्, जर्गृह्यात् । जरिगृहीतु, जरीगृहीतु, जर्गृहीतु, जरिगर्ढु, जरीगर्ढु, जर्गर्ढु । हौ जरिगृढि, जरीगृढि, जर्गृढि । अजरिगृहीत्, अजरीगृहीत्, अजर्गृहीत्, अजरिघर्ट्, अजरीघर्ट्, अजर्घर्ट् । जरिगर्हाञ्चकार । जर्गृह्यात्, जरिगृह्यात, जरीगृह्यात् । जरिगर्हिता, जरीगर्हिता, जर्गर्हिता । अजरिगर्हीत्, अजरीगर्हीत्, अजर्गर्हीत् । ग्रह् उपादाने इत्यस्यापि ग्वृद्भवनादेवमेव । गृधू अभिकाङ्क्षायाम् । जरिगृधीति, जरीगृधीति, जर्गृधीति, जरिगर्द्धि, जरीगर्द्धि, जर्गर्द्धि । जरिगृद्धः, जरीगृद्धः, जर्गृद्धः। जरिगृधति, जरीगृधति जर्गृधति । जरिगृध्यात्, जरीगृध्यात्, जर्गृध्यात् । जरिगृधीतु, जरीगृधीतु, जर्गृधीतु, जरिगर्द्धु, जरीगर्द्धु, जर्गर्द्धु । अजरिगृधीत्, अजरीगृधीत्, अजर्गृधीत्, अजरिघर्त्, अजरीघर्त्, अजर्घर्त् । अजरिघाः, अजरीघाः, अजर्घाः, अजरिघर्त् इत्यादि । जरिगर्धाञ्चकार, जरीगर्धाञ्चकार, जर्गर्धाञ्चकार । जरिगर्धिता, जरीगर्धिता, जर्गर्धिता । जरिगर्धि-

ष्यति, जरीगर्धिष्यति । अजरिगर्धिष्यत् , अजरीगर्धिष्यत् । अजरिगर्धीत्, अजरीगर्धीत्, अजर्गर्धीत् । प्रच्छ ज्ञीप्सायाम् । अत्रापि ग्रहधातोरिव

**लुप्यय्वृल्लेनत् । ७ । ४ । ११२ ।**

इत्यत्र य्वृद्वर्जनाद् यङ्लुपि य्वृद् भवति । परिपृच्छीति, परीपृच्छीति, पर्पृच्छीति । य्वृति द्वित्वे ' अनुनासिके ' इति च्छः शत्वे ' यजसृजमृज—' इति श षत्वे गुणे च परिपर्ष्टि, परीपर्ष्टि, पर्पर्ष्टि । परिपृष्टः, परीपृष्टः, पर्पृष्टः । परिपृच्छति, परीपृच्छति, पर्पृच्छति । परिपृच्छ्यात् । परिपृच्छीतु, परिपर्ष्टु । हौ परिपृड्ढि । अपरिपृच्छीत्, अपरिपर्ड् । परिपृच्छाञ्चकार । परिपृच्छिता । परिपृच्छिष्यति । अपरिपृच्छिष्यत् । अपरिपृच्छीत् । हय् गतौ । जाहयीति, जाहति जाहत. जाहयति । जाहय्यात् । जाहयीतु, जाहतु । जाहहि । अजाहयीत्, अजाहयत् । जाह्याञ्चकार । अजाहयीत् । हर्य गतिकान्त्यो । जाहर्यीति, जाहर्ति जाहर्तः जाहर्यति । अजाहर्यीत् ।

**मव्यविश्रिविज्वरित्वरेरुपान्त्येन । ४ । १ । १०९ ।**

एषां धातूनामनुनासिकादौ क्वौ धुडादौ च प्रत्यये परे वकारस्योपान्त्येन सहोट् भवति । ज्वर्-जाज्वरीति, जाजूर्ति आजूर्त जाज्वरति । जाजूर्यात् । जाज्वरीतु, जाजूर्तु । अजाज्वरीत् , अजाजूः । जाज्वराञ्चकार । जाज्वरिता । जाज्वरिष्यति । अजाज्वरीत् । त्वर्-तात्वरीति, तातूर्ति । अतात्वारीत , अतात्वरीत् । मव्-मामवीति,

मामोति मामूतः मामवति । मामवीमि, मामोमि मामूवः मामूमः । हौ मामूहि । अमामवीत् , अमामोत् । अमामावीत्, अमामवीत् । तूर्वी थूर्वी दूर्वी धूर्वी हिंसायाम् । तोतूर्वीति ।

राल्लुकः । ४ । १ । ११० ।

रकारात् परयोः च्छ्वोरनुनासिकादौ क्वौ धुडादौ च प्रत्यये परे लुग् भवति । तोतोर्ति तोतूर्तः तोतूर्वति । अतोतूर्वीत् , अतोतो. । एवं तोथूर्वीति, तोथोर्ति तोथूर्तः तोथूर्वति । दोदूर्वीति, दोदोर्ति । मूर्च्छ—मोमूर्च्छीति, मोमोर्ति मोमूर्तः । मोमूर्च्छीतु, मोमोर्तु । मोमूर्हि । अमोमूर्च्छीत् , अमोमोः । मोमूर्च्छाञ्चकार । अमोमूर्च्छीत् ।

इति यङ्लुबन्तप्रक्रिया समाप्ता ।



# अथ नामधातुप्रक्रिया ।

---

## द्वितीयायाः काम्यः । ३ । ४ । २२ ।

द्वितीयान्ताद् नाम्न इच्छार्थे काम्यः प्रत्ययो वा भवति । इदमिच्छतीति इदंकाम्यति । इदंकाम्येत् । इदंकाम्यतु । ऐदंकाम्यत् । इदंकाम्याञ्चकार । इदंकाम्य्यात् । इदंकाम्यिता अत्र 'योऽशिति' इति यस्य लुग् न धातोर्व्यञ्जनात् परस्य यस्याभावात् । इदंकाम्यिष्यति । ऐदंकाम्यिष्यत् । ऐदंकाम्यीत् । पुत्रमिच्छति पुत्रकाम्यति । अपुत्रकाम्यत् । पुत्रकाम्याञ्चकार । पुत्रकाम्यिता । अपुत्रकाम्यीत् । स्वः इच्छति स्वःकाम्यति । दिवमिच्छति द्युकाम्यति । अद्युकाम्यीत् । मामिच्छति मत्काम्यति । युष्मानिच्छति युष्मत्काम्यति । राजकाम्यति । धूःकाम्यति । अधूःकाम्यीत् । भवत्काम्यति । एककाम्यति । धनकाम्यति । स्वस्तिकाम्यति । हविष्काम्यति । सर्पिष्काम्यति । धनुष्काम्यति 'नामिनस्तयोः ष.' इति षः । तेजस्काम्यति । श्रेयस्काम्यति 'रोः काम्ये' इति सः ।

## अमाव्ययात् क्यन् च । ३ । ४ । २३ ।

मकारान्तं नामाव्ययं च वर्जित्वा द्वितीयान्ताद् नाम्न इच्छार्थे क्यन् काम्यश्च वा भवत. । पुत्रमिच्छति इति क्यनि—

**क्यनि । ४ । ३ । ११२ ।**

क्यनि परे अवर्णस्य ईकारो भवति । पुत्रीयति । पुत्रीयेत् । पुत्रीयतु । अपुत्रीयत् । पुत्रीयाञ्चकार । पुत्रीयिता । पुत्रीयिष्यति । अपुत्रीयिष्यत् । अपुत्रीयीत् । खट्वामिच्छति खट्वीयति । मालीयति । निधीयति 'दीर्घश्च्वि–' इति दीर्घः । पटूयति । दात्रीयति 'ऋतो री' इति री । पित्रीयति । मात्रीयति । स्वस्त्रीयति । रायमिच्छति रैयति । गामिच्छति गव्यति, नावमिच्छति नाव्यति 'य्यक्ये' इत्यवावौ । गार्ग्यमिच्छति गार्गीयति 'आपत्यस्य क्यच्व्योः' इति यस्य लुक् । राजीयति । अह इच्छति अहर्यति । यमिच्छति यद्यति । तद्यति । एतद्यति । अदस्यति । सर्पिष्यति । क्षुधार्तः सन्नशनमिच्छति अशनायति, तृषार्तः सन्नुदकमिच्छति उदन्यति, गृद्धः सन् धनमिच्छति धनायति एते त्रयः 'क्षुत्तृड्गर्धेऽशनायोदन्यधनायम्' इति निपात्यन्ते । अन्यत्र अशनीयति, उदकीयति, धनीयति । वृषमिच्छति वृषस्यति, अश्वमिच्छति अश्वस्यति 'वृषाश्वाद् मैथुने स्सोऽन्त' इति स्सोऽन्तः । वृषस्याश्वस्यशब्दौ मैथुनेच्छापर्यायौ मनुष्यादावपि प्रयुज्येते । लक्ष्मणं सा वृषस्यन्ती, सा तम् अश्वस्यति । मैथुनादन्यत्र वृषीयति, अश्वीयति । तृष्णायां 'अस् च लौल्ये' इति अस् सश्चान्तो भवति । लोलुपः सन् दधि इच्छति दध्यस्यति, दधिस्यति । एवं मध्वस्यति, मधुस्यति । मान्ताव्ययनिषेधात् इदमिच्छति, किमिच्छति, स्वस्तीच्छतीत्यादौ वाक्यमेव ।

## आधाराच्चोपमानादाचारे । ३ । ४ । २४ ।

मान्ताव्ययवर्जितादुपमानवाचिनो द्वितीयान्तादाधाराच्च नाम्न आचारार्थे क्यन् वा भवति । पुत्रमिवाचरति पुत्रीयति च्छात्रमुपाध्यायः । प्रासादे इवाचरति प्रासादीयति कुट्यां भिक्षुः ।

## कर्तुः क्विब् गल्भक्लीबहोडात्तु ङित् । ३ । ४ । २५ ।

कर्तुरुपमानवाचिनो नाम्न आचारार्थे क्विब् वा भवति, स च गल्भक्लीबहोडात् ङिद् भवति, तेनात्मनेपदम् । जिन इवाचरति जिनति । बुधति । अ इवाचरति अति अतः अन्ति । असि अथः अथ । आमि आवः आमः । एतु एताम् एयुः । एः एतम् एत । एयम् एव एम । अतु अतात् अताम् अन्तु । अ, अतात् अतम् अत । आनि आव आम । आत् आताम् आन् । आः आतम् आत । आम् आव आम । आ आतुः ओः । इथ । आथुः आ । आ एव एम । यात् यास्ताम् यासुः 'अतः' इत्यकारलोपः । इता इतारौ इतारः । इष्यति इष्यतः इष्यन्ति । इष्यत् इष्यताम् इष्यन् । इत् इष्टाम् इषुः । 'सर्वेभ्यो लोपः' इति न्यायाद्, अन्यथा वृद्धौ ऐष्यत् ऐष्यताम् ऐष्यन् । ऐत् ऐष्टाम् ऐषु । मालेवाचरति मालाति । मालायात् । मालातु । मालाहि । अमालात् । मालाञ्चकार । मालिता । मालिष्यति । अमालासीत् । कविरिवाचरति कवयति । कवयेत् । कवयतु ।

अकवयत् । कवयाञ्चकार । कवीयात् । कवयिता । अकवयिष्यत् ।
अकवयीत् । गल्भते । क्लीबते । होडते । पय इवाचरति

**सो वा लुक् च । ३ । ४ । २७ ।**

सकारान्तात् कर्तुरुपमानवाचिनो नाम्न आचारार्थे क्यङ् वा भवति, तद्योगे सो वा लुक् च । पयस्यते, पयायते । यशस्यते, यशायते । चन्द्रमस्यते, चन्द्रमायते ।

**क्यङ् । ३ । ४ । २६ ।**

कर्तुरुपमानवाचिन आचारार्थे क्यङ् वा भवति । हंस इवाचरति हंसायते ।

**ओजोऽप्सरसः । ३ । ४ । २८ ।**

आभ्यां कर्तुरुपमानाभ्यामाचारार्थे क्यङ् भवति वा, सश्च लुक् च । ओजस्वीवाचरति ओजायते । अप्सरायते ।

**च्व्यर्थे भृशादेः स्तोः । ३ । ४ । २९ ।**

कर्तुरुपमानाद् भृशादेर्नाम्नः च्व्यर्थे क्यङ् वा भवति । यथासम्भवं स्तोः लुक् च । अभूततद्भावश्च्व्यर्थः । अभृशो भृशो भवति भृशायते । उन्मनायते । अवेहत् वेहद् भवति वेहायते । कर्तुरित्येव अभृशं भृशं करोति । च्व्यर्थ इति किम् भृशो भवति ।

**डाच्-लोहितादिभ्यः षित् । ३ । ४ । ३० ।**

डाजन्तेभ्यो लोहितादिभ्यश्च कर्तुः च्व्यर्थे षित् क्यङ् भवति । पटपटायते, पटपटायति । लोहितायते, लोहितायति ।

कर्तुरित्येव अपटपटा पटपटा करोतीत्यत्र न भवति। च्व्यर्थ इत्येव। लोहितो भवति।

**कष्टकक्षकृच्छ्रसत्रगहनाय पापे क्रमणे । ३ । ४ । ३१ ।**

एभ्यः पापवृत्तिभ्यः चतुर्थ्यन्तेभ्यः क्रमणेऽर्थे क्यङ् वा भवति। कष्टाय क्रमते कष्टायते। एवं कक्षायते, कृच्छ्रायते, सत्रायते, गहनायते पापायोत्सहत इत्यर्थः।

**रोमन्थाद् व्याप्यादुच्चर्वणे । ३ । ४ । ३२ ।**

अभ्यवहृतं द्रव्यं रोमन्थ, उद्गीर्य चर्वणमुच्चर्वणम्। अस्मिन्नर्थे रोमन्थात् कर्मणः क्यङ् वा भवति। रोमन्थमुच्चर्वयति रोमन्थायते। उच्चर्वण इति किम्, कीटो रोमन्थं वर्तयति।

**फेनोष्मबाष्पधूमादुद्वमने । ३ । ४ । ३३ ।**

एभ्यः कर्मभ्य उद्वमनेऽर्थे क्यङ् वा भवति। फेनमुद्वमति फेनायते। ऊष्मायते। बाष्पायते। धूमायते।

**सुखादेरनुभवे । ३ । ४ । ३४ ।**

सुखादिभ्यः कर्मवाचिभ्योऽनुभवेऽर्थे क्यङ् वा भवति। सुखमनुभवति सुखायते। दुःखायते।

**शब्दादेः कृतौ वा । ३ । ४ । ३५ ।**

एभ्यः कर्मभ्यः कृतावर्थे क्यङ् वा भवति। शब्दं करोति शब्दायते। वैरायते। पक्षे णिच् शब्दयति। वैरयति।

**अङ्गाद् निरसने णिङ् । ३ । ४ । ३८ ।**

अङ्गवाचिनः कर्मणो निरसनेऽर्थे णिङ् वा भवति । हस्तौ निरस्यति हस्तयते ।

**पुच्छादुत्परिव्यसने । ३ । ४ । ३९ ।**

पुच्छात् कर्मण उदसने पर्यसने व्यसने असने चार्थे णिङ वा भवति । पुच्छमुदस्यति पर्यस्यति व्यस्यति उत्पुच्छयते । परिपुच्छयते । विपुच्छयते । पुच्छयते ।

**भाण्डात् समाचितौ । ३ । ४ । ४० ।**

भाण्डात् कर्मण· समाचितावर्थे णिङ् वा भवति । भाण्डं समाचिनोति सम्भाण्डयते । एवं परिभाण्डयते । ‘ परिधानार्जने चीवरादपि वक्तव्यः ’ चीवरं परिधत्ते परिचीवरयते । संचीवरयते ।

**तपसः क्यन् । ३ । ४ । ३६ ।**

अस्मात् कर्मणः कृतावर्थे क्यन् भवति । तपः करोति तपस्यति ।

**नमोवरिवश्चित्रङोऽर्चासेवाऽऽश्चर्ये । ३ । ४ । ३७ ।**

एभ्यः कर्मभ्यो यथासङ्ख्यमर्चादिषु क्यन् वा भवति । नमः अर्चां करोति नमस्यति । वरिवस्यति विजयधर्मसूरिं सिंह. । चित्रं करोति चित्रीयते ।

**क्षुत्तृड्गर्धेऽशनायोदन्यधनायम् । ४ । ३ । ११३ ।**

एष्वर्थेषु यथासङ्ख्यमेते क्यन्नन्ता निपात्यन्ते। अशनायति। उदन्यति। धनायति। क्षुधादाविति किम्। अशनीयति, उदकीयति, धनीयति दानाय।

**वृषाश्वाद् मैथुने स्सोऽन्तः। ४। ३। ११४।**

मैथुनार्थाभ्यामाभ्यां क्यनि स्सोऽन्तो भवति। वृषस्यति। अश्वस्यति।

**अस् च लौल्ये। ४। ३। ११५।**

लौल्ये गम्ये क्यनि परे नाम्नोऽस् सश्चान्तो भवति। लवणस्यति उष्ट्रः।

**णिज् बहुलं नाम्नः कृगादिषु। ३। ४। ४२।**

कृगादीनां धातूनामर्थे नाम्नो णिज् बहुलं भवति। मुण्डं करोति मुण्डयति। पटुमाचष्टे पटयति। कृतं गृह्णाति कृतयति। वस्त्रं समाच्छादयति संवस्त्रयति। लवणं करोति लवणयति व्यञ्जनम्। मिश्रं करोति मिश्रयति धान्यम्।

**व्रताद् भुजितन्निवृत्त्योश्च। ३। ४। ४३।**

शास्त्रविहितो नियमो व्रतम्। व्रतशब्दाद् भुज्यर्थे तन्निवृत्त्यर्थे च वर्तमानात् कृगादीनामर्थे णिज् बहुलं भवति। पयसो व्रतं करोति पयो व्रतयति पय एवाद्य मया भोक्तव्यं नान्यदिति व्रतं करोतीत्यर्थः। सावद्यान्नस्य व्रतं करोति सावद्यान्नं व्रतयति सावद्यान्नं मया न भोक्तव्यमित्यर्थः।

**सत्यार्थवेदस्याः । ३ । ४ । ४४ ।**

एषां णिच्संनियोगे आकारो भवति । सत्यमाचष्टे करोति वा सत्यापयति । अर्थापयति । वेदापयति ।

**श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतकलुक् । ३ । ४ । ४५ ।**

एषां णिच्संनियोगे यथासङ्ख्यमश्वादिशब्दस्य लुग् भवति । श्वेताश्वमाचष्टे करोति वा श्वेतयति । एवम् अश्वयति । गालोडयति । आह्वरयति । 'प्रियादिशब्दानां णौ प्राद्य आदेशा वक्तव्याः', प्रियमाचष्टे प्रापयति, अपिप्रपत् । स्थिरमाचष्टे स्थापयति, अतिष्ठपत् । स्फिरमाचष्टे स्फापयति, अपिस्फपत् नैकस्वराणामिति निषेधाद् न समानलोपित्वम् । उरुं वरयति । गुरुं गरयति, अजगरत् । बहुलं बंहयति, अबबंहत् । तृप्रं त्रपयति, अतत्रपत् । दीर्घमाचष्टे द्राघयति, अदद्रघत् । वृद्धं वर्षयति, अववर्षत् । वृन्दारकं वृन्दयति, अववृन्दत् । बाढमाचष्टे साधयति, अससाधत् । अन्तिकं नेदयति, अनिनेदत् । वृद्धं ज्ययति, अजिज्यत् । प्रशस्यं श्रयति अशिश्रत्—एकस्वरत्वान्न लुगिति न समानलोपित्वम् । एवम् अल्पं कनयति, अल्पयति । युवानमाचष्टे कनयति, अचीकनत् वा यवयति, अययवत् । पृथुं प्रथयति, अपप्रथत् । मृदुं म्रदयति, अमम्रदत् । भृशं भ्रशयति, अबभ्रशत् । कृशं क्रशयति, अचक्रशत् । दृढं द्रढयति, अदद्रढत् । परिवृढं परिव्रढयति, अपपरिव्रढत् । बहुं भूययति, अबूभुयत् । स्थूलं स्थवयति, अतस्थवत् । दूरं दवयति, अददवत् ।

ह्रस्वं ह्रसयति, अजह्रसत्। क्षिप्रं क्षेपयति, अचिक्षेपत्। क्षुद्रं क्षोदयति, अचुक्षोदत्। पटुं पटयति 'नामिनोऽकलिहलेः' इति कलिहलिवर्जनात् पूर्वं वृद्धौ पश्चाद् औकारलोपेनासमानलोपित्वात् अपीपटत्। ऊढिमाचष्टे ऊढयति, औजिढत्। शूनीमाचष्टे पुंवद्भावाद् 'नैकस्वराणाम्' इति अन्त्यस्वरादिलोपनिषेधाच्च श्वानयति कलिहलिवर्जनाद् नाम्नोऽपि णौ परे वृद्धिः ज्ञापितेति वृद्धिः विद्वांसं विद्वयति, अविविद्वत्। उदञ्चमाचष्टे 'उदच् उदीच्' इत्यत्र णेर्वर्जनात् उदयति। प्रत्यञ्चं प्रत्ययति। श्रियं श्राययति। गां गवयति। रायं राययति। नावं नावयति, अनूनवत्। स्वः स्वयति अव्ययानामन्त्यस्वरादेर्लोपः। स्रग्विणं स्रजयति, श्रीमन्तं श्राययति, धीमन्तं धाययति णौ मत्वर्थीययोः विन्मतोर्लुक्। पयस्विनीं पययति। त्वामाचष्टे त्वदयति। युवां युष्मान् वाऽऽचष्टे युष्मयति। सध्र्यञ्चं सध्र्ययति, असस्रध्र्यत्। देवद्र्यञ्चं देवद्र्ययति, अदिदेवद्र्यत्। अदद्र्यंचं अदद्र्ययति, अदद्र्यत्। अमुमुयञ्चमाचष्टे अमुमुययति, आमुमुययत्। सध्र्यंचादौ निमित्तापाये नैमित्तिकस्याप्यभावः' न चिन्त्यते, अन्यथा सहयति वा सध्राययति, देवद्राययति, अमुमुआययति इत्यादयो भवेयुः।

इति नामधातुप्रक्रिया समाप्ता।

---

# अथ कण्ड्वादिप्रक्रिया ।

## धातोः कण्ड्वादेर्यक् । ३ । ४ । ८ ।

एभ्यो धातुभ्य स्वार्थे यक् प्रत्ययो भवति । कण्डूग् गात्रविघर्षणे । कण्डूयति, कण्डूयते । महीङ् पूजायाम् महीयते । मन्तु अपराधे रोषे च मन्तूयति । वल्गु पूजामाधुर्ययो. वल्गूयति । असु असूग् उपतापे च असूयति, असूयते । लेट् लोट् धौर्त्ये दीप्तौ । लेट्यति । लोट्यति । इरस् इरज् इरग् ईर्ष्यार्थाः इरस्यति, इरज्यति, ईर्यति, ईर्यते । उषस् प्रभातीभावे, उषस्यति, वेद् धौर्त्ये स्वप्ने च वेद्यति । मेधा आशुग्रहणे, मेधायति । कुषुभ् क्षेपे कुषुभ्यति । मगध् परिवेष्टने मगध्यति । नीच दास्ये नीच्यति । तन्तस् पम्पस् दु खे तन्तस्यति, पम्पस्यति । सुख् दु ख् तत्क्रियायाम् सुख्यति, दु.ख्यति । सपर् पूजायाम् सपर्यति । अरर आराकर्मणि अरर्यति । भिषज् चिकित्सायाम् भिषज्यति । भिष्णज् उपसेवायाम् भिष्णज्यति । इषुध् शरधारणे इषुध्यति । चरण् वरण् गतौ चरण्यति, वरण्यति । चुरण् चौर्ये चुरण्यति । तुरण् त्वरायाम् तुरण्यति । भुरण् धारणे पोषणे च भुरण्यति । गद्गद् वाक्स्खलने गद्गद्यति । एला केला खेला विलासे । एलायति, केलायति, खेलायति । लेखा लेख्यति । लिट् अल्पकुत्सनयोः लिट्यति । लाट् जीवने लाट्यति । हृणीङ् लज्जा रोषयोः हृणीयते । रेखा

श्लाघासादनयोः रेख्यति । द्रवस् परिताप-परिचरणयोः द्रवस्यति । तिरस् अन्तर्धौ तिरस्यति । अगद् नीरोगत्वे अगद्यति । उरस् बलार्थे उरस्यति । तरण् गतौ तरण्यति । पयस् प्रसृतौ पयस्यति । सम्भूयस् प्रभूतभावे सम्भूयस्यति । अम्बर् सम्भर् संभरणे अम्बर्यति, सम्भर्यति । आकृतिगणोऽयम् ।

इति कण्ड्वादिगणः समाप्तः ।

---

## अथ प्रत्ययमाला ।

कण्डूयितुमिच्छतीति सनि 'सन्यङः' इति एकस्वरस्याद्यवयवस्य द्वित्वे प्राप्ते

**कण्ड्वादेस्तृतीयः । ४ । १ । ९ ।**

कण्ड्वादेर्द्वित्वभाज एकस्वरोंऽशः तृतीय एव द्विर्भवति । कण्डूयियिषति । असूयियिषति ।

**नाम्नो द्वितीयाद् यथेष्टम् । ४ । १ । ७ ।**

स्वरादेर्नामधातोर्द्वित्वभाजो द्वितीयादारभ्यैकस्वरोंऽशो यथेष्टं द्विर्भवति । अश्वमिच्छति अश्वीयति । अश्वीयितुमिच्छति अशिश्वीयिषति, अश्वीयियिषति, अश्वीयिषिषति ।

**अन्यस्य । ४ । १ । ८ ।**

व्यञ्जनादेर्नामधातोर्द्वित्वभाज एकस्वरोंऽशो यथेष्टं प्रथमाद्द्विर्भवति । पुत्रमिच्छति पुत्रीयति, पुत्रीयितुमिच्छति पुपुत्रीयिषति, पुतित्रीयिषति । पुत्रीयियिषति । पुत्रीयिषिषति ।

यिः सन् वेर्ष्यः । ४ । १ । १६ ।

द्वित्वभाज ईर्ष्ये सन् यिश्च वा द्विर्भवति । ईर्ष्यियिषति । ईर्ष्यिषिषति । प्रियमाचष्टे प्रापयति, प्रापयितुमिच्छति पिप्रापयिषति, प्रापिपयिषति, प्रापयियिषति, प्रापयिषिषति । पुनः पुनः भवन्तमिच्छन्तं प्रयुयुक्षते अर्थात् पुनः पुनः बुभूषन्तं प्रयुयुक्षते इत्यत्र यङ् सन् णिग् सन् इति प्रत्ययचतुष्टयान्तस्य बोभूयिषयिषति द्वित्वे कृते पुनः द्वित्वं न भवतीत्येकमेव रूपम् । पुनः पुनः भवन्तं प्रयुयुक्षते इति यङ्णिच्सन्नन्तस्य बोभूययिषति ।

इति तिवाद्यन्तप्रत्ययमाला समाप्ता ।

---

# अथ पदविभागप्रक्रिया ।

## पराणि कानानशौ चात्मनेपदम् । १ । ३ । २० ।

सर्वविभक्तीनां पराणि नव नव वचनानि कानानशौ चात्मनेपदानि भवन्ति । ते, आते, अन्ते । से, आथे, ध्वे । ए, वहे, महे इत्यादयः ।

## इङितः कर्तरि । ३ । १ । २२ ।

इदितो ङितश्च धातोः कर्तर्यात्मनेपदं भवति । एधते । एधमानः । शेते । शयानः ।

## क्रियाव्यतिहारेऽगतिहिंसाशब्दार्थहसोह्ववहश्चानन्योन्यार्थे । १ । ३ । २३ ।

अन्यस्य कर्तुमिच्छाविषयीभूताया क्रियाया अन्येन करणं क्रियाव्यतिहारः । तदर्थाद् गतिहिंसाशब्दार्थहसवर्जिताद् ह्ववहिभ्यां च कर्तर्यात्मनेपदं भवति, न तु अन्योन्येतरेतरपरस्परशब्दयोगे । क्रियाव्यतिहारश्च व्यतिना द्योत्यते इति व्यती प्रयोक्तव्यौ । व्यतिलुनते । व्यतिहरन्ते व्यतिवहन्ते । गत्यादिवर्जनं किम् ? व्यतिसर्पन्ति, व्यतिहिंसति, व्यतिजल्पन्ति । अनन्योन्यार्थे इति किम् ?—परस्परं व्यतिलुनन्ति ।

**निविशः । ३ । ३ । २४ ।**

निपूर्वाद् विशेरात्मनेपदं भवति । निविशते ।

**उपसर्गादस्योहो वा । ३ । ३ । २५ ।**

उपसर्गपूर्वाभ्यामाभ्यां कर्तर्यात्मनेपदं वा भवति। विपर्यस्यनि, विपर्यस्यते । समूहति, समूहते ।

**उत्स्वराद् युजेरयज्ञतत्पात्रे । ३ । ३ । २६ ।**

उत्पूर्वात् स्वरान्तोपसर्गपूर्वाच्च युजे कर्तर्यात्मनेपदं भवति, न चेद् यज्ञे यत् पात्रं तद्विषयो युज्धात्वर्थं । उद्युङ्क्ते । उपयुङ्क्ते । उत्स्वरादिति किम् ? संयुनक्ति । अयज्ञतत्पात्र इति किम् ? द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति ।

**परिव्यवात् क्रियः । ३ । ३ । २७ ।**

एभ्यः क्रिय कर्तर्यात्मनेपदं भवति । परिक्रीणीते । विक्रीणीते । अवक्रीणीते । उपसर्गादित्येव उपरि क्रीणाति ।

**परावेर्जेः । ३ । ३ । २८ ।**

आभ्यां परात् जयते कर्तर्यात्मनेपदं भवनि । पराजयते । विजयते । उपसर्गादित्येव बहुवि जयति वनम् ।

**समः क्ष्णोः । ३ । ३ । २९ ।**

सम्पूर्वात् क्ष्णौते कर्तर्यात्मनेपदं भवति । संक्ष्णुते शस्त्रम् । समिति किम् ? क्ष्णौति । उपसर्गादित्येव आयसं क्ष्णौति ।

**अपस्किरः । १ । ३ । ३० ।**

अपात् किरतेः सस्सट्कात् कर्तर्यात्मनेपदं भवति ।

**अपाच्चतुष्पात्पक्षिशुनि हृष्टान्नाश्रयार्थे । ४ । ४ । ९५ ।**

अपपूर्वात् किरते चतुष्पदि पक्षिणि शुनि च कर्तरि यथासङ्ख्यं हृष्टे अन्नार्थिनि आश्रयार्थिनि चार्थे स्सडादिर्भवति । अपस्किरते गौ हृष्टः, कुक्कुटो अन्नार्थी, श्वा आश्रयार्थी च ।

**वौ विष्किरो वा । ४ । ४ । ९६ ।**

पक्षिणि वाच्ये विपूर्वात् किरते स्सडादिर्वा भवति । विष्किरः, विकिरो वा ।

**प्रात् तुम्पतेर्गवि । ४ । ४ । ९७ ।**

प्रपूर्वात् तुम्पते गवि कर्तरि स्सडादिर्भवति । प्रस्तुम्पति गौः ।

**उदश्चरः साप्यात् । १ । ३ । ३१ ।**

उत्पूर्वात् साप्यात् चरते कर्तर्यात्मनेपदं भवति । मार्गम् । उच्चरते साप्यादिति किम् ? धूम उच्चरति ।

**समस्तृतीयया । १ । ३ । ३२ ।**

तृतीयान्तेन योगे सति सम्पूर्वाच्चरते कर्तर्यात्मनेपदं भवति । अश्वेन संचरते ।

**क्रीडोऽकूजने । १ । ३ । ३३ ।**

कूजनमव्यक्तशब्द, ततोऽन्यार्थात् संपूर्वात् क्रीडते. कर्तर्यात्मनेपदं भवति । संक्रीडते । समित्येव क्रीडति । अकूजन इति किम् संक्रीडन्ति शकटानि ।

अन्वाङ्परेः । १ । ३ । ३४ ।

एभ्यः क्रीडते. कर्तर्यात्मनेपदं भवति । अनुक्रीडते । आक्रीडते । परिक्रीडते ।

शप उपलम्भने । १ । ३ । ३५ ।

उपलम्भनं प्रकाशनं शपथो वा । तदर्थात् शपतेः कर्तर्यात्मनेपदं भवति । मैत्राय शपते शपथपूर्व स्वाभिप्राय मैत्रं ज्ञापयतीत्यर्थः । उपलम्भने इति किम् ? मैत्रं शपति ।

आशिषि नाथः । १ । ३ । ३६ ।

आशिष्येव नाथधातोः कर्तर्यात्मनेपदं भवति, नान्यत्र । सर्पिः नाथते सर्पिर्मे भूयादित्याशास्ते । आशिषोऽन्यत्र नाथति ईष्टे इत्यर्थः, याचते, उपतापयति वा ।

भुनजोऽत्राणे । १ । ३ । ३७ ।

अपालनार्थाद् भुनक्तेः कर्तर्यात्मनेपदं भवति । ओदनं भुङ्क्ते । भुनज इति किम् ? ओष्ठौ निर्भुजति । अत्राण इति किम् ? मही भुनक्ति ।

हृगो गतताच्छील्ये । १ । ३ । ३८ ।

गतं सादृश्यं, ताच्छील्यं तत्स्वभावता सदृशतत्स्वभाव इत्यर्थः, तत्र वर्तमानाद् हृगः कर्तर्यात्मनेपदं भवति । पैतृकम् अश्वा अनुहरन्ते पितुरागतं सादृश्यं शीलयन्तीत्यर्थः। मातृकं गावोऽनुहरन्ते ।

गत इति किम् पितुः हरति चोरयतीत्यर्थः । ताच्छील्यादिति किम्
नटो राममनुहरति । कृष्णमनुहरति ।

**पूजाऽऽचार्यकभृत्युत्क्षेपज्ञानविगणनव्यये नियः । ३ । ३ । ३९ ।**

पूजादिषु गम्यमानेषु नयतेः कर्तर्यात्मनेपदं भवति । नयते विद्वान् स्याद्वादे । माणवकमुपनयते । कर्मकरान् उपनयते । शिशुमुदानयते नयते तत्त्वार्थे । कारं विनयन्ते मद्राः । शतं विनयते । एष्विति किम् अजां नयति ।

**कर्तृस्थामूर्ताऽऽप्यात् । ३ । ३ । ४० ।**

कर्तृस्थममूर्तमाप्यं कर्म यस्य तस्माद् नयतेः कर्तर्यात्मनेपदं भवति । श्रमं विनयते । कर्तृस्थेति किम् ? शैवो वैष्णवस्य मन्युं विनयति । अमूर्तेति किम् ? श्लेष्माणं विनयति । आप्य इति किम् ? बुद्ध्या विनयति ।

**शदेः शिति । ३ । ३ । ४१ ।**

शिद्विषयाच्छदेः कर्तर्यात्मनेपदं भवति । शीयते । शितीति किम् ? शत्स्यति ।

**म्रियतेरद्यतन्याशिषि च । ३ । ३ । ४२ ।**

अद्यतनीविषयादाशीर्विषयाच्छिद्विषयाच्च म्रियतेः कर्तर्यात्मनेपदं भवति । अमृत अमृषाताम् अमृषत । मृषीष्ट । म्रियते । म्रियेत । म्रियताम् । अम्रियत । अन्यत्र ममार ।

**क्यङ्षो नवा । ३ । ३ । ४३ ।**

क्यङ्षन्तात् कर्तर्यात्मनेपदं वा भवति । लोहितायति, लोहितायते । निद्रायति, निद्रायते ।

**द्युद्भ्योऽद्यतन्याम् । ३ । ३ । ४४ ।**

द्युतादिभ्योऽद्यतन्यां कर्तर्यात्मनेपदं वा भवति । व्यद्युतत्, व्यद्योतिष्ट । अरुचत्, अरोचिष्ट । अघुटत्, अघोटिष्ट । अरुटत्, अरोटिष्ट । अलुटत्, अलोटिष्ट । अश्वितत्, अश्वेतिष्ट । अमिदत्, अमेदिष्ट । अक्ष्विदत्, अक्ष्वेदिष्ट । अस्विदत्, अस्वेदिष्ट । अशुभत्, अशोभिष्ट । अक्षुभत्, अक्षोभिष्ट । अनभत्, अनभिष्ट । अतुभत्, अतुम्भिष्ट । अस्रभत्, अस्रम्भिष्ट । अध्वसत्, अध्वसिष्ट । अभ्रशत्, अभ्रंशिष्ट । अवृतत्, अवर्तिष्ट । अस्यदत्, अस्यन्दिष्ट । अवृधत्, अवर्धिष्ट । अशृधत्, अशर्धिष्ट । अक्लपत्, अकल्पिष्ट ।

**वृद्भ्यः स्यसनोः । ३ । ३ । ४५ ।**

वृतादेः पञ्चतः स्यादौ प्रत्यये सनि च विषये कर्तर्यात्मनेपदं वा भवति । वर्त्स्यति, वर्तिष्यते । स्यन्त्स्यति, स्यन्दिष्यते, स्यन्त्स्यते । वर्त्स्यति, वर्धिष्यते । शर्त्स्यति, शर्धिष्यते । कल्प्स्यति, कल्पिष्यते ।

**क्लृपः श्वस्तन्याम् । ३ । ३ । ४६ ।**

श्वस्तनीविषये क्रपेः कर्तर्यात्मनेपदं वा भवति । कल्प्तास्मि, कल्पितासे ।

**क्रमोऽनुपसर्गात्** । ३ । ३ । ४७ ।

अविद्यमानोपसर्गात् क्रमे कर्तर्यात्मनेपदं वा भवति । क्रमते, क्रामति । उपसर्गात्तु संक्रामति ।

**वृत्तिसर्गतायने** । ३ । ३ । ४८ ।

वृत्तिरप्रतिबन्ध , सर्ग उत्साह , तायनं स्फीतता । एतदर्थात् क्रमे. कर्तर्यात्मनेपदं भवति । क्रमतेऽस्य बुद्धि शास्त्रे अप्रतिहता सती शास्त्रमवगाहत इत्यर्थ· । सूत्राय क्रमते उत्सहत इत्यर्थः । क्रमन्तेऽस्मिन् योगा वर्धन्त इत्यर्थ· ।

**परोपात्** । ३ । ३ । ४९ ।

आभ्यामेव परात् वृत्त्याद्यर्थात् क्रमेः कर्तर्यात्मनेपदं भवति । पराक्रमते । उपक्रमते । अन्यत्र तु अनुक्रामति । वृत्त्यादावित्येव पराक्रामति ।

**वेः स्वार्थे** । ३ । ३ । ५० ।

स्वार्थ· पादविक्षेपस्तदर्थात् विपूर्वात् क्रमे कर्तर्यात्मनेपद भवति । साधु विक्रमते गज· । स्वार्थ इति किम्? गजेन विक्रामति ।

**प्रोपादारम्भे** । ३ । ३ । ५१ ।

आरम्भार्थात् प्रपूर्वात् क्रमेः कर्तर्यात्मनेपद भवति । भोक्तुं प्रक्रमते । उपक्रमते । आरम्भ इत्येव प्रक्रामति गच्छतीत्यर्थः ।

**आङो ज्योतिरुद्गमे । ३ । ३ । ५२ ।**

चन्द्राद्युद्गमार्थादाङ्पूर्वात् क्रमेः कर्तर्यात्मनेपदं भवति। आक्रमते चन्द्र सूर्यो वा। ज्योतिरुद्गम इति किम् ? आक्रामति कुतुपं बटुः।

**दागोऽस्वास्यप्रसारविकाशे । ३ । ३ । ५३ ।**

स्वास्यप्रसारविकाशादन्यत्रार्थे वर्तमानाद् दाग कर्तर्यात्मनेपदं भवति। आदत्ते विद्याम्। स्वास्यप्रसारविकाशवर्जनं किम् ? उष्ट्रो मुखं व्याददाति। कूलं व्याददाति।

**नु-प्रच्छः । ३ । ३ । ५४ ।**

आङ्पूर्वाभ्यामाभ्यां कर्तर्यात्मनेपदं भवति। आनुते शृगालः। आपृच्छते गुरून्।

**गमेः क्षान्तौ । ३ । ३ । ५५ ।**

कालहरणार्थादाङ्पूर्वाद् गमेः कतर्यात्मनेपदं भवति। आगमयते गुरुम्—कंचित् कालं प्रतीक्षते। क्षान्ताविति किम् ? विद्यामागमयति।

**ह्वः स्पर्धे । ३ । ३ । ५६ ।**

आङ्पूर्वाद् ह्वयते स्पर्धे गम्ये कर्तर्यात्मनेपदं भवति। मल्लो मल्लमाह्वयते।

**संनिवेः । ३ । ३ । ५७ ।**

एभ्यो ह्वयतेः कर्तर्यात्मनेपदं भवति । संह्वयते । निह्वयते । विह्वयते ।

उपात् । ३ । ३ । ५८ ।

उपाद् ह्वयते. कर्तर्यात्मनेपदं भवति । उपह्वयते ।

यमः स्वीकारे । ३ । ३ । ५९ ।

उपपूर्वाद् यमे. स्वीकारेऽर्थे कर्तर्यात्मनेपदं भवति । उपयच्छते कन्याम् । उपायंस्त महास्त्राणि । स्वनिर्देशात् शाटकान् उपयच्छति ।

देवार्चामैत्रीसंगमपथिकर्तृकमन्त्रकरणे स्थः । ३ । ३ । ६० ।

एषु वर्तमानादुपपूर्वात् तिष्ठतेः कर्तर्यात्मनेपदं भवति । जिनेन्द्रमुपतिष्ठते । पथिको रथिकान् उपतिष्ठते । यमुना गङ्गामुपतिष्ठते, । वाराणस्यामुपतिष्ठते पन्थाः । ऐन्द्या ऋचा गार्हपत्यं नाम कुण्डमुपतिष्ठते । 'उपाल्लिप्सायां वा वाच्यम्' । दातृकुलमुपतिष्ठते उपतिष्ठति वा भिक्षुक ।

उदोऽनूर्ध्वेहे । ३ । ३ । ६२ ।

ईहा चेष्टा, अनूर्ध्वा या चेष्टा तदर्थात् उत्पूर्वात् तिष्ठते. कर्तर्यात्मनेपदं भवति । मोक्षे उत्तिष्ठते । अनूर्ध्वेह इति किम् ? आसनादुत्तिष्ठति । 'संविप्रावेभ्योऽपि वाच्यम्' संतिष्ठते, वितिष्ठते, प्रतिष्ठते, अवतिष्ठते ।

ज्ञीप्सा-स्थेये ३ । ३ । ६४ ।

ज्ञीप्सा आत्मप्रकाशनम्, स्थेयः सभ्यः। ज्ञीप्सायां स्थेये च विषये स्थाधातोः कर्तर्यात्मनेपदं भवति। तिष्ठते कन्या च्छात्रेभ्य.। त्वयि तिष्ठते विवादः।

**प्रतिज्ञायाम्। ३। ३। ६५।**

एतदर्थे स्थाधातो. कर्तर्यात्मनेपद भवति। नित्यं शब्दमातिष्ठन्ते वैयाकरणाः।

**समो गिरः। ३। ३। ६६।**

सम्पूर्वाद् गिरतेः कर्तर्यात्मनेपदं भवति, प्रतिज्ञायाम्। स्याद्वादं संगिरन्ते जैनाः। 'अवादपि वक्तव्यम्' अवगिरते।

**निह्नवे ज्ञः। ३। ३। ६८।**

निह्नवोऽपलाप, तद्वृत्तेर्ज्ञाधातो कर्तर्यात्मनेपद भवति। शतमपजानीते।

**संप्रतेरस्मृतौ। ३। ३। ६९।**

स्मृतेरन्यार्थात् संप्रतिभ्यां परात् ज्ञाधातोः कर्तर्यात्मनेपदं भवति। अनेकान्तं संजानीते, प्रतिजानीते। स्मृतौ तु मातुः संजानाति।

**अननोः सनः। ३। ३। ७०।**

सन्नन्ताद् ज्ञाधातोः कर्तर्यात्मनेपदं भवति, न तु अनुपूर्वात्। धर्मं जिज्ञासते। अननोरिति किम्? धर्ममनुजिज्ञासति।

**श्रुवोऽनाङ्-प्रतेः। ३। ३। ७१।**

सन्नन्तात् शृणोतेः कर्तर्यात्मनेपदं भवति, न तु आङ्प्रति-पूर्वात् । गुरुं शुश्रूषते । अनाङ्प्रतेरिति किम् ? आशुश्रूषति । प्रतिशुश्रूषति ।

**स्मृदृशः । ३ । ३ । ७२ ।**

आभ्यां सन्नन्ताभ्यां कर्तर्यात्मनेपदं भवति । सुस्मूर्षते । दिदृक्षते ।

**शको जिज्ञासायाम् । ३ । ३ । ७३ ।**

जिज्ञासायां वर्तमानात् सन्नन्तात् शकेः कर्तर्यात्मनेपदं भवति । विद्यां शिक्षते । जिज्ञासायामिति किम् ? शिक्षति ।

**प्राग्वत् । ३ । ३ । ७४ ।**

सन्प्रत्ययात् पूर्वो यो धातुस्तस्मादिव सन्नन्तात् कर्तर्यात्मनेपदं भवति । शिशयिषते । अश्वेन संचिचरिषते ।

**आमः कृगः । ३ । ३ । ७५ ।**

आमः परादनुप्रयुक्तात् कृग आम एव प्राग् यो धातुस्तस्मादिव कर्तर्यात्मनेपदं भवति । स्याच्च न स्यादिति विधिनिषेधौ । ईहाञ्चक्रे । बिभराञ्चक्रे, बिभराञ्चकार । कृग इति किम् ? ईक्षामास, ईक्षाम्बभूव ।

**गन्धनावक्षेपसेवासाहसप्रतियत्नप्रकथनोपयोगे । ३ । ३ । ७६ ।**

एतदर्थात् करोतेः कर्तर्यात्मनेपदं भवति । गन्धनं द्रोहेण परदोषोद्घाटनमुत्कुरुते । अवक्षेपः कुत्सनम्—दुर्वृत्तानवकुरुते ।

सेवा महामात्रानुपकुरुते । साहसमविचार्य प्रवृत्तिः परदारान् प्रकुरुते । प्रतियत्नः गुणान्तराधानमेधोदकमुपस्कुरुते । प्रकथनम् परापवादान् प्रकुरुते । उपयोगो धर्मादिषु विनियोगः शतं प्रकुरुते ।

**अधेः प्रसहने । ३ । ३ । ७७ ।**

प्रसहने वर्तमानादधेः परात् कृगः कर्तर्यात्मनेपदं भवति । प्रसहनं परेणाभिभवः, परस्य पराजयो वा । तं हा अधिचक्रे । प्रसहनं किम् ? तमधिकरोति ।

**दीप्तिज्ञानयत्नविमत्युपसंभाषणोपमन्त्रणे वदः । ३ । ३ । ७८ ।**

एषु गम्यमानेषु वदतेः कर्तर्यात्मनेपदं भवति । दीप्तिर्भासनं विद्वान् वदते स्याद्वादे । ज्ञाने धीमान् तत्त्वार्थे वदते । यत्ने तपसि वदते । नानामतिः विमतिः धर्मे विवदन्ते । उपसंभाषणमुपसान्त्वनं कर्मकरानुपवदते । उपमन्त्रणं रहस्युपच्छन्दनं कुलभार्यामुपवदते ।

**व्यक्तवाचां सहोक्तौ । ३ । ३ । ७९ ।**

व्यक्तवाचो रूढ्या मनुष्यादयः तेषां सम्भूयोच्चारणार्थाद् वदतेः कर्तर्यात्मनेदं भवति । सम्प्रवदन्ते ग्राम्याः । व्यक्तवाचामिति किम् ? शुकाः संप्रवदन्ति । 'विवादे वा वाच्यम्' विप्रवदन्ते, विप्रवदन्ति वा मौहूर्तिकाः ।

**अनोः कर्मण्यसति । ३ । ३ । ८१ ।**

व्यक्तवाचामर्थे वर्तमानादनुपूर्वाद् वदतेः कर्मण्यसति कर्तर्यात्मनेपदं भवति । अनुवदते । कर्मण्यसतीति किम् ? उक्तमनुवदति ।

**ज्ञः । १ । ३ । ८२ ।**

जानाते कर्मण्यसति कर्तर्यात्मनेपदं भवति। सर्पिषो जानीते। कर्मण्यसतीत्येव तैलं सर्पिषो जानाति ।

**उपात् स्थः । ३ । ३ । ८३ ।**

उपपूर्वात् तिष्ठतेः कर्मण्यसति कर्तर्यात्मनेपदं भवति । योगे योगे उपतिष्ठते । कर्मणि तु राजानमुपतिष्ठति ।

**समो गमृच्छिप्रच्छिश्रुवित्स्वरत्यर्तिदृशः। १ । ३ । ८४ ।**

सम्पूर्वेभ्य एभ्य कर्मण्यसति कर्तर्यात्मनेपदं भवति । संगच्छते । समृच्छते । सम्पृच्छते । संशृणुते । संवित्ते । संस्वरते । समियृते । सम्पश्यते । कर्मणि सति तु मैत्रं संगच्छति ।

**वेः कृञः शब्दे चानाशे । १ । ३ । ८५ ।**

अनाशार्थाद् विपूर्वाद् कृञः कर्तर्यात्मनेपदं भवति, कर्मण्यसति शब्दे च कर्मणि । विकुर्वते सैन्धवाः । क्रोष्टा स्वरान् विकुरुते । शब्दे चेति किम् मृदं विकरोति । अनाश इति किम् ? अध्यायं विकरोति ।

**आङो यमहनः स्वेऽङ्गे च । १ । १ । ८६ ।**

आङ्पराभ्यां यम्हन्भ्यां कर्मण्यसति स्वेऽङ्गे च कर्मणि कर्तर्यात्मनेपदं भवति । आयच्छते, आहते । आयच्छते आहते वा पादम् । स्वेऽङ्गे चेति किम् ? आयच्छति रज्जुम् ।

**व्युदस्तपः । ३ । ३ । ८७ ।**

आभ्यां तपते. कर्मण्यसति स्वेऽङ्गे च कर्मणि कर्तर्यात्मनेपदं भवति । वितपते, उत्तपते सूर्य । वितपते, उत्तपते पाणिम् ।

**प्रलम्भे गृधि-वञ्चेः । ३ । ३ । ८९ ।**

आभ्यां णिगन्ताभ्यां प्रलम्भने वर्तमानाभ्यां कर्तर्यात्मनेपदं भवति । बटुं गर्धयते वञ्चयते वा । प्रलम्भ इति किम् ? श्वानं गर्धयति ।

**लीङ्लिनोऽर्चाभिभवे चाच्चाकर्तर्यपि । ३ । ३ । ९० ।**

अभिभव–प्रलम्भनार्थाभ्यामाभ्यां कर्तर्यात्मनेपदं भवति । आकारश्चानयोरकर्तर्यपि भवति । रजोहरणेन आलापयते । श्येनः वर्तिकामपलापयते । कस्त्वामुल्लापयते ।

**स्मिङः प्रयोक्तुः स्वार्थे । ३ । ३ । ९१ ।**

प्रयोक्तृतो यः स्वार्थः स्मयः, तदर्थाद् णिगन्तात् स्मिङः कर्तर्यात्मनेपदं भवति, आच्चाकर्तर्यपि । जटिलो विस्मापयते । प्रयोक्तुः स्वार्थ इति किम् ? रूपेण विस्माययति ।

**बिभेतेर्भीष् च । ३ । ३ । ९२ ।**

प्रयोक्तु यः स्वार्थस्तदर्थाद् णिगन्ताद् बिभेतेः कर्तर्यात्मनेपदं भवति, आच्चाकर्तर्यपि, पक्षे भीषादेशः । मुण्डो भीषयते, भापयते । स्वार्थ इत्येव कुञ्चिकया भाययति ।

**मिथ्याकृगोऽभ्यासे । ३ । ३ । ९३ ।**

मिथ्यायुक्ताद् णिगन्तात् कृगः क्रियाभ्यासे कर्तर्यात्मनेपदं भवति। पदं मिथ्या कारयते। मिथ्येति किम्? पदं साधु कारयति। अभ्यास इत्येव सकृत् पदं मिथ्या कारयति।

**परिमुहायमायसपाट्धेवदवसदमादरुचनृतः फलवति । ३ । ३ । ९४ ।**

एभ्यो णिगन्तेभ्यः फलवति कर्तर्यात्मनेपदं भवति। परिमोहयते चैत्रम्। आयामयते सर्पम्। आयासयते जिनदत्तम्। पाययते शिशुम्। धापयते बटुम्। वादयते शिशुम्। वासयते पान्थम्। दमयते अश्वम्। आदयते चैत्रेण। रोचयते मैत्रम्। नर्तयते नटम्।

**ईगितः । ३ । ३ । ९५ ।**

ईदितो गितश्च धातोः फलवति कर्तर्यात्मनेपदं भवति। यजते। कुरुते। फलवतीत्येव यजति पराय। पचन्ति देवदत्ताय।

**ज्ञोऽनुपसर्गात् । ३ । ३ । ९६ ।**

ज्ञाधातोः फलवति कर्तर्यात्मनेपदं भवति, न तूपसर्गपूर्वात्। गां जानीते। फलवतीत्येव परस्य गां जानीते।

**वदोऽपात् । ३ । ३ । ९७ ।**

अपपूर्वाद् वदधातोः फलवति कर्तर्यात्मनेपदं भवति। एकान्तमपवदते। फलवतीत्येव स्वभावात् परमपवदति।

**समुदाङो यमेरग्रन्थे । ३ । ३ । ९८ ।**

एभ्यः पराङ् यमेः अग्रन्थविषये फलवति कर्तर्यात्मनेपदं भवति । संयच्छते व्रीहीन् । उद्यच्छते भारम् । आयच्छते वस्त्रम् । अग्रन्थ इति किम् ? चिकित्सामुद्यच्छति । फलवतीत्येव संयच्छति ।

**पदान्तरगम्ये वा । ३ । ३ । ९९ ।**

प्रक्रान्तसूत्रपञ्चके यदात्मनेपदमुक्त तत्र फलवत्कर्तृकत्व यदि पदान्तरेण बोध्यते तदाऽऽत्मनेपद वा भवति । स्वं शत्रु परिमोहयति, परिमोहयते वा । स्व यज्ञं यजति, यजते वा । स्वं गां जानाति, जानीते वा । स्वं शत्रुमपवदति, अपवदते वा । स्वान् व्रीहीन् संयच्छति, संयच्छते वा ।

**इत्यात्मनेपदप्रक्रिया ।**

---

**अथ परस्मैपदप्रक्रिया ।**

**शेषात् परस्मै । ३ । ३ । १०० ।**

एभ्यो धातुभ्यो येन विशेषणात्मनेपदमुक्तं ततोऽन्यस्माद् धातो. कर्तरि परस्मैपदं भवति । भवति । पिबति । धयति । अत्ति । जुहोति । दीव्यति । तुदति । सुनोति । रुणद्धि । चोरयति ।

**परानोः कृगः । ३ । ३ । १०१ ।**

परानुपूर्वात् कृगः कर्तरि परस्मैपद भवति । पराकरोति । अनुकरोति ।

**प्रत्यभ्यतेः क्षिपः । ३ । ३ । १०२ ।**

एभ्य. परात् क्षिपेः कर्तरि परस्मैपदं भवति । प्रतिक्षिपति । अभिक्षिपति । अतिक्षिपति बटुम् ।

**प्राद् वहः । ३ । ३ । १०३ ।**

अस्मात् कर्तरि परस्मैपदं भवति । प्रवहति ।

**परेर्मृषश्च । ३ । ३ । १०४ ।**

परिपूर्वात् मृषे वहेश्च कर्तरि परस्मैपदं भवति । परिमृष्यति । परिवहति ।

**व्याङ्परे रमः । ३ । ३ । १०५ ।**

एभ्यो रमते कर्तरि परस्मैपदं भवति । विरमति । आरमति । परिरमति । 'उपाद् वा वक्तव्यम्' उपरमते, उपरमति भार्याम् ।

**अणिगि प्राणिकर्तृकानाप्याण्णिगः । ३ । ३ । १०७ ।**

अणिगवस्थाया य प्राणिकर्तृकोऽकर्मकश्च धातु तस्माद् णिगन्तात् कर्तरि परस्मैपदं भवति । आसयति चैत्रं मैत्रः । अणिगीति किम् ? स्वयमेवारोहयमाणं गजं प्रयुङ्क्ते आरोहयते । अणिगीति गकारः किम् ? चेतयमानं प्रयुङ्क्ते चेतयति । प्राणिकर्तृकादिति किम् ? आतपो व्रीहीन् शोषयते । अनाप्यादिति किम् ? कटं कारयते ।

**चल्याहारार्थेङ्बुधयुधप्रुद्रुस्नुनशजनः । ३ । ३ । १०८ ।**

चल्याहारार्थेभ्य इङादिभ्यश्च णिगन्तेभ्यः कर्तरि परस्मैपदं भवति । चलयति । कम्पयति । भोजयति, आशयति चैत्रमन्नं मैत्रः । सूत्रमध्यापयति शिष्यम् । रविः पद्मं बोधयति । योधयति । प्रावयति । द्रावयति । स्रावयति । नाशयति । जनयति ।

इति पदविभागप्रक्रिया समाप्ता ।

---

## अथ भावकर्मप्रक्रिया ।

---

**क्यः शिति । ३ । ४ । ७० ।**

भावकर्मविहिते शिति प्रत्यये परे धातुभ्य क्य प्रत्ययो भवति ।

**तत्साप्यानाप्यात् कर्मभावे कृत्यक्तखलर्थाश्च । ३ । ३ । २१ ।**

तदित्यात्मनेपदं कृत्यक्तखलर्थाश्च प्रत्यया सकर्मकाद् धातोः कर्मणि, अकर्मकादविवक्षितकर्मकाच्च भावे भवन्ति । कर्मणि तु युष्मदस्मद्भ्या सामानाधिकरण्यसम्भवाद् एक–द्वि–बहुवचनादि युष्मदस्मत्सम्बन्धि भवति, भावे तु युष्मदस्मद्भ्यामसामानाधिकरण्यात् अन्यसम्बन्धी एव प्रत्ययस्तत्रापि क्रियायाः प्राधान्यात् तस्याश्चैकत्वाद्भावे एकवचनमेव । ‘ रिः शक्याशीर्ये ’ इति रिः क्रियते कटः चैत्रेण । गम्यसे त्वं मैत्रेण । शय्यते मैत्रेण इत्यादीनि उदाहर्तव्यानि । क्रियेत क्रियन्ते । क्रियेत । क्रियताम् । अक्रि-

व्यत । भूयते त्वया । भूयेत भूयन्ते । भूयेत । भूयताम् । अभू-व्यत । चक्रे चक्राते चक्रिरे । चकृषे चकृढ्वे ।

स्वरग्रहदृशहन्भ्यः स्यसिजाशीःश्वस्तन्यां ञिट् वा
। ३ । ४ । ६९ ।

स्वरान्ताद् ग्रहादेश्च धातोः भावकर्मविहितासु स्यसिजाशीः-श्वस्तनीषु परासु ञिट् वा भवति । कारिषीष्ट, कृषीष्ट । कारिता, कर्ता । कारिष्यते, करिष्यते । अकारिष्यत, अकरिष्यत । बभूवे । भाविषीष्ट, भविषीष्ट । भाविता, भविता । भाविष्यते, भविष्यते । अभाविष्यत, अभविष्यत ।

भावकर्मणोः । ३ । ४ । ६८ ।

भावकर्मविहितेऽद्यतन्याः सम्बन्धिनि ते परे धातोः ञिच् भवति, तस्य च लुक् । अकारि अकारिषाताम्, अकृषाताम् अकारिषत, अकृषत । अकारिष्ठा, अकृथाः । अभावि अभा-विषाताम्, अभविषाताम् अभाविषत, अभविषत । गृह्यते । गृह्येत । गृह्यताम् । अगृह्यत । जगृहे । ग्राहिषीष्ट, ग्रहीषीष्ट । ग्राहिता, ग्रहीता । ग्राहिष्यते, ग्रहीष्यते । अग्राहिष्यत, अग्रही-ष्यत । अग्राहि अग्राहिषाताम्, अग्रहीषाताम् । दृश्यते । दृश्येत । दृश्यताम् । अदृश्यत । ददृशे । दर्शिषीष्ट, दृक्षीष्ट । दर्शिता, द्रष्टा । दर्शिष्यते, द्रक्ष्यते । अदर्शिष्यत, अद्रक्ष्यत । अदर्शि अदर्शिषाताम्, अदृक्षाताम् । हन्यते । हन्येत ।

हन्यताम् । अहन्यत । जघ्ने जघ्नाते जघ्निरे । घानिषीष्ट, वधिषीष्ट । घानितासे, हन्तासे । घानिष्यते, हनिष्यते । अघानिष्यत , अहनिष्यत ।

ञिणवि घन । ४ । ३ । १०१ ।

ञिणवि परे हन्तेर्घनादेशो भवति । अघानि । अघानिषाताम्, ‘ अद्यतन्यां वा त्वात्मने ’ इति वा वधादेशे अवधिषाताम् पक्षे अहसाताम् । ‘अकर्मका अपि सोपसर्गाः सकर्मका भवन्ति’ स्वामिना सुखमनुभूयते । लज्जाद्यर्था धातवोऽकर्मकास्तदुक्तम्—

“ लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ।
शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः” ॥१॥

लक्षण त्वेतेषा फलव्यापारयोराधाराभेदेऽकर्मकत्वमाधारभेदे च सकर्मकत्वम् , तदुक्तम्—

“ फलव्यापारयोरेकनिष्ठतायामकर्मकः ।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ” ॥ २ ॥

अन्यच्च—

“ धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ” ॥ ३ ॥

एवं च लक्षणमभ्यूह्य सकर्मकत्वमकर्मकत्वं च धातोर्वेदितव्यमिति ।

**क्ङिति यि शय् । ४ । ३ । १०५ ।**

किति ङिति च यादौ प्रत्यये शीङ्धातोः शयादेशो भवति । शय्यते । शय्येत । शय्यताम् । अशय्यत । शिश्ये । शायिषीष्ट, शयिषीष्ट । शायितासे, शयितासे । शायिष्यते, शयिष्यते । अशायिष्यत, अशयिष्यत । अशायि अशायिषाताम्, अशयिषाताम् अशायिषत, अशयिषत । अशायिष्ठाः, अशयिष्ठाः । भञ्ज्—भज्यते । अभज्यत ।

**भञ्जेर्ञौ वा । ४ । २ । ४८ ।**

भञ्जेर्ञौ परे उपान्त्यस्य नो लुग् वा भवति । अभाजि, अभञ्जि । अभञ्जिषाताम्, अभाङ्क्षाताम् वेट्त्वात् । जन्धातो —

**ये नवा । ४ । २ । ६२ ।**

सनखनजनां ये क्ङिति परे आकारो वा भवति । जायते, जन्यते । जायेत, जन्येत । जायताम्, जन्यताम् । अजायताम्, अजन्यताम् । सायते, सन्यते । सायेत, सन्येत । सायताम्, सन्यताम् । असायत, असन्यत । खायते, खन्यते । खायेत, खन्येत । खायताम्, खन्यताम् । अखायत, अखन्यत । जज्ञे । अजनि अजनिषाताम् । सेने । असनि असनिषाताम् । चख्ने । अखानि अखानिषाताम् ।

**तनः क्ये । ४ । २ । ६३ ।**

तन्धातोः क्ये परे आत्त्वं वा भवति । तायते, तन्यते । तायेत, तन्येत । तायताम्, तन्यताम् । अतायत, अतन्यत । अतानि । भाव्यते । भाव्येत । भाव्यताम् । अभाव्यत । भावयाञ्चक्रे, भावयाम्बभूवे ।

अस्तेः सि हस्त्वेति । ४ । ३ । ७३ ।

अस्तेः सकारस्य सादौ प्रत्यये परे लुग्, एति परे तु सस्य हो भवति । भावयामाहे भावयामासाते भावयामासिरे । भावयिषीष्ट, भाविषीष्ट । भावयितासे, भावितासे । भावयिष्यते, भाविष्यते । अभावयिष्यत, अभाविष्यत । अभावि अभावयिषाताम्, अभाविषाताम् । सन्नन्तात् बुभूष्यते । बुभूष्येत । बुभूष्यताम् । अबुभूष्यत । बुभूषाञ्चक्रे । अबुभूषि । यङन्तात् बोभूय्यते । बोभूय्येत । बोभूय्यताम् । अबोभूय्यताम् । बोभूयाञ्चक्रे । अबोभूयि । यङ्लुगन्ताद् बोभूयते । बोभूयेत । बोभूयताम् । अबोभूयत । बोभवाञ्चक्रे । बोभाविषीष्ट, बोभविषीष्ट । अबोभावि । स्तूयते । अस्तावि । ऋधातो—' क्ययङाशीर्ये ' इति गुणे अर्यते । आर्यत । आरे । आरिषीष्ट, ऋषीष्ट । आरितासे, अर्तासे । आरिष्यते, अरिष्यते । आरि । स्मर्यते । स्मारिता, स्मर्ता । इज्यते । ईजे । यक्षीष्ट । यष्टासे । अयाजि ।

तपेः कर्त्रनुतापे च । ३ । ४ । ९१ ।

तपेः कर्मकर्तरि कर्तरि अनुतापे च ञिच् न भवति ।

अन्ववातप्त कितव: स्वयमेव । साधुः तपांसि अतप्त । चैत्रेण अन्वतप्त । अन्ववातप्त पाप कर्मणा । अन्यत्र अतापि पृथ्वी राज्ञा । आदन्तानां धातूनाम् ‘ आत ऐ: कृञ्ञौ ’ इत्यनेनैकारे आयादेशे च अदायि अदायिषाताम् , अदिषाताम् ‘इश्च स्थाद:’ इती: । दायिषीष्ट, दासीष्ट । दायिता, दाता । धीयते । धीयेत । धीयताम् । अधीयत । अधायि अधायिषाताम् , अधिषाताम् । धायिषीष्ट, धासीष्ट । शम्यते । शम्येत । शम्यताम् । अशम्यत । अशमि ‘मोऽकमि’ इत्यादिना निषेधात् न वृद्धिः । ण्यन्तस्य तु ‘शमोऽदर्शने’ इति वा दीर्घे अशमि, अशामि ।

ञिख्णमोर्वा । ४ । ४ । १०६ ।

ञौ ख्णमि च परे लभधातो स्वरात् परो नोऽन्तो वा भवति । लभ्यते । लभ्येत । लभ्यताम् । अलभ्यत । लेभे लेभाते लेभिरे । लब्धा लब्धारौ लब्धारः । लप्स्यते लप्स्येते लप्स्यन्ते । अलम्भि, अलाभि । यद्यपि सकर्मकाणा कर्मणि प्रत्यय , तथापि द्विकर्मकत्वे नियम , तदुक्तम्—

“गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृषवहाम् ।
बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया ॥१॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां त्यादयो मताः ।” इति

गौः दुह्यते पयश्चैत्रेण, धुक्षीष्ट । अजा ग्रामं नीयते । बोध्यते माणवकं धर्मः, माणवको वा धर्मम् । भोज्यते मात्रा माणवकमोदनः,

माणवको वौदनमित्यादयः । येषामकर्मकाणां योगे कालाद्याधाराणां कर्माकर्म च सञ्ज्ञा युगपद् भवति, तेषां सत्यपि कर्मणि भावे प्रत्ययो भवति। मासमास्यते चैत्रेण कर्मसञ्ज्ञात्वाद् द्वितीया, अकर्मसञ्ज्ञात्वाच्च भावे प्रत्ययः । मास आस्यते इत्यपि भवति, कर्मसञ्ज्ञाया अपि सत्त्वेन सकर्मकत्वात् कर्मण्यपि प्रत्ययः । यदा तु कर्माकर्मसञ्ज्ञाया वैकल्पिकत्वादभवनं तदाऽऽधारत्वाद् अकर्मकत्वेन भाव एव प्रत्यय मासे आस्यते । ण्यन्तात् प्रयोज्ये मासमास्यते माणवकश्चैत्रेण ।

इति भावकर्मप्रक्रिया समाप्ता ।

---

## अथ कर्मकर्तृप्रक्रिया ।

**एकधातौ कर्मक्रिययैकाकर्मक्रिये । ३ । ४ । ८६ ।**

एकस्मिन् धातौ सति पूर्वदृष्टया कर्मस्थया क्रियया एका अभिन्ना सम्प्रति चाकर्मिका क्रिया यस्य कर्तुस्तस्मिन् कर्तरि अर्थात् कर्मकर्तरि धातो ञिक्यात्मनेपदानि भवन्ति यथा पूर्वं विहितानि । चैत्र. ओदनं पचति तत्र सौकर्यात् कर्तृव्यापारो न विवक्ष्यते तदा चैत्रः किमोदनं पचति ? ओदन· स्वयमेव पच्यते इति भवति। एवं क्रियते । क्रियेत । क्रियताम् । अक्रियत । चक्रे । कृषीष्ट । कर्तासे । करिष्यते । अकरिष्यत । अकारि । एकधाताविति किम् ?

चैत्रः ओदनं पचति, ओदनः स्वयमेव सिध्यति। कर्मक्रिययेति किम्? चैत्र असिना च्छिनत्ति, असि स्वयमेव च्छिनत्ति। एकक्रियेति किम्? स्रवत्युदकं कुण्डिका। कुण्डिकाया उदकं स्रवति। अकर्मक्रिय इति किम्? भिद्यमान कुशूल पात्राणि भिनत्ति।

## पचि–दुहेः। ३। ४। ८७।

एकधातौ कर्मस्थक्रियया पूर्वदृष्टया अकर्मिकया वा सकर्मिकया एकक्रिये कर्मकर्तृरूपे कर्तरि आभ्यां धातुभ्यां ञिक्यात्मनेपदानि भवन्ति। पच्यते ओदन स्वयमेव। पच्येत। पच्यताम्। अपच्यत। पेचे। पक्षीष्ट। पक्ता। अपक्ष्यत। अपाचि। दुह्यते गौः स्वयमेव। दुह्येत। दुह्यताम्। अदुह्यत। दुदुहे। धुक्षीष्ट। दोग्धा। धोक्ष्यते। अधोक्ष्यत। अदोहि, अदुग्ध अग्रे विकल्पो वक्ष्यते।

## न कर्मणा ञिच्। ३। ४। ८८।

पचिदुहिभ्या कर्मणा योगे अनन्तरोक्ते कर्मकर्तृरूपे कर्तरि ञिच् न भवति। उदुम्बर फलं स्वयमेव पच्यते, अपक्त। दुहधातोस्तु किरादौ पाठाद् ञिक्यनिषेधेन दुग्धे। धोक्ष्यते। अदुग्ध गौः पयः स्वयमेव। कर्मणेति किम्? अपाचि ओदनः स्वयमेव। अनन्तरोक्ते इति किम्? अपाचि उदुम्बरः फलं वायुना।

## रुधः। ३। ४। ८९।

रुधेरनन्तरोक्ते कर्तरि ञिच् न भवति । अरुद्ध गौः स्वयमेव । अन्यत्र अरोधि गौर्गोपालकेन ।

**स्वरदुहो वा । ३ । ४ । ९० ।**

स्वरान्ताद् दुहेश्चानन्तरोक्ते कर्तरि ञिच् वा भवति। अकृत, अकारि कटः स्वयमेव । अदुग्ध, अदोहि गौः स्वयमेव ।

**णिस्नुश्र्यात्मनेपदाकर्मकात् । ३ । ४ । ९२ ।**

ण्यन्तात् स्नुश्रिभ्यामात्मनेपदेऽकर्मकेभ्यश्च कर्मकर्तरि ञिच् न भवति । मैत्रः चैत्रेणौदनमपीपचत्, ओदनः स्वयमेवापीपचत । प्रास्नोष्ट गौः स्वयमेव । उदशिश्रियत दण्डः स्वयमेव । व्यकृत कटः स्वयमेव ।

**भूषार्थसन्किरादिभ्यश्च ञिक्यौ । ३ । ४ । ९३ ।**

भूषार्थेभ्यः सन्नन्तेभ्यः किरादिभ्यो ण्यादिभ्यश्च कर्मकर्तरि ञिक्यौ न भवतः । अलंकुरुते कन्या स्वयमेव । अलमकृत कन्या स्वयमेव । अचिकीर्षिष्ट कटः स्वयमेव । किरादि– किरते, अकीर्ष्ट पांशुः स्वयमेव। अगीर्ष्ट, गिरते वा ग्रासः स्वयमेव। ण्यादि– कारयते कटः स्वयमेव । चोरयते गौः स्वयमेव। प्रस्नुते गौः स्वयमेव । उच्छ्रयते दण्डः स्वयमेव । आत्मनेपदाकर्मकस्य विकुर्वते सैन्धवाः स्वयमेव ।

**करणक्रियया क्वचित् । ३ । ४ । ९४ ।**

एकधातौ पूर्वदृष्ट्या करणस्थया क्रियया अभिन्नाकर्मक्रिये कर्तरि ञिक्यात्मनेपदानि भवन्ति क्वचित् । परिवारयन्ते कण्टका वृक्षं स्वयमेव । क्वचिदित्यत्र न माध्वसिः छिनत्ति ।

**सृजः श्राद्धे ञिक्यात्मने तथा । ३ । ४ । ८४ ।**

सृज श्रद्धावति कर्तरि ञिक्यात्मनेपदानि भवन्ति, यथा पूर्वं विहितानि । असर्जि, सृज्यते, स्रक्ष्यते मालां धार्मिकः । श्राद्ध इति किम् ? व्यत्यसृष्ट माले मिथुनम् ।

**तपेस्तपःकर्मकात् । ३ । ४ । ८५ ।**

तप.कर्मकात् तपते कर्तरि ञिक्यात्मनेपदानि भवन्ति, तथा । तप्यते, तेपे, अन्वतप्त तप साधुः। तप इति किम् ? उत्तपति स्वर्णं स्वर्णकार· । कर्म इति किम् ? तपः साधुं तपति ।

**कुषिरञ्जेर्व्याप्ये वा परस्मै च । ३ । ४ । ७४ ।**

आभ्यां व्याप्ये कर्तरि शिद्विषये परस्मैपदं वा भवति । तद्योगे च श्यः कुष्यति, कुष्यते वा पाद स्वयमेव। रज्यति, रज्यते वा वस्त्र स्वयमेव । व्याप्ये कर्तरीति किम् ? कुष्णाति पादं रोग. ।

**इति कर्मकर्तृप्रक्रिया समाप्ता ।**

---

# अथ त्यादिविभक्त्यर्थप्रक्रिया ।

**श्रुसद्वस्भ्यः परोक्षा वा । ५ । २ । १ ।**

भूतार्थे वर्तमानेभ्य एभ्यो धातुभ्य परोक्षा वा भवति । उपशुश्राव पक्षे उपाश्रौषीत्, उपाशृणोत् । उपससाद, पक्षे उपासदत्, उपासीदत् । अनूवास पक्षे अन्ववात्सीत्, अन्ववसत् ।

**अद्यतनी । ५ । २ । ४ ।**

भूतार्थाद् धातोरद्यतनी भवति । अकार्षीत् ।

**विशेषाविवक्षाव्यामिश्रे । ५ । २ । ५ ।**

अनद्यतनादिविशेषस्याविवक्षायां व्यामिश्रणे च भूतार्थाद् धातोरद्यतनी भवति । रामो वनमगमत् । अद्य ह्यो वाऽभुक्ष्महि ।

**रात्रौ वसोऽन्त्ययामास्वप्तर्यद्य । ५ । २ । ६ ।**

रात्रौ भूतार्थवृत्तेर्वसतेरद्यतनी भवति, स चेदर्थो यस्यां रात्रौ भूतस्तस्या एवान्त्ययामं व्याप्य कर्तरि अस्वप्तरि सति भवति । अद्यतनेनैवान्त्ययामेनावच्छिन्नेऽद्यतने चेत् प्रयोगोऽस्ति, नाद्यतनान्तरे । अमुत्रावात्सम् । रात्रावन्त्ययामे मुहूर्तमपि स्वापे अमुत्रावसमिति ।

**अनद्यतने ह्यस्तनी । ५ । २ । ७ ।**

आ न्याय्यादुत्थानादा न्याय्याच्च संवेशनादहरुभयत सार्व-

रात्रं वा अद्यतन, तस्मिन्नसति भूतार्थाद् धातोर्ह्यस्तनी भवति। कटमकरोत्।

**ख्याते दृश्ये। ५। २। ८।**

ख्याते—लोकविज्ञाते प्रयोक्तुः शक्यदर्शने भूतानद्यतनेऽर्थे वर्तमानाद् धातोर्ह्यस्तनी भवति। महात्मना गान्धिकमोहनलालेन निर्णीतमसहकारधोरणमुत्तीर्णमकरोत् नागपुरे भारतीया महासभा। अरुणत् जर्मनसम्राट् फ्रान्सम्। ख्यात इति किम्। कटं चकार। दृश्य इति किम्। रुरोध कोणिको विशालाम्।

**अयदि स्मृत्यर्थे भविष्यन्ती। ५। २। ९।**

स्मृत्यर्थे धातावुपपदे सति भूतानद्यतनार्थे वर्तमानाद् धातोर्भविष्यन्ती भवति, न तु यद्योगे। स्मरसि साधो! स्वर्गे स्थास्यामः। अयदि किम्—अभिजानासि मित्र! यत् वाराणस्यामवसाम।

**वाऽऽकाङ्क्षायाम्। ५। २। १०।**

स्मृत्यर्थधातावुपपदे प्रयोक्तुः क्रियान्तराकाङ्क्षायां भूतानद्यतनार्थाद् धातोर्भविष्यन्ती वा भवति। स्मरसि मित्र! काशीपाठशालायां वत्स्यामः, अवसाम वा, तत्र सह व्युत्पत्तिवादं पठिष्यामः, अपठाम वा।

**कृतास्मरणातिनिह्नवे परोक्षा। ५। २। ११।**

कृतस्यापि कार्यस्यास्मरणे सति अत्यन्तनिह्नवे वा गम्ये भूता-

नद्यतनार्थाद् धातोः परोक्षा भवति। सुप्तोऽहं किल विललाप। शत्रुञ्जये त्वयाऽकार्यं कृतम्, नाहं शत्रुञ्जयं जगाम।

**परोक्षे। ५। २। १२।**

भूतानद्यतनपरोक्षार्थाद् धातो परोक्षा भवति। धर्मं दिदेश तीर्थङ्कर॰।

**हशश्वद्युगान्तःप्रच्छ्ये ह्यस्तनी च। ५। २। १३।**

हशब्दप्रयोगे शश्वति च प्रयुक्ते पञ्चवर्षमध्ये प्रच्छ्ये च भूतानद्यतने परोक्षेऽर्थे वर्तमानाद् धातोः ह्यस्तनी परोक्षा च भवति। इति ह चकार, इति ह्यकरोत्। शश्वदकरोद्, शश्वत् चकार। किमगच्छस्त्वं सिद्धगिरिम्? किं जगन्थ त्वं सिद्धगिरिम्?।

**अविवक्षिते। ५। २। १४।**

भूतानद्यतने परोक्षे परोक्षत्वेनाविवक्षितेऽर्थे वर्तमानाद् धातोर्ह्यस्तनी भवति। अहन् कंसं किल वासुदेवः।

**वाऽद्यतनी पुरादौ। ५। २। १५।**

भूतानद्यतने परोक्षे चापरोक्षे चार्थे वर्तमानाद् धातोः पुरादावुपपदे सति अद्यतनी वा भवति। अवात्सुरिह पुरा जैनाः पक्षे अवसन्, ऊषुर्वा। तदाऽभाषिष्ट गौतम, पक्षे अभाषत, बभाषे।

**स्मे च वर्तमाना। ५। २। १६।**

भूतानद्यतनार्थे वर्तमानाद् धातोः स्मे पुरादौ चोपपदे वर्तमाना भवति। पृच्छति स्म प्रश्नान् विजयधर्मसूरिम्। सन्तीह पुरा जिनालयाः।

**ननौ पृष्टोक्तौ सद्वत्। ५। २। १७।**

ननावुपपदे पृष्टस्य प्रतिवचने भूतार्थे वर्तमानाद् धातोः वर्तमानेव वर्तमाना भवति। हे छात्र! किमकार्षीः पाठम्?, ननु करोमि भोः!, पाठं कुर्वन्तं मां पश्यत।

**नन्वोर्वा। ५। २। १८।**

नन्वोरुपपदयोः पृष्टोक्तौ भूतार्थे वर्तमानाद् धातोर्वर्तमाना वा भवति, सा च सद्वद्। किमकार्षीः पट मैत्र!, न करोमि भोः! न कुर्वन्तं मां पश्य, नाकार्षम्। नु करोमि, नु कुर्वाणं मां पश्य, न्वकार्षम्।

**सति। ५। २। १९।**

वर्तमानार्थाद् धातोर्वर्तमाना भवति। अस्ति। पठति। पचति। भक्षयति। अधीमहे। तिष्ठन्ति।

**भविष्यन्ती। ५। ३। ४।**

भविष्यदर्थाद् धातोर्भविष्यन्ती भवति। भोक्ष्यते। गमिष्यति चैत्रः। पक्ष्यते।

**अनद्यतने श्वस्तनी। ५। ३। ५।**

नास्त्यद्यतनो यत्र तस्मिन्, अनद्यतने भविष्यदर्थे वर्तमानाद् धातोः श्वस्तनी भवति। कर्ता। हर्ता। पक्ता। अनद्यतने

किम् ?—अद्य श्वो वा गमिष्यति ग्रामं चैत्रः । ' अनुशोचनेऽपि ' इयं तु कदा गन्ता यैवं पादौ निधत्ते ।

**पुरा-यावतोर्वर्तमाना । ५ । ३ । ७ ।**

अनयोरुपपदयो. भविष्यदर्थाद् धातोर्वर्तमाना भवति । पुरा भुङ्क्ते । यावद् भुङ्क्ते ।

**कदाकर्ह्योर्नवा । ५ । ३ । ८ ।**

अनयोरुपपदयोर्भविष्यदर्थाद् धातोर्वर्तमाना वा भवति । कदा भुङ्क्ते, भोक्ष्यते, भोक्ता । कर्हि भुङ्क्ते, भोक्ष्यते, भोक्ता ।

**किंवृत्ते लिप्सायाम् । ५ । ३ । ९ ।**

स्यादिविभक्त्यन्तस्य डतरडतमान्तस्य च किमो वृत्तं किंवृत्तम्, तस्मिन्नुपपदे प्रष्टुर्लिप्सायां गम्यायां भविष्यदर्थाद् धातोर्वर्तमाना वा भवति । को भवतां भिक्षां ददाति, दास्यति, दाता वा । कतमो भवतां भिक्षां ददाति, दास्यति, दाता वा । किंवृत्त इति किम् ?—भिक्षां दास्यति । लिप्सायामिति किम् ?—क पुरं यास्यति ।

**लिप्स्यसिद्धौ । ५ । ३ । १० ।**

लब्धुमिष्यमाणाद् भक्तादेः फलावाप्तौ गम्यायां भविष्यदर्थाद् धातोर्वर्तमाना वा भवति । यो भिक्षां ददाति, दास्यति, दाता वा; स स्वर्गलोकं याति, यास्यति, याता वा ।

**पञ्चम्यर्थहेतौ । ५ । ३ । ११ ।**

पञ्चम्या अर्थ. प्रषादिस्तस्य हेतुरुपाध्यायागमनादि·, तस्मि-न्नर्थे भविष्यत्कालिके वर्तमानाद् धातोर्वर्तमाना वा भवति । उपाध्यायश्चेदागच्छति, आगमिष्यति, आगन्ता वा, अथ त्वं भगवतीमधीष्व ।

सप्तमी चोर्ध्वमौहूर्तिके । ५ । ३ । १२ ।

मुहूर्तादूर्ध्वं भव ऊर्ध्वमौहूर्तिकः, तस्मिन् पञ्चम्यर्थहेतौ वत्स्र्यत्यर्थे वर्तमानाद् धातोः सप्तमी वर्तमाना च वा भवति ऊर्ध्वं मुहूर्तात् चेदुपाध्याय आगच्छेत् , आगच्छति, आगमिष्यति, आगन्ता वा, अथ त्वं नन्दिमधीष्व ।

सत्सामीप्ये सद्वद् वा । ५ । ४ । १ ।

समीपमेव सामीप्यम्, वर्तमानस्य सामीप्ये भूते भविष्यति चार्थे वर्तमानाद् धातो वर्तमाना इव प्रत्यया वा भवन्ति । कदा वत्स ! आगतोऽसि ?, अयमागच्छामि, आगच्छन्तमेव मां वित्त । पक्षे अयमागमम् , आगच्छम् । कदा चैत्र ! गमिष्यसि ?, एष गच्छामि, गच्छन्तमेव मां जानीत । पक्ष गमिष्यामि, गन्तास्मि, गमिष्यन्तं मां जानीत ।

भूतवच्चाशंस्ये वा । ५ । ४ । २ ।

अनागतस्यार्थस्य प्राप्तुमिच्छा आशंसा तद्विषय आशंस्य·, तदर्थाद् धातोर्भूतवत् सद्वच्च प्रत्यया भवन्ति । उपाध्यायश्चेदागमत् ; एते तर्कमध्यगीष्महि । उपाध्यायश्चेदागच्छति; एते तर्कमधीमहे ।

पक्षे उपाध्यायश्चेदागमिष्यति, आगन्ता वा, एते तर्कमध्येष्यामहे, अध्येतास्महे वा ।

**क्षिप्राशंसार्थयोर्भविष्यन्ती–सप्तम्यौ । ५ । ४ । ३ ।**

क्षिप्राशंसार्थयोरुपपदयोराशंस्यार्थाद् धातोः यथासङ्ख्यं भविष्यन्तीसप्तम्यौ भवतः । उपाध्यायश्चेद् आगच्छति, आगमत्, आगमिष्यति, आगन्ता वा, तदा शीघ्रं क्षिप्रम् आशु एते सिद्धान्तमध्येष्यामहे । उपाध्यायश्चेदागच्छति, आगमिष्यति, आगमत्, आगन्ता वा, आशंसे, सम्भावये युक्तोऽधीयीय ।

**सम्भावने सिद्धवत् । ५ । ४ । ४ ।**

हेतोः सामर्थ्यस्य श्रद्धा सम्भावनम्, तस्मिन् विषयेऽसिद्धेऽपि वस्तुनि सिद्धवत् प्रत्यया भवन्ति । समये चेत् प्रयत्नोऽभूद् उदभूवन् विभूतयः ।

**नानद्यतनः प्रबन्धासत्त्योः । ५ । ४ । ५ ।**

धात्वर्थस्य प्रबन्धे आसत्तौ च गम्यमानायां धातोरनद्यतनविहितः प्रत्ययो न भवति । यावज्जीवं भृशमन्नमदात्, दास्यति वा । यदिदं पर्युषणापर्व अतिक्रान्तमेतस्मिन् जिनोत्सवः प्रावर्तिष्ट । येयं पौर्णमासी आगामिनी, एतस्यां जिनकल्याणकोत्सवः प्रवर्तिष्यते ।

**एष्यत्यवधौ देशस्यार्वाग्भागे । ५ । ४ । ६ ।**

देशस्य योऽवधिस्तद्वाचिन्युपपदे देशस्यैवार्वागभागे य

एष्यदर्थस्तत्र वर्तमानाद् धातोः अनद्यतनविहितः प्रत्ययो न भवति। योऽयमध्वा गन्तव्यः, आ शत्रुञ्जयात् तस्य यदवरं वलभ्यास्तत्र द्विर्भोक्ष्यामहे मोदकान्।

**कालस्यानहोरात्राणाम्। ५। ४। ७।**

कालस्य योऽवधिस्तद्वाचिन्युपपदे कालस्यैवार्वाग्भागे यो भविष्यदर्थस्तस्मिन् वर्तमानाद् धातोरनद्यतनविहितः प्रत्ययो न भवति। न चेत् सोऽर्वाग्भागोऽहोरात्राणाम्। योऽयमागामी संवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र जिनपूजां करिष्यामः। अनहोरात्राणामिति किम्?—योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्र युक्ता द्विरध्येतास्महे।

**परे वा। ५। ४। ८।**

कालस्य योऽवधिस्तद्वाचिन्युपपदे कालस्यैवानहोरात्रसम्बन्धिनि परे भागे य एष्यदर्थस्तद्वृत्तेर्धातोरनद्यतनविहितः प्रत्ययो वा न भवति। आगामिन संवत्सरस्याग्रहायण्याः परस्ताद् द्विः भाष्यमध्येष्यामहे, अध्येतास्महे वा।

**सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः। ५। ४। ९।**

सप्तम्या अर्थोः निमित्तं हेतुफलकथनादिसामग्री। कुतश्चिद् वैगुण्यात् क्रियाऽनभिनिर्वृत्तौ सत्यामेष्यदर्थाद् धातोः सप्तम्यर्थे क्रियातिपत्तिर्भवति। असहकारः सम्पूर्णतयाऽभविष्यद् न परदेशिराज्यमस्मिन् वर्षेऽस्थास्यत्।

**भूते । ५ । ४ । १० ।**

भूतार्थाद् धातोः क्रियातिपत्तौ सत्यां सप्तम्यर्थे क्रियातिपत्तिर्भवति । दृष्टो मयाऽन्नार्थी चंक्रम्यमाणस्तव पुत्रोऽपरश्चातिथ्यर्थी; यदि स तेन दृष्टोऽभविष्यदुताभोक्ष्यत, अप्यभोक्ष्यत ।

**वोतात् । ५ । ४ । ११ ।**

' सप्तम्युताप्योर्बाढे ' इति सूत्रे यदुतशब्दकथनं तत. प्राक् सप्तम्यर्थे क्रियातिपत्तौ सत्यां भूतार्थाद् धातोर्वा क्रियातिपत्तिर्भवति। कथं नाम संयतः सन्ननागाढे तत्र भवान् अब्रह्म असेविष्यत, धिग् गर्हामहे । पक्षे कथं सेवेत, धिग् गर्हामहे । उतात् प्रागिति किम्?— कालो यदभोक्ष्यत भवान् ।

**क्षेपेऽपिजात्वोर्वर्तमाना । ५ । ४ । १२ ।**

अपिजात्वोरुपपदयोः क्षेपे गम्ये धातोर्वर्तमाना भवति । अपि तत्रभवान् जन्तून् हिनस्ति । जातु तत्रभवान् भूतानि हिनस्ति, धिग् गर्हामहे ।

**कथमि सप्तमी च वा । ५ । ४ । १३ ।**

कथंशब्दे उपपदे क्षेपे गम्ये धातो सप्तमी वर्तमाना च वा भवति। कथं नाम तत्र भवान् विदेशभवं वस्त्रं धारयेत्, धारयति वा, गर्हामहे अन्याय्यमेतत् । पक्षे अदीधरत्, अधारयत्, धारयाञ्चकार, धारयिता, धारयिष्यति । अत्र सप्तमीनिमित्तमस्तीति भूते क्रियातिपतने वा क्रियातिपत्तिः । कथं नाम तत्रभवान् विदेशभवं

वस्त्रमधारयिष्यत् । पक्षे यथाप्राप्तम् । भविष्यति क्रियातिपतने तु नित्यमेव क्रियातिपत्ति । कथं नाम तत्रभवान विदेशभवं वस्त्रमधारयिष्यत् ।

**किंवृत्ते सप्तमीभविष्यन्त्यौ । ५ । ४ । १४ ।**

किंवृत्ते उपपदे क्षेपे गम्ये धातोः सप्तमीभविष्यन्त्यौ भवत । किं तत्रभवान् अनृतं ब्रूयात्, वक्ष्यति वा । को नाम, कतरो नाम, कतमो नाम, यस्मै तत्रभवाननृतं ब्रूयात्, वक्ष्यति वा ।

**अश्रद्धाऽमर्षेऽन्यत्रापि । ५ । ४ । १५ ।**

अकिंवृत्ते किंवृत्ते चोपपदेऽश्रद्धाऽमर्षयोः गम्यमानयोः सप्तमीभविष्यन्त्यौ भवतः । न श्रद्दधे, न सम्भावयामि तत्रभवान् नाम अदत्तं गृह्णीयात्, ग्रहीष्यति वा । न श्रद्दधे किं तत्रभवान् अदत्तमाददीत, आदास्यते वा । न मर्षयामि, न क्षमे तत्रभवानदत्तं गृह्णीयात्, ग्रहीष्यति वा ।

**किंकिलास्त्यर्थयोर्भविष्यन्ती । ५ । ४ । १६ ।**

किंकिले अस्त्यर्थे चोपपदेऽश्रद्धाऽमर्षयोर्गम्यमानयोः भविष्यन्ती भवति । न श्रद्दधे, न संभवयामि किंकिल नाम तत्रभवान् परदारान् उपकरिष्यते । न श्रद्दधे, न मर्षयामि अस्ति नाम, भवति नाम, विद्यते नाम तत्रभवान् परदारानुपकरिष्यते ।

**जातु-यद्-यदा-यदौ सप्तमी । ५ । ४ । १७ ।**

एषूपपदेषु अश्रद्धाऽमर्षयोः धातोः सप्तमी भवति। न श्रद्दधे, न क्षमे जातु तत्रभवान् सुरां पिबेत्। एवं यद् यदा यदि सुरां पिबेत्।

**क्षेपे च यच्च-यत्रे। ५। ४। १८।**

यच्चयत्रयोरुपपदयोः क्षेपे अश्रद्धाऽमर्षयोश्च धातोः सप्तमी भवति। यच्च यत्र वा तत्रभवान् अस्मान् आक्रोशेत्। न श्रद्दधे, न क्षमे यच्च यत्र वा तत्रभवान् परपरिवादं कथयेत्।

**चित्रे। ५। ४। १९।**

आश्चर्ये गम्ये यच्च-यत्रयोरुपपदयोः सप्तमी धातोः भवति। चित्रमाश्चर्यं यच्च यत्र वा तत्रभवान् असेव्यं सेवेत।

**शेषे भविष्यन्त्ययदौ। ५। ४। २०।**

यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रे गम्ये धातोः भविष्यन्ती भवति, न तु यदिशब्दे। चित्रमाश्चर्यमन्धो नाम गिरिमारोक्ष्यति।

**सप्तम्युताप्योर्बाढे। ५। ४। २१।**

बाढार्थयोरुताप्योरुपपदयोः धातोः सप्तमी भवति। उत कुर्याद् अपि वा। बाढ इति किम्?—उत दण्डः पतिष्यति। अपिधास्यति द्वारम्।

**सम्भावनेऽलमर्थे तदर्थानुक्तौ। ५। ४। २२।**

अलमोऽर्थे शक्तौ यत् सम्भावनं तस्मिन् गम्ये अलमर्थार्थस्याप्रयोगे धातोः सप्तमी भवति। अपि मासमुपवसेत्। अलमर्थ इति

किम् ?—निदेशास्थायी मे चैत्रः प्रायेण यास्यति । तदर्थानुक्ताविति किम् ?—शक्तः सिद्धपुत्रो धर्मं करिष्यति ।

**अयदि श्रद्धाधातौ नवा । ५ । ४ । २३ ।**

सम्भावनार्थे धातावुपपदेऽलमर्थविषये सम्भावने गम्ये धातोः सप्तमी वा भवति, न तु यच्छब्दे । श्रद्धे, संभावयामि भुञ्जीत भवान्, पक्षे भोक्ष्यते, अभुङ्क्त, अभुक्त। अयदीति किम् ? सम्भावयामि यद् भुञ्जीत भवान् । श्रद्धाधाताविति किम् ?—अपि शिरसा पर्वतं भिन्द्यात् ।

**सतीच्छार्थात् । ५ । ४ । २४ ।**

सदर्थे इच्छार्थाद् धातोः सप्तमी वा भवति। इच्छेत्, इच्छति।

**वर्त्स्यति हेतुफले । ५ । ४ । २५ ।**

हेतुभूते फलभूते च भविष्यत्कालार्थे वर्तमानाद् धातोः सप्तमी वा भवति । यदि गुरूनुपासीत शास्त्रान्तं गच्छेत् । यदि गुरूनुपासिष्यते, शास्त्रान्तं सगमिष्यति । वर्त्स्यतीति किम् ? दक्षिणेन चेद् याति शकटं न पर्याभवति ।

**कामोक्तावकच्चिति । ५ । ४ । २६ ।**

इच्छाप्रवेदनगम्ये सप्तमी भवति, न तु कच्चित्प्रयोगे। कामो मे भुञ्जीत भवान्। अकच्चितीति किम् ? कच्चिद् जीवति मे माता ।

**इच्छार्थे सप्तमीपञ्चम्यौ । ५ । ४ । २७ ।**

इच्छार्थे धातावुपपदे कामोक्तौ गम्यमानायां धातोः सप्तमी-पञ्चम्यौ भवतः । इच्छामि भुञ्जीत, भुङ्क्तां वा भवान् ।

**विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थने । ५ । ४ । २८ ।**

विध्यादिविशिष्टेषु कर्तृकर्मभावेषु प्रत्ययार्थेषु धातोः सप्तमीपञ्चम्यौ भवतः । विधिः—क्रियायां प्रेरणा । कटं कुर्यात्, करोतु भवान् । प्रेरणायामेव यस्यां प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम् द्विसन्ध्य-मावश्यकं कुर्यात्, करोतु वा । यत्र प्रेरणायामेव प्रत्याख्याने कामचारस्तदामन्त्रणम् । इह आसीत, आस्तां भवान् । सत्कारपूर्विका प्रेरणाऽधीष्टम् व्रतं रक्षतु, रक्षेत् । संप्रश्नः—सम्प्रधारणा । किन्नु भोः पूज्याः ! अहं व्याकरणमधीयीय, अध्ययै, उत सिद्धान्तमधीयीय, अध्ययै । प्रार्थनं याञ्चा । प्रार्थना मे तर्कमधीयीय, अध्ययै ।

**प्रैषानुज्ञाऽवसरे कृत्य-पञ्चम्यौ । ५ । ४ । २९ ।**

प्रैषादिविशिष्टे कर्त्रादावर्थे कृत्याः पञ्चमी च भवन्ति । न्य-त्कारपूर्विका प्रेरणा प्रैषः । भवता खलु कटः कार्यः । भवान् कटं करोतु । भवान् हि प्रेषितोऽनुज्ञातः, भवतोऽवसरः कटकरणे ।

**सप्तमी चोर्ध्वमौहूर्तिके । ५ । ४ । ३० ।**

प्रैषादिषु गम्येषु ऊर्ध्वमौहूर्तिके च वर्तमानाद् धातोः सप्तमी-पञ्चम्यौ कृत्याश्च भवन्ति । ऊर्ध्वं मुहूर्तात् कटं कुर्यात्, करोतु, कटः कृत्यश्च । भवान् हि प्रेषित, अनुज्ञातः, भवतोऽवसरः कटकरणे ।

**स्मे पञ्चमी । ५ । ४ । ३१ ।**

स्म उपपदे प्रैषादिषु गम्येषु ऊर्ध्वमौहूर्तिकाद् धातोः पञ्चमी भवति । ऊर्ध्वं मुहूर्ताद् भवान् कटं करोतु स्म । भवान् हि प्रेषितोऽनुज्ञात, भवतोऽवसर. कटकरणे ।

**अधीष्टौ । ५ । ४ । ३२ ।**

स्मे उपपदेऽध्येषणायां गम्यमानायां धातो· पञ्चमी भवति । अङ्ग स्म हे विद्वन् ! अणुव्रतानि रक्ष ।

**सप्तमी यदि । ५ । ४ । ३४ ।**

यच्छब्दप्रयोगे कालादिषूपपदेषु धातोः सप्तमी भवति । कालो यद् अधीयीत भवान् । वेला यद् भुञ्जीत । समयो यच्च छयीत ।

**आशिष्याशीः-पञ्चम्यौ । ५ । ४ । ३८ ।**

आशीर्विशिष्टार्थाद्धातोराशी – पञ्चम्यौ भवत । जीयात् भवान् । जयतु राजन् । आशिषीति किम् ? चिरं जीवति सिद्धपुत्र ।

**माङ्यद्यतनी । ५ । ४ । ३९ ।**

माङि उपपदे धातोरद्यतनी भवति । मा कार्षीत् । मा गमः ।

**सस्मे ह्यस्तनी च । ५ । ४ । ४० ।**

स्मयुक्ते माङि उपपदे धातो ह्यस्तन्यद्यतन्यौ भवत. । मा स्म करोत्, मा स्म कार्षीत् ।

**धातोः सम्बन्धे प्रत्ययाः । ५ । ४ । ४१ ।**

धात्वर्थानां सम्बन्धे विशेषणविशेष्यभावे सति अयथाकालमपि

प्रत्यया भवन्ति । विश्वदृश्वा अस्याः पुत्रो भविता । भावि कृत्य-मासीत् । गोमान् आसीत् ।

**भृशाभीक्ष्ण्ये हिस्वौ यथाविधि तध्वमौ च तद्युष्मदि ।५।४।४२।**

भृशाभीक्ष्ण्ये सर्वकालार्थे वर्तमानाद् धातो सर्वविभक्तिसर्ववच-नविषये हिस्वौ भवत', यस्मादेव धातोर्यस्मिन्नेव कारके हिस्वौ तत्का-रकविशिष्टस्यैव तस्यैव धातो' अनुप्रयोगे सति । तथा पञ्चम्या एव तध्वमौ तयोः सम्बन्धिनि बहुत्वविशिष्टे युष्मदर्थे हिस्वौ च भवतः, यथाविधि धातोः सम्बन्धेऽनुप्रयोगे सति । लुनीहि लुनीहि इत्येवायं लुनाति, इमौ लुनीत , इमे लुनन्ति। त्वं लुनासि, युवां लुनीथ , यूयं लुनीथ । पक्षे लुनीत लुनीतेति यूयं लुनीथ । अहं लुनामि, आवां लुनीव , वयं लुनीम. । लुनीहि लुनीहि इत्योमयं लविष्यति, अला-वीदित्यादीन्यपि । अधीष्व अधीष्व इत्येवायमधीते, अधीयाते, अधीयते । अधीषे, अधीयाथे । युष्मद्बहुत्वे तु अधीष्व अधीष्व इति यूयमधीध्वे वा अधीध्वमधीध्वमिति यूयमधीध्वे इति प्रयोग-द्वयम् । अधीये अधीवहे अधीमहे । यथाविधीति किम्' लुनीहि लुनीहीत्येवायं लुनीते छिनत्ति लूयते इति धातो सम्बन्धे न भवति।

**प्रचये नवा सामान्यार्थस्य ।५।४।४३।**

धात्वर्थानां समुच्चये गम्ये सामान्यार्थस्य धातो. सम्बन्धे सति धातोः परौ हिस्वौ तध्वमौ च तद्युष्मदि वा भवत'। व्रीहीन्

वप, लुनीहि, पुनीहि इत्येव यतते यत्यते वा। सूत्रमधीष्व, निर्युक्तिमधीष्व, भाष्यमधीष्व इति अधीते, पठ्यते। पक्षे सूत्रमधीते, निर्युक्तिमधीते, भाष्यमधीते इत्येव, अधीते पठ्यते। व्रीहीन् वपत लुनीत पुनीतेत्येव यतध्वे। व्रीहीन् वप लुनीहि पुनीहीत्येव चेष्टध्वे पक्षे व्रीहीन् वपथ लुनीथ पुनीथ इत्येव यतध्वे। सूत्रमधीध्वम्, निर्युक्तिमधीध्वम्, चूर्णिमधीध्वमित्येवाधीध्वे पक्षे सूत्रमधीध्वे, निर्युक्तिमधीध्वे, भाष्यमधीध्वे इत्येव अधीध्वे। सामान्यार्थस्येति किम्? व्रीहीन् वप लुनीहि पुनीहि इत्येव वपति लुनाति पुनातीति मा भूत्।

इति विभक्त्यर्थप्रक्रिया समाप्ता।



इत्याख्यातप्रक्रिया।

इति समाप्ता श्रीधर्मदीपिकाया द्वितीया वृत्तिः।



नमो नमः श्रीप्रभुधर्मसूरये ।

# अथ कृदन्तप्रक्रिया ।

## अथ कृत्प्रत्ययान्तर्गता कृत्यप्रक्रिया ।

**आ तुमोऽत्यादिः कृत् । ५ । १ । १ ।**

तुमभिव्याप्य त्यादिं वर्जयित्वा ये प्रत्ययास्ते कृत्संज्ञका भवन्ति । घनघात्यः ।

**ऋवर्णव्यञ्जनान्ताद् घ्यण् । ५ । १ । १७ ।**

ऋवर्णान्ताद् व्यञ्जनान्ताच्च धातोः घ्यण् भवति । कृत्यत्वात् 'तत्साप्यानाप्याद्' इति कर्मणि भावे च क्रियते यत् तत् कार्यम् । पच्यते इति पाक्यम् '*क्तेऽनिटश्चजोः कगौ' इति सूत्रेण चस्य कत्वम् ।

**पाणिसमवाभ्यां सृजः । ५ । १ । १८ ।**

आभ्यां सृज्धातोः घ्यण् भवति । पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः, समवसर्ग्या ।

**उवर्णादावश्यके । ५ । १ । १९ ।**

उवर्णान्तादावश्यके गम्ये घ्यण् भवति । अवश्यं भूयते अवश्यभाव्यम् ।

**आसुयुवपिरपिलपित्रपिडिपिदभिचम्यानमः । ५ । १ । २० ।**

आङ्पूर्वाभ्यां सुन्नमाभ्यां यौत्यादेश्च ण्यण् भवति । आसाव्यम् । पाव्यम् । वाप्यम् । राप्यम् । लाप्यम् । त्राप्यम् । डेप्यम् । दाम्यम् । आचाम्यम् ।

**वाऽऽधारेऽमावस्या । ५ । १ । २१ ।**

अमापूर्वाद् वस्धातो॰ आधारे घ्यण् भवति, ह्रस्वश्च वा । अमा सह वसतः सूर्याचन्द्रमसौ यस्यां तिथौ सा अमावस्या, अमावास्या वा तिथि॰ ।

**संचाय्यकुण्डपाय्यराजसूयं क्रतौ । ५ । १ । २२ ।**

एते क्रतावर्थे घ्यणप्रत्ययान्ता निपात्यन्ते । संचाय्यः । कुण्डेन पीयते यस्मिन् स कुण्डपाय्यः । राजभि॰ सूयते राजसूयः यज्ञः ।

**प्रणाय्यो निष्कामासम्मते । ५ । १ । २३ ।**

प्रपूर्वाद् नयते॰ घ्यणआयादेशश्च भवत॰, निष्कामेऽसम्मते चार्थे । प्रणाय्यः शिष्य, चौरो वा ।

**धाय्यापाय्यसानाय्यनिकाय्यमृग्मानहविर्निवासे ।५।१।२४।**

एते ऋगाद्यर्थेषु घ्यणन्ता यथासख्यं निपात्यन्ते । धाय्या ऋक् । पाय्यं मानम् । सानाय्यं हविः । निकाय्यो निवास ।

**परिचाय्योपचाय्यानाय्यसमूह्यचित्यमग्नौ । ५ । १ । २५ ।**

एते अग्नावर्थे निपात्यन्ते । परिचाय्यः, उपचाय्य, आनाय्यः, समूह्यः, चित्योऽग्निः ।

**याज्या दानर्चि । ५ । १ । २६ ।**

करणेदानर्च्यभिधेयायां यज्धातोः ण्यण् निपात्यते । याज्या ।

**तव्यानीयौ । ५ । १ । २७ ।**

धातोः परौ भावे कर्मणि एतौ भवत । कर्तव्यम् । हर्तव्यः पठनीयम् ।

**य एच्चातः । ५ । १ । २८ ।**

स्वरान्ताद् धातो य प्रत्ययो भवति, आकारस्य चैकारः । चेयम् । हेयम् । धेयम । देयम् । पेयम्

**शकितकिचतियतिशसिसहियजिभाजिपवर्गात् । ५ । १ । २९ ।**

एभ्य पवर्गान्तेभ्यश्च धातुभ्यो यो भवति । शक्यः । तक्यम् । चत्य । यत्य. । शस्यः । सह्यम् । यज्यम । भज्यम् तप्यम् । गम्यः ।

**क्षय्य-जय्यौ शक्तौ । ४ । ३ । ९० ।**

एतौ शक्तौ गम्यमानाया यान्तौ निपात्येते । क्षय्यो व्याधिः । जय्यः शत्रु । शक्ताविति किम् ? क्षेयं पापम् । जेयं मनः

**क्रय्यः क्रयार्थे । ४ । ३ । ९१ ।**

क्रयार्थे क्रय्य इति निपात्यते । क्रय्य. गौः । क्रय्यो इति किम् ? क्रेयं धान्यं न च प्रसारितम् ।

**यममदगदोऽनुपसर्गात् । ५ । १ । ३० ।**

उपसर्गरहितेभ्य एभ्यो यः प्रत्ययो भवति । यम्यम् । मद्यम् । गद्यम् ।

**चरेराङस्त्वगुरौ । ५ । १ । ३१ ।**

अनुपसर्गाच्चरतेः आङ्पूर्वात् तु अगुरावर्थे यो भवति । चर्यः । आचर्यो देशः । गुरौ तु आचार्यः ।

**वर्योपसर्यावद्यपण्यमुपेयर्तुमतीगर्ह्यविक्रेये । ५ । १ । ३२ ।**

उपेयादिष्वर्थेष्वेते यथासंख्यं निपात्यन्ते । वर्या कन्या । उपसर्या गौः । अवद्यं गर्ह्यम् । पण्या गौः ।

**स्वामिवैश्येऽर्यः । ५ । १ । ३३ ।**

स्वामिवैश्ययोर्वाच्ययोः ऋधातोः य प्रत्ययो भवति । अर्यः स्वामी, वैश्यः । आर्योऽन्यः ।

**वह्यं करणे । ५ । १ । ३४ ।**

वहेः करणे यो भवति । वह्यं शकटम् । अन्यत्र वाह्यम् ।

**नाम्नो वदः क्यप् च । ५ । १ । ३५ ।**

अनुपसर्गाद् नाम्नः पराद् वदतेः क्यप्यौ भवतः । ब्रह्मोद्यम् । ब्रह्मवद्यम् । 'भावे हत्याभूयौ निपात्यौ' ब्रह्महत्या, देवभूयम् ।

**अग्निचित्या । ५ । १ । ३७ ।**

अग्नेः परात् स्त्रीभावे चिनोतेः क्यप् भवति । अग्निचित्या ।

**खेय-मृषोद्ये । ५ । १ । ३८ ।**

एतौ क्यबन्तौ साधू भवतः । खेयम् । मृषा उद्यते मृषोद्यम् ।

**कुप्याभिद्योध्यसिध्यतिष्यपुष्ययुग्याज्यसूर्यं नाम्नि । ५ । १ । ३९ ।**

एते सञ्ज्ञायां क्यबन्ता निपात्यन्ते। कुप्यं धनम्। भिद्यः उद्ध्य.। सिध्यः। तिष्यः। पुष्यः। युग्यं वाहनम्। आज्यं घृतम्। सूर्यो रविः।

**दृवृग्स्तुजुषेतिशासः। ५। १। ४०।**

एभ्यः क्यब् भवति। आदृत्य। आवृत्य.। स्तुत्यः। जुष्य। इत्यः। शिष्य।

**ह्रस्वस्य तः पित्कृति। ४। ४। ११३।**

ह्रस्वान्तस्य धातोः पिति कृति परे तोऽन्तो भवति। तथा चोदाहृतानि।

**ऋदुपान्त्यादकृपिचृदृचः। ५। १। ४१।**

कृपिचृतिऋचिवर्जिताद् ऋदुपान्त्याद् धातो क्यब् भवति। वृत्यम्। गृध्यम्। वृध्यम्। अकृपीत्यादि किम्? कल्प्यम्। चर्त्यम्। अर्च्यम्।

**कृवृषिमृजिशंसिगुहिदुहिजपो वा। ५। १। ४२।**

एभ्यः क्यब् वा भवति। कृत्यं, कार्यम्। वृष्यं, वर्ष्यम्। मृज्यं, मार्ग्यम्। शस्यं, शंस्यम्। गुह्यं, गोह्यम्। दुह्यं, दोह्यम्। जप्यं, जाप्यं वा।

**जिविपून्यो हलिमुञ्जकल्के। ५। १। ४३।**

जयतेः विपूर्वाभ्यां पूनीभ्यां च यथासंख्यं हलिमुञ्जकल्करूपेषु कर्मसु वाच्येषु क्यब् भवति। जित्यो हलिः। विपुयो मुञ्जः। विनीय. कल्क.।

18

**पदास्वैरिबाह्यापक्ष्ये ग्रहः । ३ । १ । ४४ ।**

एष्वर्थेषु वाच्येषु गृह्णातेः क्यप् भवति । प्रगृह्यं पदम् । गृह्या परतन्त्रा । ग्रामगृह्या बाह्या इत्यर्थः । गुणगृह्या गुणपक्ष्या इत्यर्थः ।

**भृञोऽसञ्ज्ञायाम् । ३ । १ । ४५ ।**

असञ्ज्ञाया भृञ क्यप् भवति । भृत्यो योज्यः । संज्ञायां तु भार्या पत्नी ।

**समो वा । ३ । १ । ४६ ।**

सम्पूर्वाद् भृञः क्यप् वा भवति । सम्भृत्यः, सम्भार्यः ।

**ते कृत्याः । ३ । १ । ४७ ।**

घ्यण् तव्य अनीय य क्यप् एते प्रत्यया कृत्यसञ्ज्ञका भवन्ति । एते सकर्मकात् कर्मणि, अकर्मकादविवक्षितकर्मकाच्च भावे भवन्ति, तथैवोदाहृता ।

इति कृत्प्रत्ययान्तर्गता कृत्यप्रक्रिया समाप्ता ।

---

## अथ कृत्यभिन्नकृत्प्रत्ययप्रक्रिया ।

### बहुलम् । ५ । १ । २ ।

निर्दिष्टादर्थादन्यस्मिन्नर्थे कृत्प्रत्यया बहुल भवन्ति । पादाभ्यां ह्रियते पादहारक । मुह्यते आत्माऽनेन मोहनीयं कर्म । सम्प्रदीयतेऽस्मै सम्प्रदानम् ।

### कर्तरि । ५ । १ । ३ ।

अर्थविशेषोक्ति विना कृत्प्रत्या कर्तरि वेदितव्या । करोतीति कर्ता, कारकः ।

### व्याप्ये घुरकेलिमकृष्टपच्यम् । ५ । १ । ४ ।

घुर–केलिमौ प्रत्ययौ कृष्टपच्यश्च व्याप्ये कर्तरि भवन्ति । भज्यतं स्वयमेवेति भङ्गुर काष्टम् । भिदुरम् । विदुरः । पच्यन्ते स्वयमेवेति पचेलिमा माषा । भिदेलिमा । कृष्टे स्वयमेव पच्यन्त इति कृष्टपच्याः शालय । 'सगतेऽर्थे अजर्यं निपात्यम्' अजर्यमार्यसंगतम्, अन्यत्र अजर पट ।

### रुच्याव्यथ्यवास्तव्यम् । ५ । १ । ६ ।

एते कर्तरि निपात्यन्ते । रोचते इति रुच्यो धर्मः । न व्यथते इति अव्यथ्यो मुनिः । वसतीति वास्तव्य ।

### भव्यगेयजन्यरम्यापात्याप्लाव्यं नवा । ५ । १ । ७ ।

एते कर्तरि वा निपात्यन्ते। भवतीति भव्यः, पक्षे भव्यमनेन। गायनीति गेय साम्नाम्, पक्षे गेयानि सामानि। एवं जन्यः, जन्यमनेन। रम्य, रम्यमनेन। आपात्यः, आपात्यमनेन। आप्लाव्यः, आप्लाव्यमनेन।

**प्रवचनीयादयः। ५। १। ८।**

एतेऽनीयप्रत्ययान्ताः कर्तरि वा निपात्यन्ते। प्रवक्तीति प्रवचनीयो गुरु शास्त्रस्य, पक्षे प्रोच्यते इति प्रवचनीयं शास्त्रं गुरुणा। एवमुपस्थानीय शिष्य गुरो, उपस्थानीयो गुरु शिष्येण।

**श्लिषशीङ्स्थाऽऽसवसजनरुहजॄभजेः क्त। ५। १। ९।**

एभ्यः क्तप्रत्ययः कर्तरि वा भवति। आश्लिष्टः चैत्रः कान्ताम्, आश्लिष्टा कान्ता चैत्रेण। अतिशयितो गुरुं शिष्यः, अतिशयितो गुरुः शिष्येण। उपस्थितो गुरुं शिष्यः, उपस्थितो गुरु शिष्येण। उपासिता गुरु शिष्या, शिष्यैरुपासितो गुरु। अनूषिता गुरुं शिष्या, शिष्यैरनूषितो गुरु। ते तामनुजाताः, तैः साऽनुजाता। चैत्रोऽश्वमारूढ, चैत्रेणाश्व आरूढ। ते कामुकास्तामनुजीर्णाः, तै साऽनुजीर्णा। ते वनं विभक्ताः, तै वनं विभक्तम्।

**आरम्भे। ५। १। १०।**

आरम्भार्थाद् धातोः भूतादौ य क्त स कर्तरि वा भवति। ते कटं प्रकृताः, पक्षे तै. कटः प्रकृतः।

**गत्यर्थाकर्मकपिबभुजेः । ५ । १ । ११ ।**

भूतादौ य क्त स एभ्य. कर्तरि वा भवति । स ग्रामं गतः । असौ आसित' । ते पय' पीता । तेऽन्नं भुक्ता । पक्षे तेन ग्रामो गत इत्यादि ।

**अद्यर्थाच्चाधारे । ५ । १ । १२ ।**

आहारार्थाद गत्यर्थादेश्च य क्त' स आधारे वा भवति । इदमेषां जग्धम् । इदमेषां यातम् । इदमेषां शयितम् । इदमेषामासितम् । इदं गवां पीतम् । इदं तेषां भुक्तम् । पक्षे तैरस्मिन् जग्धम् । एतैरस्मिन् यातम् । एभिरस्मिन् शयितम्, आसितम् । गोभिरस्मिन् पीतम् । तैरस्मिन् भुक्तम । गत्यर्थादीनां पक्षे कर्तर्यपि भवनात् एतेऽस्मिन् याता । एतेऽस्मिन् शयिता । गावोऽस्मिन् भुक्ता इत्यादि ।

**भीमादयोऽपादाने । ५ । १ । १४ ।**

भीमादय शब्दा अपादाने निपात्यन्ते । बिभेति अस्मादिति भीम, भयानक ।

**असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः । ५ । १ । १६ ।**

एतत्सूत्रादारभ्य 'स्त्रियां क्ति' इति सूत्रात् प्राग् योऽपवादस्तद्विषये असरूप उत्सर्गोऽपि प्रत्ययो वा भवति । अवश्यलाव्यम्, अवश्यलवितव्यम् ।

**णक-तृचौ । ५ । १ । ४८ ।**

धातो. परावेतौ भवत । करोतीति कारक, कर्ता । हारक. । खादक । पाचक । हर्ता । खादिता । पक्ता ।

अर्हे तृच् । ५ । ४ । ३७ ।

अर्हे कर्तरि धातोस्तृच् भवति । भवान् छेदसूत्रस्य वोढा । कन्याया वोढा ।

अच् । ५ । १ । ४९ ।

धातो. कर्तरि अच् भवति । कर । हर । पच । भव: ।

णिन् चावश्यकाधमर्ण्ये । ५ । ४ । ३६ ।

अवश्य भाव आवश्यकम्, ऋणेऽधम अधमर्णस्तस्य भाव आधमर्ण्यम् । आवश्यकाऽऽधमर्ण्ययो. गम्यमानयो धातो: कर्तरि णिन् कृत्याश्च भवन्ति। अवश्यं करोतीति कारी। हारी। अवश्यंकारी । अवश्यगेय साम्नान् । शत दायी । सहस्र दायी ।

एभ्यो धातुभ्य कर्तर्यन् प्रत्ययो भवति । लेटीति लेह. । शेष: ।

अचि । ३ । ४ । १५ ।

अचि प्रत्यये परे यङो लुप् भवति । चेच्य: । नेन्य: ।

न वृद्धिश्चाविति विङल्लोपे । ४ । ३ । ११ ।

अविति प्रत्यये परे य. कितो ङितश्च लोपस्तस्मिन् सति

गुणवृद्धी न भवतः । नेन्य. । चेच्यः । मरीमृजः । 'ब्रूगोऽचि ब्रुवादेशो वक्तव्य.' ब्राह्मणब्रुवः ।

नन्द्यादिभ्योऽनः । ५ । १ । ५२ ।

एभ्यो गणदृष्टेभ्यः कर्त्तर्यन प्रत्ययो भवति । नन्दनः । वाशन । सहन. । संक्रन्दन । सर्वदमन । नर्द्दन. ।

ग्रहादिभ्यो णिन् । ५ । १ । ५३ ।

एभ्य· कर्तरि णिन् प्रत्ययो भवति । ग्राही । स्थायी । दायी ।

नाम्युपान्त्यप्रीकृगृज्ञः कः । ५ । १ । ५४ ।

नाम्युपान्त्येभ्य. प्रीकृगृज्ञाभ्यश्च कर्तरि को भवति । विक्षिपः । प्रिय । किरः । गिल । ज्ञ ।

गेहे ग्रहः । ५ । १ । ५५ ।

गेहेऽर्थे वाच्ये ग्रहधातो क प्रत्ययो भवति । गृहम् । गृहा दारा इत्यर्थ. ।

उपसर्गादातो डोऽश्यः । ५ । १ । ५६ ।

श्यैङ्वर्जितादुपसर्गात् परादादन्तात् धातो ड प्रत्ययो भवति । आह्व । प्रह्व । उपसर्गादिति किम् ? दायः । अश्य इति किम् ? अवश्याय ।

व्याघ्राघ्रे प्राणिनसोः । ५ । १ । ५७ ।

एतौ यथासंख्यं प्राणिनि नासिकाया चार्थे निपात्येते । व्याघ्र प्राणी । आघ्रा नासिका ।

**घ्राध्मापाट्धेदृशः शः । ५ । १ । ५८ ।**

एभ्यः कर्तरि शः प्रत्ययो भवति । शित्त्वाद् जिघ्राद्यादेशाः । जिघ्र. । उद्धम । पिबः । धय' । उत्पश्यः ।

**साहिसातिवेद्युदेजिधारिपारिचेतेरनुपसर्गात् । ५ । १ । ५९ ।**

अनुपसर्गेभ्यो ण्यन्तेभ्य एतेभ्य. शो भवति । साहयः । सातय । वेदयः । उदेजय. । धारयः । पारयः । चेतय. ।

**लिम्प-विन्दः । ५ । १ । ६० ।**

अनुपसर्गाभ्यामाभ्यां शो भवति । लिम्पतीति लिम्प । विन्दतीति विन्द ।

**निगवादेर्नाम्नि । ५ । १ । ६१ ।**

निपूर्वाद् लिम्पे गवादिपूर्वाच्च विन्दे सञ्ज्ञायां को भवति । निलिम्पा देवा' । गोविन्द । कुविन्द ।

**वा ज्वलादिदुनीभूग्रहास्रोर्णः । ५ । १ । ६२ ।**

ज्वलादिभ्यो दुनोत्यादिभ्य आस्रोश्चानुपसर्गेभ्यो ण' प्रत्ययो वा भवति । ज्वल, ज्वाल । चाल, चल । दाव, दवः । नायः, नयः । भाव, भव. । ग्राहो मकरादि', ग्रहः सूर्यादिः । आस्राव, आस्रव. ।

**अवहृसासंस्रोः । ५ । १ । ६३ ।**

अवपूर्वाभ्या हृसाभ्यां सम्पूर्वाच्च स्रोश्च णः प्रत्ययो भवति । अवहारः । अवसाय' । संस्रावः ।

**तनव्यधीण्श्वसातः । ५ । १ । ६४ ।**

एभ्यो धातुभ्य आदन्तेभ्यश्च णप्रत्ययो भवति । तानः । व्याधः । प्रत्याय । श्वासः । अवश्यायः ।

**नृत–खन–रञ्जः शिल्पिन्यकट् । ५ । १ । ६५ ।**

एभ्यो धातुभ्य शिल्पिनि वाच्ये अकट् प्रत्ययो भवति । नर्तकः । नर्तकी । खनक । ‘ अकट्–घिनोश्च रञ्जे. ’ इति नलुकि रजक । शिल्पिनीत्येव नर्तिका ।

**गस्थकः । ५ । १ । ६६ ।**

गाधातो शिल्पिनि थक प्रत्ययो भवति । गाथक ।

**टनण् । ५ । १ । ६७ ।**

शिल्पिनि वाच्ये गाधातोष्टनण् भवति । गायनी ।

**हः कालव्रीह्योः । ५ । १ । ६८ ।**

हाको हाङो वा कालव्रीह्योर्वाच्ययो कर्तरि टनण् भवति । हायनः वर्षम् । हायना व्रीहयः ।

**प्रुसृल्वोऽकः साधौ । ५ । १ । ६९ ।**

एभ्यो धातुभ्य साधावर्थे अक प्रत्ययो भवति । साधु प्रवते इति प्रवक । सरक । लवक । अन्यत्र प्रावक. ।

**आशिष्यकन् । ५ । १ । ७० ।**

आशिषि गम्यमानायां धातो कर्तर्यकन् प्रत्ययो भवति । जीवतात् जीवक. । आशिषीति किम् ? जीवतीति जीविका ।

**तिक्कृतौ नाम्नि । ५ । १ । ७१ ।**

आशीर्विषये सञ्ज्ञायां गम्यमानाया धातोः तिक् कृत्संज्ञकाश्च प्रत्यया भवन्ति । शान्तिः । वीरभू । वर्धमानः ।

**कर्मणोऽण् । ५ । १ । ७२ ।**

कर्मणः परात् धातोः अण् प्रत्ययो भवति । कुम्भं करोतीति कुम्भकारः ।

**शीलिकामिभक्ष्याचरीक्षिक्षमोणः । ५ । १ । ७३ ।**

कर्मणः परेभ्य एभ्यो धातुभ्यः कर्तरि णः प्रत्ययो भवति । धर्मशीला । धर्मकामा । वायुभक्षा । कल्याणमाचरति कल्याणाचारा । सुखप्रतीक्षा । बहुक्षमा ।

**गायोऽनुपसर्गात् टक् । ५ । १ । ७४ ।**

कर्मणः परादनुपसर्गाद गायतेष्टक् प्रत्ययो भवति । वक्रगी । उपसर्गात्तु खरुसंगायः ।

**सुरासीध्वोः पिबः । ५ । १ । ७५ ।**

आभ्यां कर्मभ्यां परादनुपसर्गात् पिबतेष्टक भवति । सुरापी । सीधुपी ।

**आतो डोऽह्वावामः । ५ । १ । ७६ ।**

कर्मणः परादनुपसर्गाद् ह्वावामावर्जितादाकारान्ताद् धातोः कर्तरि डो भवति । गां ददाति गोदः । अह्वावाम इति किम् ? स्वर्गह्वायः, तन्तुवायः, धान्यमायः ।

**समः ख्यः । ५ । १ । ७७ ।**

कर्मण' परात् सम्पूर्वात् ख्याते डो भवति । गां संख्याति गोसंख्य' ।

**दश्चाङः । ५ । १ । ७८ ।**

कर्मण पराढाङ्पूर्वाद् दाग ख्यातेश्च डो भवति । दायमाद्दाति दायाद । स्त्रचाख्य ।

**प्राज्ज्ञश्च । ५ । १ । ७९ ।**

कर्मण परात् प्रपूर्वाज् ज्ञो दश्च डप्रत्ययो भवति । पथिप्रज्ञ' । प्रपाप्रद ।

**आशिषि हनः । ५ । १ । ८० ।**

कर्मण' पराद् हन्ते आशिषि गम्यायां कर्तरि डो भवति । शत्रु वध्यात् शत्रुह ।

**•क्लेशादिभ्योऽपात् । ५ । १ । ८१ ।**

क्लेशादिकर्मण पराद् हन्ते कर्तरि ड प्रत्ययो भवति। क्लेशमपहन्ति क्लेशापहो मुनि' । तमांस्यपहन्ति तमोऽपहः सूर्य ।

**कुमारशीर्षाण्णिन् । ५ । १ । ८२ ।**

आभ्यां कर्मभ्यां पराद् हन्तेर्णिन् प्रत्ययो भवति । कुमारघाती । शीर्षघाती ।

**अचित्ते टक् । ५ । १ । ८३ ।**

कर्मण पराद् हन्तेरचित्तवति कर्तरि टक् भवति । वातघ्नं तैलम् । अचित्त इति किम् ? पापघातो यतिः ।

**जायापतेश्चिह्नवति । ५ । १ । ८४ ।**

आभ्या कर्मभ्यां पराद् हन्तेः चिह्नवति कर्तरि टक् प्रत्ययो भवति । जायाघ्न । पतिघ्नी कन्या ।

**ब्रह्मादिभ्यः । ५ । १ । ८५ ।**

एभ्य कर्मभ्य' पराद् हन्ते टक् प्रत्ययो भवति । ब्रह्मघ्न । गोघ्नः पापी ।

**हस्तिबाहुकपाटाच्छक्तौ । ५ । १ । ८६ ।**

एभ्यः कर्मभ्यः पराद् हन्धातो शक्तौ गम्यमानायां कर्तरि टक् प्रत्ययो भवति । हस्तिघ्न. । बाहुघ्नः । कपाटघ्न । 'राजघ्न इति निपात्य ' राजानं हन्ति राजघ ।

**नगरादगजे । ५ । १ । ८७ ।**

अस्मात् कर्मण' पराद् हन्तेरगजे कर्तरि टक् प्रत्ययो भवति। नगरघ्नो व्याघ्र । अगज इति किम् ? नगरघातो हस्ती । ' शिल्पिनि पाणिघताडघौ निपात्यौ ' ।

**कुक्ष्यात्मोदराद् भृगः खिः । ५ । १ । ९० ।**

एभ्य कर्मभ्यो भृग खि भवति । कुक्षिम्भरि । आत्मम्भरि. । उदरम्भरि. ।

**अर्होऽच् । ५ । १ । ९१ ।**

कर्मण. परादर्हतेरच् प्रत्ययो भवति । पूजामर्हतीति पूजार्हा वीतरागमूर्तिः । पूजार्होऽर्हन् ।

**धनुर्दण्डत्सरुलाङ्गलाङ्कुशर्ष्टियष्टिशक्तितोमरघटाद्
ग्रहः । ५ । १ । ९२ ।**

एभ्य कर्मभ्य पराद् ग्रहेरच् प्रत्ययो भवति । धनुर्ग्रहः । दण्डग्रहः । त्सरुग्रहः । लाङ्गलग्रह । अङ्कुशग्रह । ऋष्टिग्रहः । यष्टिग्रह । शक्तिग्रह । तोमरग्रह । घटग्रह ।

**सूत्राद् धारणे । ५ । १ । ९३ ।**

सूत्रात् कर्मण. पराद् ग्रहधातो ग्रहणपूर्वकधारणार्थाद् अच् भवति । सूत्रं गृह्णाति सूत्रग्रह प्राज्ञ. सूत्रधारो वा ।

**आयुधादिभ्यो धृगोऽदण्डादेः । ५ । १ । ९४ ।**

दण्डादिवर्जितादायुधादे कर्मण पराद् धृगोऽच् भवति । धनुर्धर । भूधर । दण्डादिपूर्वात् तु दण्डधार, कुण्डधारः ।

**हृगो वयोऽनुद्यमे । ५ । १ । ९५ ।**

कर्मण पराद् हरतेः वयसि अनुद्यमे च गम्येऽच् भवति । अस्थिहर श्वशिशुः । अंशहरो दायादः । मनोहरा माला ।

**आङः शीले । ५ । १ । ९६ ।**

कर्मण परादाङ्पूर्वाद् हृगः शीले गम्येऽच् प्रत्ययो भवति । पुष्पाहरः । शील इति किम् ? पुष्पाहार ।

**दृति-नाथात् पशाविः । ५ । १ । ९७ ।**

आभ्या कर्मभ्यां पराद् हरते पशौ कर्तरि इ प्रत्ययो भवति । दृतिहरि श्वा । नाथहरिः सिंह ।

रजः-फले-मलाद् ग्रहः । ५ । १ । ९८ ।

एभ्य कर्मभ्य पराद् ग्रहधातो इ प्रत्ययो भवति । रजोग्रहि । फलेग्रहि । मलग्रहि ।

देव-वातादापः । ५ । १ । ९९ ।

आभ्यां परादापधातोरि प्रत्ययो भवति । देवापिः । वातापि ।

शकृत्स्तम्बाद् वत्सव्रीहौ कृगः । ५ । १ । १०० ।

आभ्यां कर्मभ्या परात् कृगो यथासंख्यं वत्सव्रीह्यो कर्त्रोरिः भवति। शकृत्करि वत्स । स्तम्बकरि व्रीहि । 'कियत्तद्बहुभ्यः कृग अ वाच्य ' किंकर, यत्कर., तत्कर., तस्कर चौरश्चेत्, बहुकर ।

संख्याहर्दिवाविभानिशाप्रभाभाश्चित्रकर्त्राद्यन्तानन्तकारबाह्वरुर्धनुर्नान्दीलिपिलिविबलिभक्तिक्षेत्रजङ्घाक्षपाक्षणदारजनिदोषादिनदिवसाट्टः । ५ । १ । १०२ ।

एभ्य कर्मभ्य कृग ट प्रत्ययो भवति । संख्याकर । द्विकर. । अहस्कर. । दिवाकर । विभाकर । निशाकर । प्रभाकरः । भास्करः । चित्रकर. । कर्तृकरः । आदिकरः । अन्तकरः । अनन्तकर । कारकर । बाहुकर । अरुष्करः । धनुष्कर । नान्दीकर । लिपिकर । लिविकरः । बलिकरः । भक्तिकर. । क्षेत्रकरः । जङ्घाकरः । क्षपाकरः । क्षणदाकर । रजनिकर । दोषाकर । दिनकर । दिवसकर । सख्याकरी ।

**हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैरचाटुसूत्र-मन्त्रपदात् । ५ । १ । १०३ ।**

शब्दादिवर्जितात् कर्मणः परात् कृगष्टक् प्रत्ययो भवति, हेतुतच्छीलानुकूलेषु कर्तृषु । यशस्करी विद्या । श्राद्धकरो ब्राह्मणः । प्रेषणाकरः । शब्दादिवर्जनं किम्? शब्दकारः । श्लोककारः । कलहकारः । गाथाकारः । वैरकारः । चाटुकारः । सूत्रकारः । मन्त्रकारः । पदकारः ।

**भृतौ कर्मणः । ५ । १ । १०४ ।**

कर्मणः कर्मणः पराद् भृतौ गम्यमानायां कृगष्टक् भवति । कर्मकरी दासी ।

**क्षेम-प्रिय-मद्र-भद्रात् खाण् । ५ । १ । १०५ ।**

एभ्यः कर्मभ्यः परात् कृगः खोऽणश्च भवतः । क्षेमङ्करः, क्षेमकारः । प्रियङ्करः, प्रियकारः । मद्रङ्करः, मद्रकारः । भद्रङ्करः, भद्रकारः ।

**मेघर्तिभयाभयात् खः । ५ । १ । १०६ ।**

एभ्यः कर्मभ्यः कृगः खो भवति । मेघङ्करः । ऋतिङ्करः । भयङ्करः । अभयङ्करः ।

**प्रिय-वशाद् वदः । ५ । १ । १०७ ।**

आभ्यां कर्मभ्यां वदतेः कर्तरि खः प्रत्ययो भवति । प्रियंवदः । वशंवदः । 'द्विषन्तप-परन्तपौ कर्तरि ण्यन्तस्य तपेः निपात्यौ' द्विषतः तापयति द्विषन्तपः । एवं परन्तपः ।

**परिमाणार्थमितनखात् पचः । ५ । १ । १०९ ।**

परिमाणार्थात् मितनखाभ्यां च कर्मभ्य परात् पचे खो भवति । प्रस्थम्पचा । नखम्पच ।

**कूलाभ्रकरीषात् कषः । ५ । १ । ११० ।**

एभ्यः कर्मभ्यः कषते खो भवति । कूलङ्कषा । अभ्रङ्कषः । करीषङ्कषः ।

**सर्वात् सहश्च । ५ । १ । १११ ।**

सर्वशब्दात् परात् सहे कषेश्च ख प्रत्ययो भवति । सर्वसहो मुनि । सर्वङ्कषः खल ।

**भृवृजितृतपदमेश्च नाम्नि । ५ । १ । ११२ ।**

कर्मभ्यः परेभ्य एभ्य. सहतेश्च संज्ञायां खो भवति । विश्वम्भरा मेदिनी । पतिवरा कन्या । शत्रुञ्जयः अद्रिः । रथन्तरं साम । शत्रुन्तपो राजा । बलिन्दमः कृष्ण । शत्रुंसहो राजा । नाम्नीति किम् ? कुटुम्बभार ।

**धारेर्धर् च । ५ । १ । ११३ ।**

कर्मणः पराद् धारे सञ्ज्ञायां खो भवति, धारे. धरादेशश्च । वसुन्धरा पृथ्वी ।

**पुरन्दर–भगन्दरौ । ५ । १ । ११४ ।**

एतौ सञ्ज्ञायां निपात्येते । पुरं दृणाति पुरन्दर शक्र । भगं दारयति भगन्दरो व्याधि । 'व्रते गम्ये वाचंयमो निपात्यः' वाचंयमो व्रतीत्यर्थः ।

मन्याण्णिन् । ५ । १ । ११६ ।

कर्मण. परात् मन्यतेर्णिन् प्रत्ययो भवति । पण्डितमानी बन्धो· ।

कर्तुः खश् । ५ । १ । ११७ ।

प्रत्ययार्थरूपात् कर्तृरूपात् कर्मणः परात् मन्यते· खश् प्रत्ययो भवति । आत्मानं पण्डितं मन्यते इति ।

खित्यनव्ययारुषो मोन्तो ह्रस्वश्च । ३ । २ । १११ ।

स्वरान्तस्याव्ययभिन्नस्यारुषश्च खित्प्रत्ययान्ते उत्तरपदे परे मोऽन्तो यथासम्भवं ह्रस्वश्च । पण्डितम्मन्यः । ज्ञम्मन्य । अरुन्तुदः । 'कर्मणः परादेजेः खश् वाच्य' जनमेजयो नाम राजा ।

शुनीस्तनमुञ्जकूलास्यपुष्पात् ट्धेः । ५ । १ । ११९ ।

एभ्यः कर्मभ्यः ट्धेः कर्तरि खश् प्रत्ययो भवति । शुनिन्धयः । स्तनन्धय· । मुञ्जन्धयः कूलन्धयः । आस्यन्धय· । पुष्पन्धयः ।

नाडीघटीखरीमुष्टिनासिकावाताद् ध्मश्च । ५ । १ । १२० ।

एभ्य· कर्मभ्यो धमते. धयतेश्च कर्तरि खश् प्रत्ययो भवति । नाडिन्धम· । नाडिन्धयः । घटिन्धम· । घटिन्धय· । खरिन्धमः । खरिन्धय· । मुष्टिन्धम । मुष्टिन्धय· । नासिकन्धम. । नासिकन्धयः । वातन्धम । वातन्धय· ।

पाणि–करात् । ५ । १ । १२१ ।

आभ्यां धमतेः खश् प्रत्ययो भवति । पाणिन्धम. । करन्धमः ।

**कूलादुद्रुजोद्वहः । ५ । १ । १२२ ।**

अस्मात् पराभ्यामाभ्यां खश् भवति । कूलमुद्रुजः । कूल मुद्वह. ।

**वहाभ्राल्लिहः । ५ । १ । १२३ ।**

वहाभ्राभ्यां कर्मभ्यां परात् लिहे' खश् भवति । वहंलिहः । अभ्रंलिह ।

**बहुविध्वरुस्तिलात् तुदः । ५ । १ । १२४ ।**

एभ्य कर्मभ्यः परात् तुदतेः खश् भवति। बहुन्तुद । विधुन्तुद । अरुन्तुदः । तिलन्तुद' ।

**ललाट–वात–शर्धात् तपाजहाकः । ५ । १ । १२५ ।**

एभ्यः कर्मभ्य. परेभ्यो यथासंख्यं तपाजहाभ्यः कर्तरि खश् प्रत्ययो भवति । ललाटन्तप सूर्यः । वातमजः मृगः । शर्धञ्जहः ।

**असूर्योग्राद् दृशः । ५ । १ । १२६ ।**

आभ्यां पराद् दृशेः कर्तरि खश् प्रत्ययो भवति । न सूर्यं पश्यन्तीति असूर्यम्पश्या राजदाराः । उग्रम्पश्यो राजा ।

**इरम्मदः । ५ । १ । १२७ ।**

इरापूर्वाद् माद्यतेः कर्तरि खश् प्रत्ययो भवति । इरया माद्यतीति इरम्मद' ।

**नाम्नो गमः खड्डौ च विहायसस्तु विहः। ५ । १ । १३१।**

नाम्न. पराद् गच्छते. एते खड्डखाः स्यु, विहायसस्तु विहा-

देशश्च । तुरं गच्छतीति तुरङ्गमः । विहायसा गच्छतीति विहङ्गमः पक्षी । सुतङ्गमो मुनिः । तुरगः । विहगः । तुरङ्गः । विहङ्गः ।

**सुग–दुर्गमाधारे । ५ । १ । १३२ ।**

सुदुर्भ्यां पराद् गमेराधारे डप्रत्ययो भवति । सुखेन गम्यतेऽस्मिन्निति सुगः । एवं दुर्गः ।

**निर्गो देशे । ५ । १ । १३३ ।**

निर्पूर्वाद् गमे देशेऽर्थे डप्रत्ययो भवति । निर्गो देशः ।

**शमो नाम्न्यः । ५ । १ । १३४ ।**

शमो नाम्नः पराद् धातोः सञ्ज्ञायामः प्रत्ययो भवति । शम्भवो नामार्हन् ।

**पार्श्वादिभ्यः शीङः । ५ । १ । १३५ ।**

एभ्यो नामभ्यः परात् शीङः अप्रत्ययो भवति । पार्श्वशयः ।

**ऊर्ध्वादिभ्यः कर्तुः । ५ । १ । १३६ ।**

एभ्यः कर्तृवाचिभ्यः परात् शीङः अप्रत्ययो भवति । ऊर्ध्वशयः । उत्तानशयः ।

**आधारात् । ५ । १ । १३७ ।**

आधारवाचिनो नाम्नः पराच्छीङः अः प्रत्ययो भवति । खे शेते खशयः ।

**चरेष्टः । ५ । १ । १३८ ।**

आधाराच्चरतेष्टः प्रत्ययो भवति । कुरुषु चरति कुरुचरी । गूर्जरचरा मुनयः ।

**भिक्षा-सेना-दायात् । ५ । १ । १३९ ।**

एभ्यः पराच्चरतेष्टः प्रत्ययो भवति । भिक्षाचरी । सेनाचरः । आदायचरः ।

**पुरोऽग्रतोऽग्रे सर्तेः । ५ । १ । १४० ।**

एभ्य आधारेभ्य परात् सरतेष्टः प्रत्ययो भवति । पुरःसरः । अग्रतःसरः । अग्रेसरः ।

**पूर्वात् कर्तुः । ५ । १ । १४१ ।**

कर्त्रर्थे वर्तमानात् पूर्वात् परस्य सरतेष्टो भवति । पूर्वः सन् सरति पूर्वसरः ।

**स्था-पा-स्ना-त्रः कः । ५ । १ । १४२ ।**

नाम्नः परेभ्य एभ्यः कः प्रत्ययो भवति । समस्थः । कच्छपः । नदीष्णः । घर्मत्रं छत्रम् ।

**शोकापनुद-तुन्दपरिमृज-स्तम्बेरम-कर्णेजपं प्रियालस-हस्तिसूचके । ५ । १ । १४३ ।**

एते प्रियाद्यर्थेषु यथासंख्यं कप्रत्ययान्ता निपात्यन्ते । शोकमपनुदति शोकापनुदः प्रियजनः । तुन्दं परिमार्ष्टि तुन्दपरिमृजोऽलसः । स्तम्बे रमते स्तम्बेरमो हस्ती । कर्णे जपति कर्णेजपोऽतिखलः ।

**मूलविभुजादयः । ५ । १ । १४४ ।**

एते कप्रत्ययान्ता निपात्यन्ते । मूलविभुजो रथः । कुमुदं कैरवम् ।

दुहेर्डुघः । ५ । १ । १४५ ।

नाम्नः पराद् दुहे डुघः प्रत्ययो भवति । कामान् दोग्धि कामदुघा गौः ।

भजो विण् । ५ । १ । १४६ ।

नाम्नः पराद् भजतेर्विण प्रत्ययो भवति । अर्धं भजते अर्धभाक् ।

मनवन्क्वनिप्विच् क्वचित् । ५ । १ । १४७ ।

नाम्नः पराद् धातोरेते प्रत्यया भवन्ति । इन्द्रशर्मा । देवशर्मा । जिनशर्मा । विजावा । ध्वावा । अवावा । सुधीवा । शुभंयाः ।

क्विप् । ५ । १ । १४८ ।

नाम्नः पराद् धातो क्विब् भवति । कार्यं करोति कार्यकृत् । हरतीति हृत् ।

स्पृशोऽनुदकात् । ५ । १ । १४९ ।

उदकवर्जाद् नाम्न. परात् स्पृशते. क्विब् भवति । घृतस्पृक् । अनुदकादिति किम् ? उदकस्पर्शः ।

अदोऽनन्नात् । ५ । १ । १५० ।

अन्नवर्जाद् नाम्नः पराददे क्विब् भवति । आमात् । अनन्नादिति किम् ? अन्नादः ।

क्रव्यात्-क्रव्यादावामपक्वादौ । ५ । १ । १५१ ।

क्रव्यपूर्वादत्तेरेतौ यथासंख्यमामाद्पक्वादयो. साधू भवतः । क्रव्यात् आममांसभक्षः । क्रव्यादः पक्वमांसभक्षः ।

**त्यदाद्यन्यसमानादुपमानाद् व्याप्ये दृशष्टक्–सकौ च । ५ । १ । १५२ ।**

उपमानरूपव्याप्येभ्य एभ्य. पराद् दृशो व्याप्येऽर्थे एवं टक्-सकौ क्विप् च भवन्ति । स्य इव दृश्यते 'स्यादृश', त्यादृक्षः, त्यादृक् । तादृशः, तादृक्षः, तादृक् । अन्यादृशः, अन्यादृक्षः, अन्यादृक् । अमूदृशः, अमूदृक्षः, अमूदृक् । सदृश, सदृक्षः, सदृक् ।

**कर्तुर्णिन् । ५ । १ । १५३ ।**

कर्तुरुपमानात् पराद् धातोर्णिन् प्रत्ययो भवति । उष्ट्र इव क्रोशति उष्ट्रकोशी ।

**अजातेः शीले । ५ । १ । १५४ ।**

अजात्यर्थाद् नाम्न. पराद् शीलेऽर्थे णिन् भवति । उष्णं भुङ्क्ते तच्छील उष्णभोजी ।

**साधौ । ५ । १ । १५५ ।**

नाम्न परात् साध्वर्थाद् धातो. णिन् भवति । साधुकारी । साधुपाठी ।

**ब्रह्मणो वदः । ५ । १ । १५६ ।**

ब्रह्मणः पराद् वदेर्णिन् भवति । ब्रह्मवादी ।

**व्रताभीक्ष्ण्ये । ५ । १ । १५७ ।**

व्रताभीक्ष्ण्ययोः गम्ययोः नाम्न. पराद् धातोर्णिन् प्रत्ययो भवति । स्थण्डिले वर्तते स्थण्डिलवर्ती । क्षीरं पुन. पुनः पिबन्ति क्षीरपायिण उशीनरा. ।

**करणाद् यजो भूते । ५ । १ । १५८ ।**

करणार्थाद् नाम्नः पराद् भूतार्थाद् यजधातोः णिन् भवति । अग्निष्टोमेन अयाक्षीत् अग्निष्टोमयाजी ।

**निन्द्ये व्याप्यादिन् विक्रियः । ५ । १ । १५९ ।**

व्याप्याद् नाम्नः पराद् भूतार्थाद् विपूर्वात् क्रिय निन्द्ये कर्तरि इन् प्रत्ययो भवति । सोमविक्रयी । 'व्याप्यात् पराद् हन्तेः भूतार्थाद् णिन् वाच्यः, निन्द्ये कर्तरि सति' पितृघाती । मातृघाती ।

**ब्रह्म-भ्रूण-वृत्रात् क्विप् । ५ । १ । १६१ ।**

एभ्यः कर्मभ्यः पराद् भूतार्थाद् हन्तेः क्विब् भवति । ब्रह्माणं हतवान् ब्रह्महा । भ्रूणहा । वृत्रहा ।

**कृगः सुपुण्यपापकर्ममन्त्रपदात् । ५ । १ । १६२ ।**

एभ्य पराद् भूतार्थाद् कृग क्विब् भवति । सुकृत् । पुण्यकृत् । पापकृत् । कर्मकृत् । मन्त्रकृत् । पदकृत् ।

**सोमात् सुगः । ५ । १ । १६३ ।**

सोमात् कर्मणः पराद् भूतार्थात् सुग क्विब भवति । सोमसुत् । 'अग्नेः कर्मण पराद् भूतार्थात् चिनोतेः क्विब वाच्य. ।' अग्निं चितवान् अग्निचित् ।

**कर्मण्यग्न्यर्थे । ५ । १ । १६५ ।**

कर्मणः पराद् भूतार्थात् चिनोतेरग्निरूपे कर्मणि क्विब् भवति । श्येनचित् ।

**दृशः क्वनिप् । ५ । १ । १६६ ।**

व्याप्यात् पराद् भूतार्थाद् दृशेः क्वनिब् भवति । बहुदृश्वा ।

**सह-राजभ्यां कृग्-युधेः । ५ । १ । १६७ ।**

आभ्यां कर्मभ्यां पराभ्यां भूतार्थाभ्यां कृग्युधिभ्यां क्वनिब् भवति । सहकृत्वा । सहयुध्वा । राजकृत्वा । राजयुध्वा ।

**अनोर्जनेर्डः । ५ । १ । १६८ ।**

कर्मणः परादनुपूर्वाज्जनेः भूतार्थाद् डः प्रत्ययो भवति । पुमनुजा

**सप्तम्याः । ५ । १ । १६९ ।**

सप्तम्यन्तात् पराद् भूतार्थाज्जनेः डः प्रत्ययो भवति । मन्दुरायां जातः मन्दुरजः ।

**अजातेः पञ्चम्याः । ५ । १ । १७० ।**

अजात्यर्थात् पञ्चम्यन्तात् पराद् भूतार्थाद् जनेर्डः प्रत्ययो भवति । बुद्धेर्जाता बुद्धिजा कल्पना । जात्यर्थात् परात्तु गजाज्जातः इत्येव, न डप्रत्ययः ।

**क्वचित् । ५ । १ । १७१ ।**

उक्तादन्यत्रापि क्वचिद् ड प्रत्ययो भवति । किञ्जः । अनुजः । अजः । स्त्रीजः । ब्रह्मज्यः । वराहः ।

**सुयजो ङ्वनिप् । ५ । १ । १७२ ।**

आभ्यां भूतार्थाभ्यां ङ्वनिप् प्रत्ययो भवति । सुत्वानौ । यज्वा ।

**जॄषोऽतृः । ५ । १ । १७३ ।**

भूतार्थाद् जॄषेरतृः प्रत्ययो भवति । जरती । जरन् ।

**नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्ताच्च्व्यर्थेऽ-च्वेर्भुवः खिष्णु-खुकञौ । ५ । १ । १२८ ।**

नग्नादिभ्यः केवलेभ्यस्तदन्तेभ्यश्च च्व्यर्थे वर्तमानेभ्यः अच्व्यन्तेभ्य· पराद् भुवः खिष्णु—खुकञौ भवत. । अनग्नो नग्नो भवतीति नग्नंभविष्णुः, नग्नंभावुकः । पलितंभविष्णुः, पलितंभावुक. । प्रियंभविष्णु , प्रियंभावुकः । अन्धंभविष्णुः, अन्धंभावुकः । स्थूलंभविष्णुः, स्थूलंभावुकः । सुभगंभविष्णुः, सुभगंभावुकः । आढ्यंभविष्णु', आढ्यंभावुकः । तदन्त सुनग्नंभविष्णु ।

**कृगः खनट् करणे । ५ । १ । १२९ ।**

अच्व्यन्तेभ्यश्च्व्यर्थवृत्तिभ्यो नग्नादिभ्य परात् कृगः करणे खनट् प्रत्ययो भवति । अनग्नो नग्नः क्रियतेऽनेनेति नग्नंकरणं द्यूतम् । पलितंकरणम् । प्रियंकरणम् । अन्धंकरणम् । स्थूलंकरणम् । सुभगंकरणम् । आढ्यंकरणम् ।

**भावे चाशितात् भुवः खः । ५ । १ । १३० ।**

आशितात् पराद् भूधातोः भावे करणे च ख· प्रत्ययो भवति । आशितम्भव ओदनः ।

**शत्रानशावेष्यति तु सस्यौ । ५ । २ । २० ।**

वर्तमानार्थाद् धातोः शत्रानशौ भवतः, भविष्यति तु स्ययुक्तौ भवतः। गच्छतीति गच्छन्। यातीति यान्। शेते इति शयानः। पचमानः। गमिष्यतीति गमिष्यन्। यास्यन्। शयिष्यमाणः। पक्ष्यमाणः। 'माङ्युपपदे आक्रोशेऽपि वक्तव्यौ' मा पचन् वृषल! ज्ञास्यसि। मा पचमानोऽसौ मर्तुकामः।

**वा वेत्तेः क्वसुः । ५ । २ । २२ ।**

वर्तमानार्थाद् वेत्ते क्वसुर्वा भवति। वेत्तीति विद्वान्, विदन् तत्त्वम्।

**पूङ्-यजः शानः । ५ । २ । २३ ।**

आभ्यां वर्तमानार्थाभ्यां परः शानः प्रत्ययो भवति। पवते इति पवमानः। यजमानः।

**वयः-शक्ति-शीले । ५ । २ । २४ ।**

वर्तमानार्थाद् धातोः परः शानो भवति, एषु अर्थेषु गम्येषु। स्त्रियं गच्छमानः। समश्नानः। निन्दमानः।

**धारीङोऽकृच्छ्रेऽतृश् । ५ । २ । २५ ।**

वर्तमानार्थाद् धारेरिङश्च परः अकृच्छ्रेऽर्थेऽतृश प्रत्ययो भवति। धारयन् आचाराङ्गम्। अधीयन्।

**सुग्द्विषार्हः सत्रिशत्रुस्तुत्ये । ५ । २ । २६ ।**

वर्तमानार्थेभ्य एभ्यो यथासंख्यं सत्रिशत्रुस्तुत्येऽर्थे कर्तरि अतृश् प्रत्ययो भवति। सर्वे सुन्वन्तः। चौरं द्विषन्। पूजामर्हन्।

**तृन् शील-धर्म-साधुषु । ५ । २ । २७ ।**

वर्तमानकालार्थाद् धातोः शीलाद्यर्थेषु तृन् प्रत्ययो भवति । करोति तच्छीलः कर्ता कटम् । मुण्डयितारः श्राविष्ठायनाः । गन्ता खेलः ।

**भ्राज्यलंकृग्निराकृग्भूसहिरुचिवृत्तिवृद्धिचरिप्रजनापत्रप इष्णुः । ५ । २ । २८ ।**

वर्तमानकालेभ्य एभ्यः शीलाद्यर्थेषु इष्णुः प्रत्ययो भवति । भ्राजिष्णुः । अलंकरिष्णुः । निराकरिष्णुः । भविष्णुः । सहिष्णुः । रोचिष्णुः । वर्तिष्णुः । वर्धिष्णुः । चरिष्णुः । प्रजनिष्णुः । अपत्रपिष्णुः ।

**उदः पचि-पति-पदि-मदेः । ५ । २ । २९ ।**

शीलादिसदर्थेभ्य एभ्य इष्णुः प्रत्ययो भवति । उत्पचिष्णुः । उत्पतिष्णुः । उत्पदिष्णुः । उन्मदिष्णुः ।

**भू-जेः ष्णुक् । ५ । २ । ३० ।**

आभ्यां शीलादिसदर्थाभ्यां ष्णुक् भवति । भूष्णुः । जिष्णुः ।

**स्थाग्लाम्लापचिपरिमृजिक्षेः स्नुः । ५ । २ । ३१ ।**

एभ्यः सदर्थेभ्यः शीलादौ स्नुः भवति । स्थास्नुः । ग्लास्नुः । म्लास्नुः । पक्ष्णुः । परिमार्क्ष्णुः । क्षेष्णुः ।

**त्रसि-गृधि-धृषि-क्षिपः क्नुः । ५ । २ । ३२ ।**

शीलादिसदर्थेभ्य एभ्यः क्नुः भवति । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्णुः ।

**सन्भिक्षाऽऽशंसेरुः । ५ । २ । ३३ ।**

शीलादिसदर्थेभ्यः सन्नन्तभिक्षाऽऽशंसिभ्य उः प्रत्ययो भवति । लिप्सुः । चिकीर्षुः । भिक्षुः । आशंसुः ।

**विन्द्विच्छू । ५ । २ । ३४ ।**

शीलादिसदर्थाभ्यामाभ्यां वेत्तीच्छिभ्यां यथासंख्यं नुपान्त्यच्छान्तादेशौ च निपात्येते । वेत्ति तच्छील' विन्दुः । इच्छु ।

**शॄ-वन्देरारुः । ५ । २ । ३५ ।**

शीलादिसदर्थाभ्यामाभ्यामारु भवति । शरारुः । विशरारुः । वन्दारुः ।

**दा-धे-सि-शद-सदो रुः । ५ । २ । ३६ ।**

शीलादिसदर्थेभ्य एभ्यो रुः प्रत्ययो भवति । दारुः । धारु' । सेरुः । शद्रु' । सद्रुः ।

**शीङ्श्रद्धानिद्रातन्द्रादयिपतिगृहिस्पृहेरालुः । ५ । २ । ३७ ।**

शीलादिसदर्थेभ्य एभ्य आलु प्रत्ययो भवति । शयालु । श्रद्धालु' । निद्रालु. । तन्द्रालु । दयालु । पतयालु । गृहयालु । स्पृहयालु' ।

**डौ सासहिवावहिचाचलिपापति । ५ । २ । ३८ ।**

एते यङन्ता डिप्रत्ययान्ता निपात्यन्ते । सासहि ।वावहिः । चाचलि. । पापति. ।

**सस्रि-चक्रि-दधि-जज्ञि-नेमि । ५ । २ । ३९ ।**

एते यङन्ता डिप्रत्ययान्ता निपात्यन्ते । सस्रि. । चक्रिः । दधिः । जज्ञिः । नेमिः ।

**शृकमगमहनवृषभूस्थ उकण् । ५ । २ । ४० ॥**

शीलादिसदर्थेभ्य एभ्य उकण् भवति । शारुकः । कामुकः । गामुकः । घातुकः । वर्षुकः । भावुकः । स्थायुकः ।

**लष–पत–पदः । ५ । २ । ४१ ।**

एभ्यः शीलादिसदर्थे उकण् भवति । अभिलाषुकः । पातुकः । पादुकः ।

**भूषाक्रोधार्थजुसृगृधिज्वलशुचश्चानः । ५ । २ । ४२ ।**

भूषार्थेभ्यः क्रोधार्थेभ्यो ज्वादिभ्यो लषादिभ्यश्च शीलादिसदर्थेभ्य अनः भवति । भूषणः । क्रोधनः । कोपनः । जवनः । सरणः । गर्धनः । ज्वलनः । शोचनः । लषणः । पतनः । पदनः ।

**चलशब्दार्थादकर्मकात् । ५ । २ । ४३ ।**

चलनार्थाच्छब्दार्थादकर्मकात् शीलादिसदर्थे अनो भवति । चलनः । रवणः । अकर्मकादिति किम् ? पठिता विद्याम् ।

**इङितो व्यञ्जनाद्यन्तात् । ५ । २ । ४४ ।**

व्यञ्जनमादि अन्तं च यस्य तस्मादिदितो ङितश्च शीलादिसदर्थे अनो भवति । स्पर्धते तच्छीलः स्पर्धनः । वर्तनः । 'यङन्ताभ्यां द्रमक्रमाभ्यामनो वाच्यः' । दंद्रमणः । चंक्रमणः ।

**न णिङ्–य–सूद–दीप–दीक्षः । ५ । २ । ४५ ।**

णिङन्ताद् यन्तात् सूदादिभ्यश्च शीलादिसदर्थेभ्य अनः

प्रत्ययो न भवति । भावयिता । क्ष्मायिता । सूदिता । दीपिता । दीक्षिता ।

यजि-जपि-दंशि-वदादूकः । ५ । २ । ४७ ।

एभ्यो यङन्तेभ्यः शीलादिसदर्थेभ्यो ऊकः भवति । यायजूकः । जंजपूकः । दंदशूकः । वावदूकः । 'जागृधातोरपि उको वक्तव्यः' जागर्ति तच्छीलो जागरूकः ।

शमष्टकाद् घिनण् । ५ । २ । ४९ ।

एभ्य शीलादिसदर्थेभ्यो घिनण् भवति । शमी । दमी । तमी । श्रमी । भ्रमी । क्षमी । मादी । क्लमी ।

युजभुजभजत्यजरञ्जद्विषदुषद्रुहदुहाभ्याहनः । ५ । २ । ५० ।

शीलादिसदर्थेभ्य एभ्यो घिनण् प्रत्ययो भवति । योगी । भोगी । भागी । त्यागी । रागी । द्वेषी । दोषी । द्रोही । दोही । अभ्याघाती । 'आङ्पूर्वाभ्या क्रीड-मूषाभ्यामपि वक्तव्य' आक्रीडी, आमोषी । 'प्रपूर्वाभ्यां मथ-लपाभ्यां घिनण् वाच्य' प्रमाथी, प्रलापी । 'आङ्पूर्वाभ्यां प्रपूर्वाभ्या च यम-यसाभ्यां घिनण् कर्तव्यः' प्रयामी, आयामी । प्रयासी, आयासी ।

वेर्विचकत्थस्रम्भकषकसलसहनः । ५ । २ । ५९ ।

विपूर्वादेभ्यो घिनण् शीलादिसदर्थे भवति । विवेकी विकत्थी । विस्रम्भी । विकाषी । विकासी । विलासी । विघाती

व्यपाभेर्लषः । ५ । २ । ६० ।

एभ्य: परादू लषे: शीलादिसदर्थे घिनण् भवति । विलाषी । अपलाषी । अभिलाषी । 'संप्राभ्यां परादू वसादू घिनण् वाच्यः' संवासी, प्रवासी ।

**समत्यपाभिव्यभेश्चरः । ५ । २ । ६२ ।**

एभ्यः पराच्चरतेः घिनण् भवति । संचारी । अतिचारी । अपचारी । अभिचारी । व्यभिचारी ।

**समनुव्यवादू रुधः । ५ । २ । ६३ ।**

एभ्य: परादू रुधे शीलादिसदर्थे घिनण् भवति । संरोधी । अनुरोधी । विरोधी । अवरोधी । 'विपूर्वादू दहे:, परिपूर्वादू देवि-मुहि-दहि-क्षिप-रटिभ्यश्च घिनण् वाच्य' । विदाही, परिदेवी, परिमोही, परिदाही, परिक्षेपी, परिराटी ।

**वादेश्च णकः । ५ । २ । ६७ ।**

परिपूर्वात् क्षिप-रटिभ्यां वादेश्च णकः प्रत्ययो भवति। परिक्षेपक । परिराटक । परिवादकः ।

**निन्द-हिंस-क्लिश-खाद-विनाशिव्या-भाषासूयानेक-स्वरात् । ५ । २ । ६८ ।**

एभ्य शीलादिसदर्थे णकप्रत्ययो भवति । निन्दकः । हिंसकः । क्लेशकः । खादक । विनाशकः । व्याभाषकः । असूयकः चकासकः । 'उपसर्गात् परेभ्यो देवृ-देवि-क्रुशिभ्यः शीलादिसदर्थे णको वाच्य' आदेवकः, परिदेवकः, आक्रोशकः ।

**वृङ्भिक्षिलुण्टिजल्पिकुट्टात् टाकः । ५ । २ । ७० ।**

एभ्यः टाकप्रत्ययो भवति । वराकी । भिक्षाकः । लुण्टाकी । जल्पाकः । कुट्टाकः ।

**सृ–घस्यदो मरक् । ५ । २ । ७३ ।**

एभ्यः शीलादिसदर्थेभ्यो मरक् भवति । सृमर । घस्मरः । अद्मर. ।

**भञ्जि–भासि–मिदो घुरः । ५ । २ । ७४ ।**

एभ्यः शीलादिसदर्थेभ्यो घुरो भवति । भङ्गुरम् । भासुरः । मेदुरः ।

**वेत्ति–च्छिद–भिदः कित् । ५ । २ । ७५ ।**

एभ्यः शीलादिसदर्थे घुरो भवति, स च कित् । विदुरः । छिदुरः । भिदुर' कुठारः ।

**भियो रु–रुक–लुकम् । ५ । २ । ७६ ।**

अस्माच्छीलादिसदर्थादेते भवन्ति। भीरु । भीरुकः । भीलुकः ।

**सृ–जीण्–नशट्वरप् । ५ । २ । ७७ ।**

शीलादिसदर्थेभ्य एभ्य' ट्वरप् भवति । सृत्वरी । जित्वरः । इत्वरः । नश्वर. । 'गमेष्ट्वरपि गत्वर इति निपात्यते' गत्वरी ।

**स्म्यजसहिंसदीपकम्पकमनमो रः । ५ । २ । ७९ ।**

भ्य. शीलादिसदर्थे र. प्रत्ययो भवति । स्मेरम् । अजस्रम् । हिंस्रः । दीप्रः । कम्प्र. । कम्रः । नम्रः ।

**तृषि-धृषि-स्वपो नजिङ् । ५ । २ । ८० ।**

एभ्यः शीलादिसदर्थे नजिङ् भवति । तृष्णक् । धृष्णक् । स्वप्नक् ।

**स्थेश-भास-पिस-कसो वरः । ५ । २ । ८१ ।**

एभ्य शीलादिसदर्थेभ्यो वर भवति । स्थावरः । ईश्वरः । भास्वर । पेस्वर । कस्वर । 'यङन्तयाधातो यायावर इति निपात्यः'।

**प्रात् सू-जोरिन् । ५ । २ । ७१ ।**

प्रात् पराभ्यामाभ्यां शीलादिसदर्थाभ्यामिन् प्रत्ययो भवति । प्रसवी । प्रजवी ।

**जीण्दृक्षिविश्रिपरिभूवमाभ्यमाव्यथः । ५ । २ । ७२ ।**

एभ्यः शीलादिसदर्थे इन् भवति । जयी । अत्ययी । आदरी । क्षयी । विश्रयी । परिभवी । वमी । अभ्यमी । अव्यथी ।

**दिद्युद्-दद्दज्जगज्जुहू-वाक्-प्राड्-धी-श्री-द्रू स्रू-ज्वायतस्तू-कटप्रू-परिवाड्-भ्राजादयः क्विपः । ५ । २ । ८३ ।**

एते क्विबन्ता निपात्यन्ते । दिद्युत् । दद्दत् । जगत् । जुहू । वाक् । शब्दप्राट् । धी । श्री । शतद्रू । स्रू । जूः । आयतस्तू । कटप्रू । परिव्राड् । विभ्राड् । भा ।

**शं-सं-स्वयं-विप्राद् भुवो डुः । ५ । २ । ८४ ।**

एभ्य परात् सदर्थाद् भवतेः डु प्रत्ययो भवति । शम्भुः । संभुः । स्वयंभु । विभुः । प्रभुः । 'पूधातोरित्रो वक्तव्यो दैवतेऽर्थे'

पवित्रोऽर्हन् । 'ऋषावर्थे सञ्ज्ञायां च पूधातोः करणे इत्रो वक्तव्यः' । पुनात्यनेनेति पवित्रः ऋषि, दर्भो वा ।

**लू-धू-सू-खन-चर-सहार्तेः । ५ । २ । ८७ ।**

एभ्य सदर्थेभ्यः करणे इत्रो भवति । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । चरित्रम् । सहित्रम् । अरित्रम् ।

**नीदांव्शसूयुयुजस्तुतुदसिसिचमिहपतपानहस्त्रट् । ५ ।२। ८८।**

एभ्य सदर्थेभ्यः करणे त्रट् भवति । नेत्रम् । *दात्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । पात्रम् । नध्री । 'पूधातो हलास्ये क्रोडास्ये च करणे त्रट् वाच्यः' पोत्र हलमुखं क्रोडमुखं वा । 'दंशेः करणे दंष्ट्रा निपात्यते' 'धाधातो कर्मणि धात्री निपात्यते' ।

**क्त-क्तवतू । ५ । १ । १७४ ।**

भूतार्थाद् धातो क्त-क्तवतू भवत. । कृतः । भूतः । पक्व. । एधित. । भूतवान् । कृतवान् ।

**उात शवर्हाद्भ्यः क्तौ भावारम्भे । ४ । ३ । २६ ।**

उकारोपान्त्येभ्य. शवर्हेभ्योऽदादिभ्यश्च धातुभ्यः परौ भावारम्भे विहितौ क्त-क्तवतू सेटौ वा किद्वद् भवतः । कुचितम्, कोचितमनेन । प्रकुचितः, प्रकोचितः । प्रकुचितवान्, प्रकोचितवान् । रुदितम्, रोदितं तैः । प्ररुदितः, प्ररोदित । प्ररुदितवान्, प्ररोदितवान् ।

**न डीङ्शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदः । ४ । ३ । २७ ।**

एभ्य' परौ सेटौ क्त-क्तवतू किद्वद् न भवत' । डयित' । डयितवान् । शयित' । शयितवान् । पवितः । पवितवान् । धर्षितः । धर्षितवान् । क्ष्वेदित । क्ष्वेदितवान् । स्वेदित' । स्वेदितवान् । मेदित. । मेदितवान् । सेटावित्येव डीन' । डीनवान् ।

**मृषः क्षान्तौ । ४ । ३ । २८ ।**

क्षमार्थाद् मृष्धातो सेटौ क्त-क्तवतू किद्वद् न भवत' । मर्षितः । मर्षितवान् ।

**ह्लादो ह्लद् क्तयोश्च । ४ । २ । ६७ ।**

ह्लादः क्तयो. क्तौ च परेषु ह्लद् भवति । ह्लन्न. । ह्लन्नवान् । ह्लत्तिः ।

**ऋल्वादेरेषां तो नोऽप्रः । ४ । २ । ६८ ।**

पृवर्जाद् ॠदन्ताद् ल्वादिभ्यश्च परेषां क्त-क्तवतु-क्तीनां तस्य नो भवति । तीर्ण । तीर्णवान् । तीर्णिः । लून. । लूनवान् । लूनिः । धून । धूनवान् । धूनि' । अप्र इति किम् । पूर्त. । पूर्तवान् । पूर्ति' ।

**रदादमूर्च्छमदः क्तयोर्दस्य च । ४ । २ । ६९ ।**

मूर्च्छिमदिवर्जिताद् रकारान्ताद् दकारान्ताच्च धातो' परयोः क्तक्तवत्वो' तो नो भवति, तत्संनियोगे धातोर्दस्यापि नो भवति । पूर्ण । पूर्णवान् । गूर्णः । गूर्णवान् । भिन्नः । भिन्नवान् । छिन्नः । छिन्नवान् । अमूर्च्छमद इति किम् ? मूर्तः, मूर्तवान् । मत्तः, मत्तवान् । रदादिति किम् ? चरितम्, मुदितम् अत्रेटा व्यवधानान्न भवति ।

**सूयत्याद्योदितः । ४ । २ । ७० ।**

नवभ्य. सूयत्यादिभ्य ओदिद्भ्यश्च परयोः क्तयोः तो नो भवति । सूनः । सूनवान् । दूनः । दूनवान् । लग्नः । लग्नवान् । उद्विग्नः । उद्विग्नवान् । पीन. । पीनवान् । शून । शूनवान् ।

**व्यञ्जनान्तस्थातोऽख्याध्यः । ४ । २ । ७१ ।**

ख्याध्यावर्जस्य धातोर्यद् व्यञ्जनं तस्मात् परा याऽन्तस्था तस्याः परो य आकार तस्मात् परयो क्तयो तो नो भवति । स्त्यान. । स्त्यानवान् । व्यञ्जनेति किम् ? यात । अन्तस्था इति किम् ? स्नात । आत इत्येव च्युत. । अख्याध्य इति किम् ? ख्यातः, ख्यातवान् , ध्यात, ध्यातवान् । आतः परस्येति किम् ? दरिद्रितः ।

**पूदिव्यञ्चेर्नाशाद्यूतानपादाने । ४ । २ । ७२ ।**

एभ्यो यथासंख्यं नाशाद्यर्थेभ्य परयोः क्तयो तो नो भवति। पूना यवाः । आद्यूनः । समक्नौ पक्षौ । नाशाद्यूतानपादान इति किम् ? पूतम् , द्यूतम्, उदक्तम् ।

**सेर्ग्रासे कर्मकर्तरि । ४ । २ । ७३ ।**

से परयोः क्तयो ग्रासे कर्मकर्तरि तो नो भवति । सिनो ग्रासः स्वयमेव । कर्मकर्तरीति किम् ? सितो ग्रासो मंत्रेण ।

**क्षेः क्षी चाध्यार्थे । ४ । २ । ७४ ।**

घ्यणोऽर्थो भावकर्मणी, ततोऽन्यस्मिन्नर्थे क्तयोः तः क्षेः परस्य नो भवति, तद्योगे क्षेः क्षी च। क्षीणः। क्षीणवान्। अघ्यार्थे इति किम्? क्षितमस्य।

वाऽऽक्रोश-दैन्ये। ४। २। ७५।

आक्रोशे दैन्ये च गम्ये क्षेः परयोः क्तयोः तो नो वा भवति, तद्योगे क्षी च। क्षीणायुः, क्षितायुर्जाल्म। क्षीणकः, क्षितकः तपस्वी।

ऋ-ह्री-घ्रा-ध्रा-त्रोन्द-नुद-विन्तेर्वा। ४। २। ७६॥

एभ्यो धातुभ्यः परस्य क्तयोः तकारस्य वा नकारो भवति। ऋणम्, ऋतम्। ह्रीणः, ह्रीतः। घ्राणः, घ्रातः। ध्राणः, ध्रातः। त्राणः, त्रातः। समुन्नः, समुत्तः। नुन्नः, नुत्तः। विन्नः, वित्तः। ऋणवान्, ऋतवान्। ह्रीणवान्, ह्रीतवान्। घ्राणवान्, घ्रातवान्। त्राणवान्, त्रातवान्। विन्नवान्, वित्तवान्।

दुगोरू च। ४। २। ७७।

अनयोः क्तयोः तकारस्य नकारो भवति, तद्योगेऽनयोरूकारश्चान्तादेशः। दूनः। दूनवान्। गूनः। गूनवान्।

क्षै-शुषि-पचो म-क-वम्। ४। २। ७८।

एभ्यः परयोः क्तयोः यथासंख्यं मकवा भवन्ति। क्षामः। क्षामवान्। शुष्कः। शुष्कवान्। पक्वः। पक्ववान्। 'अवाते कर्तरि निर्वाणो निपात्यः' निर्वाणो मुनिः। वाते कर्तरि निर्वातः।

**अनुपसर्गाः क्षीवोल्लाघ-कृश-परिकृश-फुल्लोत्फुल्ल-संफुल्लाः। ४ । २ । ८० ।**

उपसर्गरहिता एते क्तान्ता निपात्यन्ते । क्षीवृ मदे क्षीवः । ल्लाघृ सामर्थ्ये उल्लाघः । कृश तनुकरणे कृशः, परिकृशः । ञिफला विशरणे फुल्लः, उत्फुल्लः, संफुल्लः ।

**भित्तं शकलम् । ४ । २ । ८१ ।**

भिदेः परस्य क्तस्य शकलपर्याये नत्वाभावो निपात्यते । भित्तं शकलमित्यर्थः ।

**वित्तं धन-प्रतीतम् । ४ । २ । ८२ ।**

विन्दते परस्य क्तस्य धनप्रतीतरूपे पर्याये नत्वाभावो निपात्यते । वित्तं धनमित्यर्थः । वित्त प्रतीत इत्यर्थ । अन्यत्र विन्नः ।

**प्राद् दागस्त आरम्भे क्ते । ४ । ४ । ७ ।**

प्रपूर्वादारम्भार्थस्य दाग क्ते परे त्तो वा भवति । प्रत्तः, प्रदत्तः ।

**नि-वि-स्वन्ववात् । ४ । ४ । ८ ।**

एभ्यः परस्य दाग क्ते परे त्तो वा भवति । नीत्तम्, निदत्तम् । वीत्तम्, विदत्तम् । सूत्तम्, सुदत्तम् । अनूत्तम्, अनुदत्तम् । अवत्तम्, अवदत्तम् ।

**स्वरादुपसर्गाद् दस्ति कित्यधः । ४ । ४ । ९ ।**

स्वरान्तादुपसर्गात् परस्य दासञ्ज्ञकस्य तादौ किति परे त्तो भवति, धाधातुं वर्जयित्वा । प्रत्त. । प्रत्तवान् ।

**दत् । ४ । ४ । १० ।**

धावर्जितस्य दासञ्ज्ञकस्य तादौ किति परे दत् भवति । दत्त. । दत्तवान् ।

**दो–सो–मा–स्थ इः । ४ । ४ । ११ ।**

एषां तादौ किति परे इर्भवति । निर्दितः । सित्वा । मितिः । स्थितः । स्थितवान् ।

**छा–शोर्वा । ४ । ४ । १२ ।**

अनयोः तादौ किति परे इकारो वा भवति । अवच्छातः, अवच्छितः । निशित', निशातः ।

**हाको हि क्त्वि । ४ । ४ । १४ ।**

हाक क्त्वाप्रत्यये परे हिः भवति । हित्वा । क्त्वीति किम् ? हीनम् ।

**धागः । ४ । ४ । १५ ।**

धागस्तादौ किति परे हि. भवति । हित । विहित' । हित्वा ।

**उवर्णात् । ४ । ४ । ५८ ।**

उवर्णान्तादेकस्वराद् धातोर्विहितस्य कित आदिरिड् न भवति । युतः । लून' ।

**डीयश्व्यैदितः क्तयोः । ४ । ४ । ६१ ।**

डीङ्‌च्‌धानोः श्वे ऐदिद्भ्यश्च धातुभ्य क्तयोरादिरिड् न भवति । डीन । डीनवान् । शूनः । शूनवान् । त्रस्तः । त्रस्तवान् ।

**वेटोऽपतः । ४ । ४ । ६२ ।**

विकल्पेनेड् येभ्यस्तेभ्यः पत्लृवर्जेभ्य एकस्वरेभ्यः क्तयोरादिरिड् न भवति । रद्ध । रद्धवान् । अपत इति किम् ? प्रतितः ।

**सं–नि–वेरर्दः । ४ । ४ । ६३ ।**

एभ्यः परादर्देः क्तयोः आदिरिड् न भवति । समर्ण्णः । समर्ण्णवान् । न्यर्ण्णः । न्यर्ण्णवान् । व्यर्ण्ण । व्यर्ण्णवान् ।

**अविदूरेऽभेः । ४ । ४ । ६४ ।**

अभेः परादर्देरविदूरेऽर्थे क्तयोरादिरिड् न भवति । अभ्यर्ण्ण. । अभ्यर्ण्णवान् ।

**वर्तेर्वृत्तं ग्रन्थे । ४ । ४ । ६५ ।**

ण्यन्ताद् वृते क्तप्रत्यये ग्रन्थविषये वृत्तमिति निपात्यते । वृत्तो गुणश्छात्रेण ।

**धृष–शसः प्रगल्भे । ४ । ४ । ६६ ।**

आभ्यां क्तयोरादिरिड् न भवति प्रगल्भेऽर्थे । धृष्टः । विशस्तः प्रगल्भ इत्यर्थ. ।

**कषेः कृच्छ्र–गहने । ४ । ४ । ६७ ।**

कषधातो. परयोः कृच्छ्रे गहने चार्थे क्तयोरादिरिड् न भवति । कष्टोऽग्निः । कष्टं वनम् ।

**घुषेरविशब्दे । ४ । ४ । ६८ ।**

अविशब्दार्थाद् घुषेः क्तयोरादिरिड् न भवति । घुष्टा रज्जु । घुष्टवान् ।

**बलि-स्थूले दृढः । ४ । ४ । ६९ ।**

बलवति स्थूले चार्थे दृहेः दृंहेर्वा क्तान्तस्य दृढ इति निपात्यते । दृढ बली स्थूलो वा । बलिस्थूल इति किम् ? दृहितम्, दृंहितम् ।

**क्षुब्धविरिब्धस्वान्तध्वान्तलग्नम्लिष्टफाण्टबाढपरिवृढं मन्थस्वरमनस्तमःसक्तास्पष्टानायासभृशप्रभौ । ४ । ४ । ७० ।**

एते क्तप्रत्ययान्ता मन्थादिष्वर्थेषु निपात्यन्ते । क्षुब्धः सरित्पतिः । विरिब्ध. स्वरः । स्वान्तं मनः । ध्वान्तं तमः । लग्नमासक्तम् । म्लिष्टमस्पष्टम् । फाण्टमनायाससाध्यम् । बाढं भृशम् । परिवृढः प्रभु ।

**आदितः । ४ । ४ । ७१ ।**

आदितो धातो परयो. क्तयोरादिरिड् न भवति । मिन्नः । मिन्नवान् ।

**नवा भावारम्भे । ४ । ४ । ७२ ।**

आरम्भः प्रथमा क्रिया । आदितो धातोः आरम्भे भावे चार्थे

क्तयोरादिरिड् वा भवति। भिन्नमनेन, मेदितं वा। प्रभिन्नः, प्रमेदितः। प्रभिन्नवान्, प्रमेदितवान्।

**शकः कर्मणि। ४। ४। ७३।**

शकेः कर्मणि क्तयोरादिरिड् वा भवति। शक्तः, शकितो वा घटः कर्तुं चैत्रेण।

**णौ दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्तम्। ४। ४। ७४।**

दमादीनां धातूनां णौ सति क्ते परे एतानि निपात्यन्ते वा। दान्तः, दमितः। शान्तः, शमितः। पूर्णः, पूरितः। दस्तः, दासितः। स्पष्टः, स्पाशितः। छन्नः, छादितः। ज्ञप्तः, ज्ञपितः।

**श्वसजपवमरुषत्वरसंघुषास्वनामः। ४। ४। ७५।**

एभ्यो धातुभ्यः क्तयोरादिरिड् वा भवति। श्वस्तः, श्वसितः। जप्तः, जपितः। जप्तवान्, जपितवान्। वान्तः, वमितः। वान्तवान्, वमितवान्। रुष्टः, रुषितः। रुष्टवान्, रुषितवान्। तूर्णः, त्वरितः। तूर्णवान्, त्वरितवान्। संघुष्टम्, संघुषितम्। संघुष्टवान्, संघुषितवान्। आस्वान्तः, आस्वनितः। अभ्यमितः, अभ्यान्तः।

**हृषेः केशलोमविस्मयप्रतीघाते। ४। ४। ७६।**

हृषेः केशाद्यर्थेषु क्तयोरादिरिड् वा भवति। केशलोमकर्तृका क्रिया केशलोमशब्देनोच्यते। हृष्टाः, हृषिता वा केशाः। हृष्टानि, हृषितानि वा लोमानि। हृष्टः, हृषितो वा जिनदत्तः।

हृष्टाः, हृषिता वा दन्ताः प्रतिहता इत्यर्थः । 'अपपूर्वात् चाय्धातोः क्तान्तस्येडभावः चिश्चादेशो निपात्यते' । अपचितः । 'अनुपसर्गस्य प्यायतेः क्तयोः पी' इति पीनः । पीनवान् । पीनवद् मुखम् ।

---

## अथोणादिगणः ।

**कृवापाजिस्वदिसाध्यशौदृस्नासनिजनिरहीण्भ्य उण् ॥१॥**

सत्यर्थे वर्तमानेभ्यः करोत्यादिभ्यो धातुभ्यः सम्प्रदानापादानाभ्यामन्यस्मिन् कारके भावे च सञ्ज्ञायां विषये बहुलमुण् प्रत्ययो भवति । करोति कृणोति वा कारु नापितादि, इन्द्रश्च । वाति वायति वा द्रव्याणि वायुः नभस्वान् । पिबति तैलादि द्रव्यमनेन पायुः अपानमुपस्थश्च । जयति रोगान् श्लेष्माणं वाऽनेन जायुः औषधं पित्तं वा । स्वद्यतेऽनेनेदं वा स्वादु. रुच्यः । साध्नोति उत्तमक्षमादिभिः तपोविशेषैः भावितात्मा स्वपरकार्याणीति साधुः, वा सम्यग्दर्शनादिभिः साध्नोति परमं पदं साधुः संयतः, उभयलोकं साधयतीति साधुः धर्मशीलः । अश्नुते तेजसा सर्वमिति आशुः सूर्यः । अश्नुते आशुः शीघ्रगामी । दरति दृणाति वा दारु काष्ठम् । स्नायति स्नायु अस्थिनहनम् । सनति सनोति वा मृगादीनिति सानुः पर्वतैकदेशः । जायते आकुञ्चनादि

अनेन जानु ऊरुजङ्घासन्धिमण्डलम् । रहति गृहीत्वा सूर्याचन्द्रमसौ स्वशरीरं वा राहुः सैंहिकेयः । एतीत्यायुः पुरुषः शाकटम् औषधं जीवनं पुरूरवःपुत्रो वा । एवं जरायुः गर्भवेष्टनम् । जटायुः पक्षी । धनायुः देशः । रसायुः भ्रमरः ॥ १ ॥

**अः ॥ २ ॥**

सर्वधातुभ्यो यथायोगमकारः प्रत्ययो भवति । भवः । तरः । वरः । शयः । स्तवः । प्लवः । परः । करः । चरः । वदः इत्यादि ॥ २ ॥

**नञः क्रमिगमिशमिखन्याकमिभ्यो डित् ॥ ३ ॥**

नञः परेभ्य एभ्यः अः प्रत्ययो भवति, स च डिद् । न क्रामति नक्रः जलचरो ग्राहः । न गच्छति नगः पर्वतः वृक्षश्च । न शाम्यति नशः यक्षः पिशाचो वा । न खनति नखः करजः । नात्राकमस्तीति नाकः स्वर्गः ॥ ३ ॥

**कृगो द्वे च ॥ ७ ॥**

करोतेः किद्प्रत्ययो भवति, धातोश्च द्वित्वम् । करोतीति चक्रं रथाङ्गमायुधं च ॥ ७ ॥

**पॄ-पलिभ्यां टित् पिप् च पूर्वस्य ॥ ११ ॥**

आभ्यामः प्रत्ययो भवति स च टिद्, अनयोश्च सरूपे द्वेरूपे पूर्वस्थाने पिपादेशश्च भवति । पृणाति च्छायया पिप्परी वृक्षजातिः । पलति आतुरं पिप्पली औषधजातिः ॥ ११ ॥

**दृकृनृसृशृधृवृमृस्तुकुक्षुलङ्घिचरिचटिकटिकण्टिचणिचषिफलिवमितम्यविदेविबन्धिकनिजनिमशिक्षारिकूरिवृतिवाह्लिमल्लिसल्लयलिभ्योऽकः ॥ २७ ॥**

एभ्यो धातुभ्य अक॰ प्रत्ययो भवति। दृणाति दरक॰ भीरुः। करकः जलभाजनम् कमण्डलुश्च। करका वर्षपाषाण॰। नरकः निरयः। सरक मद्यविशेष॰। सरका मधुपानवार॰। भरकः गौण्यादिः। धरक॰ सुवर्णोन्माननियुक्तः। वरक वधूजातिसहायः वृक्षजातिविशेषश्च। मरकः जनोपद्रवः। स्तबक॰ पुष्पगुच्छः। कवकम् अभक्ष्यद्रव्यविशेष॰। क्षवकः राजसर्षप॰। लङ्घक रङ्गोपजीवी। चरक॰ मुनिः। चटकः पक्षी। कटकः वलय॰। कण्टक॰ तरुरोम। चणकः मुनि॰ धान्यविशेषश्च। चषक॰ पानभाजनम्। फलक॰ खेटकम्। वमकः कर्मकर॰। तमकः व्याधिः क्रोधश्च। अवका शैवलम्। देवका अप्सराः। देविका नदी। बन्धकः चारकपालः। कनकं सुवर्णम्। जनकः सीतापिता। मशकः क्षुद्रजन्तुः। क्षारकं बालमुकुलम्। कोरकं प्रौढमुकुलम्। वर्तका वर्तिका वा शकुनिः। वल्लकी वीणा। मल्लक शराव॰। मल्लिका पुष्पजातिः दीपाधारश्च। सल्ल॰ सौत्रो धातु॰ सल्लकी वृक्षः। अलक॰ केशविन्यास॰। अलका पुरी ॥ २७ ॥

**कीचकपेचकमेनकार्भकधमकवधकलघकजहकैरकैडकाश्मकलमकक्षुल्लकवट्वकाढकादयः ॥ ३३ ॥**

कीचकादय॰ शब्दा अकप्रत्ययान्ता निपात्यन्ते। कचि

बन्धने कीचकः वंशविशेषः । पचीष् पाके पेचकः करिजघनभागः । मचि कल्कने मेचकः वर्णः । मनिच् ज्ञाने मेनका अप्सराः । ऋ गतौ अर्भकः बालः । ध्मां शब्दाग्निसंयोगयोः धमकः कीटः कर्मारश्च । हनंक् हिसायां वधकः हन्ता व्याधिश्च । वधकं पद्मबीजम् । वृत्रवधः शक्रः । लघुङ् गतौ लघकः असमीक्ष्यकारी । जहकः निर्मोचकः कालः क्षुद्रश्च । ईरिक् गति-कम्पनयोः एरका उदकतृणजातिः । ईडिक् स्तुतौ एडका अविजातिः । अशौटि व्याप्तौ अश्मका जनपदः । रमि क्रीडायां लमकः ऋषिविशेषः । क्षुदृंपी सपेषे । क्षुल्लकं दभ्रम् । क्षुधं लातीति क्षुल्लः, क्षुल्ल एव क्षुल्लकः । वट वेष्टने वट्वका तृणपुञ्जः । आङ्पूर्वाद् ढौकतेः आढकं मानम् । आदिग्रहणात् कला आपिबन्तीति कलापकाः शास्त्राणि । कथयतीति कथकः तोटकानामाख्यायिकादीना च वर्णयिता ॥ ३३ ॥

**शलिबलिपतिवृतिनभिपटितटितडिगडिभन्दिवन्दिमन्दिनमिकु-दुपूमनिखजिभ्य आकः ॥ ३४ ॥**

एभ्यो धातुभ्य आकः प्रत्ययो भवति । पल फल शल गतौ, शलि चलने वा शलाका एषणी पूरणरेखा द्यूतोपकरणं सूची च । बल प्राणनधान्यावरोधयोः बलाका जलचरी शकुनिः । पत्ल गतौ पताका वैजयन्ती । वृतूङ् वर्तने वर्ताका शकुनिजातिः । णभच् हिसायां नभाकः चक्रवाकजातिः तमः काकश्च । पट गतौ पटाका वैजयन्ती पक्षिजातिश्च । तट उच्छ्राये तटाकं सरः । तडण् आघाते

तडाकं सरः । गड सेचने गडाकः शाकजातिः । भदुङ् सुखकल्याणयोः भन्दाकं शासनम् । वदुङ् स्तुत्यभिवादनयोः वन्दाकः चीवरभिक्षु । मदुङ् स्तुत्यादिषु मन्दाका औषधी । णमं प्रह्वत्वे नमाकः म्लेच्छजातिः । कुङ् शब्दे कवाक. पक्षी । टुदुट् उपतापे दवाकः म्लेच्छः । पूङ् पवने पवाका वात्या । मनिच् ज्ञाने मनाका हस्तिनी । खज मन्थे खजाक' आकर. मन्थाः दर्विः आकाशं बन्धकी शरीरं पक्षी च ॥ ३४ ॥

**मवाक–श्यामाक–वार्ताक–वृन्ताक–ज्योन्ताक–गूवाक-भद्राकादयः ॥ ३७ ॥**

एते आकप्रत्ययान्ता निपात्यन्ते । मव्य बन्धने मवाकः रेणुः । श्यैङ् गतौ श्यामाक' जघन्यो व्रीहिः । वृतूङ् वर्तने वार्ताकी शाकविशेष' तत्फल वार्ताकम् । स्वरान्नोन्तश्च वृन्ताकी उच्चवृहती तत्फलं वृन्ताकम् । ज्युङ् गतौ स्विद्यमानो ज्यवतेऽस्मिन्निति ज्योन्ताकम् स्वेदसद्मविशेषः । गुंत् पुरीषोत्सर्गे, गुङ् शब्दे वा गूवाकं पूगफलम् । भदुङ् सुखे कल्याणे च भद्राकः अकुटिलः॥३७॥

**क्रीकल्यलिदलिस्फटिदूषिभ्य इकः ॥ ३८ ॥**

एभ्य इकः प्रत्ययो भवति । डुक्रींग्श् द्रव्यविनिमये क्रयिकः क्रेता । कलि शब्द–संख्यानयोः कलिका कोरकः । उत्कलिका ऊर्मिः । अली भूषणादौ अलिकं ललाटम् । दल विशरणे दलिकं दारु । स्फट स्फुट्ट विशरणे स्फटिकः मणिः। दुषंच् वैकृत्ये दूषिका नेत्रमलः ॥ ३८ ॥

**आङः पणि–पनि–पदि–पतिभ्यः ॥ ३९ ॥**

आङ्परेभ्य एभ्य इकः प्रत्ययो भवति। पणि व्यवहारस्तुत्योः आपणिकः पत्तनवासी व्यवहारज्ञो वा। पनि स्तुतौ आपनिकः स्तावकः इन्द्रनील. इन्द्रकीलो वा । पदिच् गतौ आपदिकः इन्द्रनीलः इन्द्रकीलो वा । पत्लृ गतौ आपतिकः पथि वर्तमानः मयूरः श्येनः कालो वा ॥ ३९ ॥

**नसि–वसि–कसिभ्यो णित् ॥ ४० ॥**

एभ्यो णिद् इक. प्रत्ययो भवति । णसि कौटिल्ये नासिका घ्राणम् । वसं निवासे वासिका माल्यदामविशेष । कस गतौ कासिका वनस्पतिः ॥ ४० ॥

**पापुलिकृषिक्रुशिव्रश्चिभ्यः कित् ॥ ४१ ॥**

एभ्यः किद् इकः प्रत्ययो भवति । पां पाने पिकः कोकिलः । पुल महत्त्वे पुलिकः मणिः । कृषींत् विलेखने कृषिक. पामरः । क्रुश आह्वानरोदनयोः क्रुशिक क्रोष्टुक. उलूकश्च । ओव्रश्चौत् छेदने वृश्चिकः सविष कीटः राशिश्च नक्षत्रपादनवकरूपः ।

**प्राङः पणि–पनि–कषिभ्यः ॥ ४२ ॥**

प्राङ् एतस्मादुपसर्गसमुदायात् परेभ्य एभ्यः किदिकः प्रत्ययो भवति । पणि व्यवहारस्तुत्योः प्रापणिकः वणिक् । पनि स्तुतौ प्रापनिकः पथिक. । कष हिंसायां प्राकषिकः वायुः खलः नर्तकः मालाकारश्च ॥ ४२ ॥

**मृणीकास्तीकप्रतीकपूतीकसमीकवाहीकवाह्लीकवल्मीककल्मलीकतिन्तिडीककङ्कणीककिङ्कणीकपुण्डरीकचञ्चरीकफर्फरीकझर्झरीकघर्घरीकादयः ॥ ९० ॥**

एते किदीकप्रत्ययान्ता निपात्यन्ते। सृ गतौ सृणीक वायुः अग्नि अशनिः उन्मत्तश्च। सृणीका लाला। असूक् भुवि अस्तीक जरत्कारुसुत। प्रांक् पूरणे प्राति शरीरमिति प्रतीकः वायु अवयव सुखं च। सुप्रतीक दिग्गज। पूङ् पवने पूतीकं तृणजाति। इण् गतौ संयन्ति अस्मिन्निति समीक सग्राम। वहीं प्रापणे, वह्ल गतौ वाहीक वाह्लीक एतौ देशौ। वल संवरणे वल्मीक नाकु। कल संख्याने कल्मलीक ज्वाला। तिम तिन्तिडीक. पक्षी वृक्षाम्लश्च। चङ्क्यते कङ्कण् च कङ्कणीक घण्टाजालम्। किम. परात् कणते किङ्किणीका घण्टिका। पुणेः पुण्डरीकं पद्मं छत्रं व्याघ्रश्च। चञ्चेः चञ्चरीक भ्रमर। पिपर्तेर्द्वित्वं गुण पकारयोः फत्वं रश्च पूर्वस्यान्त. फर्फरीकं पल्लवं पादुका मर्दलिका च। झीर्यते द्वित्व तृतीयाभाव. पूर्वस्य रश्चान्तः झर्झरीक देह। झर्झरीका वादित्रभाण्डम्। घग्तेः घर्घरीका घण्टिका ॥ ९० ॥

**कञ्चुकांशुकनंशुकपाकुकहिबुकचिबुकजम्बुकचुलुकचूचुकोल्मुकभावुकपृथुकमधुकादयः ॥ ९७ ॥**

एते किदुकप्रत्ययान्ता निपात्यन्ते। कचि बन्धने, अशौटि

व्याप्ता, नशौच् अदर्शने एषा स्वरान्नोन्तश्च कञ्चुक कूर्पास । अंशुक वस्त्रम् । नशुक रणरेणु प्रवासशील: चन्द्र प्रावरण च । पचे. पाक् च पाकुक: लनुपाची सूप: सूपकार: अध्वर्युश्च । हिनोतिचिनोतिनमतीनां बोऽन्तश्च हिबुकं लग्नाच्चतुर्थस्थान रसातल च । चिबुक मुखाधोभाग । जम्बुक शृगाल । चुलुम्प सौत्रो धातु. अन्त्यस्वरादिलोपश्च चुलुक करकोश. । चतेश्चूच् च चूचुक स्तनाग्रभाग । ज्वलेरुल्म् च उल्मुकम् अलातम् । भातेर्वोन्तश्च भावुक भगिनीपति । प्रथिष् प्रख्याने पृथुक शिशु व्रीह्याद्यभ्यूषश्च । मचि कल्कने धन्तादेशश्च मधुक यष्टिमधु ॥ ९७ ॥

**मृमन्यञ्जिजलिवलितलिमलिमल्लिभालिमण्डिबन्धिभ्य ऊकः ॥ ९८ ॥**

एभ्यो धातुभ्य ऊक प्रत्ययो भवति । मृत् प्राणत्यागे मरूक: मयूर मृग निदर्शनेभ तृणं च । मनिंच् ज्ञाने मनूक: कृमिजाति । अञ्जौप् व्यक्तिम्रक्षणगतिषु आञ्जूक हिस्त्र । जल घात्ये जलूका जलजन्तु । बल प्राणनधान्यावरोधयो बलूक उत्पलमूलं मत्स्यश्च । तलण् प्रतिष्ठायां तलूक त्वक्कृमि: । मलि धारणे मलूक सरोजशकुनि. । मल्लि धारणे मल्लूक कृमिजाति: । भलिण् आभण्डने भालूक ऋक्ष । मडु भूषाया मण्डूक दुर्दुर । बन्धश् बन्धने बन्धूक बन्धूजीव ॥ ९८ ॥

**शम्बूकशाम्बूकवृधूकमधूकोलूकोरबूकवरूकादयः ॥ ९९ ॥**

एतं ऊकप्रत्ययान्ता निपात्यन्ते । शमूच् उपशमे शम्बूक, शाम्बूक शङ्ख । वृश् वरणे वृधूक मातृवाहक । वृधूक जलम् । मदे मधूक वृक्ष । अलेः उलूकः काकारि । उरुपूर्वाद् वानेः उरुवूक एरण्ड । वृधेः वरूक तृणजाति ॥ ६१ ॥

जीवेरातृको जैव् च ॥ ६७ ॥

जीव प्राणधारणे इत्यस्मादातृक प्रत्ययो भवति, जैव् इत्यादेशश्च । जैवातृक आयुष्मान् चन्द्र. आम्र. वैद्य मेघश्च । जैवातृका जीवद्वत्सा स्त्री ॥ ६७ ॥

कृति-पुति-लति-भिदिभ्यः कित् ॥ ७६ ॥

एभ्य कित् तिक प्रत्ययो भवति। कृतैत् छेदने कृत्तिका नक्षत्रम् । पुतिलती सौत्रौ पुत्तिका मधुमक्षिका । लत्तिका वाद्यविशेषः गौः गोधा च । गोपूर्वाद् गोलत्तिका गृहगोलिका। अवपूर्वाद् अवलत्तिका गोधा । आलत्तिका गानप्रारम्भ । भिदृंपी विदारणे भित्तिका कुड्यम् माषादिचूर्णं शरावती नदी च ॥ ७६ ॥

चण्डि-भल्लिभ्यामातकः ॥ ८२ ॥

आभ्यामातक प्रत्ययो भवति । चडुङ् कोपे चण्डातकः नर्तक्यादिवासः । भल्लि परिभाषणहिंसादानेषु भल्लातकः वृक्ष ॥८२॥

श्लेष्मातकाम्रातकामिलातकपिष्टातकादयः ॥ ८३ ॥

एते आतकप्रत्ययान्ता निपात्यन्ते । श्लिषेः श्लेष्मातकः

कफेलु । अमण् रोगे आम्रातकः वृक्षः । नञ्पूर्वात् म्लैधातोः मिलादेशे अमिलातकं वर्णपुष्पम् । पिषेः पिष्टातकं वर्णचूर्णम् ॥८३॥

**गम्यमिरम्यजिगद्यदिछागडिखडिगॄभृवृस्वृभ्यो गः ॥ ९२ ॥**

एभ्यो ग. प्रत्ययो भवति । गम्लृ गतौ गङ्गा देवनदी । अम् गतौ अङ्गम् शरीरावयव. । अङ्ग समुद्रः वह्नि राजा च । अङ्गा जनपद । रमि क्रीडायां रङ्ग' नाट्यस्थानम् । अज क्षेपणे च वेगः त्वरा रेतश्च । गद व्यक्ताया वाचि गद्ग वाग्विकलः । अदंक् भक्षणे अद्ग समुद्रः अग्नि पुरोडाशश्च । छोंच् छेदने छाग बस्त । गड सेचने गड्ग मृगजाति । खडण् भेदे खड्गः मृगविशेष असिश्च । गॄत् निगरणे गर्ग. ऋषिः । टुडुभृंगक् पोषणे च भर्ग' रुद्र सूर्यश्च । वृगट् वरणे वर्ग संघात. । औस्वृ शब्दोपतापयो. स्वर्ग नाक. ॥ ९२ ॥

**पति-तमि-तॄ-पॄ-कॄ-शॄ-लवादेरङ्गः ॥ ९८ ॥**

एभ्योऽङ्ग' प्रत्ययो भवति । पत्लृ गतौ पतङ्ग पक्षी शलभ. सूर्य शालिविशेषश्च । तमूच् काङ्क्षाया तमङ्ग हर्म्यनिर्यूहः । तॄ प्लवनतरणयोः तरङ्गः ऊर्मि । पॄश् पालनपूरणयोः परङ्गः खग. वेगश्च । कॄग् विक्षेपे करङ्गः कर्मशील । शॄश् हिसायाम् शरङ्ग' पक्षिविशेषः । लूगश् छेदने लवङ्ग' सुगन्धिवृक्ष' ॥ ९८ ॥

**मनेर्मत्–मातौ च ॥ १०० ॥**

मनिच् ज्ञाने इत्यस्माद् धातो. अङ्गः प्रत्ययो भवति, मत्मातौ

चादेशौ भवतः। मतङ्ग ऋषिः हस्ती च। मातङ्ग हस्ती अन्त्यजातिश्च ॥ १०० ॥

**पिशेराचक् ॥ ११६ ॥**

पिशत् अवयवे इत्यस्मादाचक् प्रत्ययो भवति। पिशाचः व्यन्तरजातिः ॥ ११६ ॥

**म्रियतेरीचण् ॥ ११८ ॥**

मृत् प्राणत्यागे इत्यस्मादीचण् प्रत्ययो भवति। मारीचः रावणमातुल ॥ ११८ ॥

**तुदिमदिपद्यदिगुगमिकचिभ्यश्छक् ॥ १२४ ॥**

एभ्यः छक् प्रत्ययो भवति। तुदींत् व्यथने तुच्छ स्तोक.। मदैच् हर्षे मच्छ मत्स्य प्रमत्तपुरुषश्च। मच्छा स्त्री। पदिच् गतौ पच्छ शिला। अदक् भक्षणे अच्छ. निर्मल.। गुंड् शब्दे गुच्छ स्तबकः। गम्लं गतौ. गच्छ. क्षुद्रवृक्ष.। कचि बन्धने कच्छ कूर्मपाद कुक्षिः नद्यवकुटारश्च। कच्छा जनपद ॥१२४॥

**पी-पूङो ह्रस्वश्च ॥ १२५ ॥**

आभ्यां छक् प्रत्ययो ह्रस्वश्च भवति। पीङच् पाने पिच्छं शकुनिपत्रम्। पिच्छः गुणविशेष., यद्वान् पिच्छिल उच्यते। पूङ् पवने पुच्छं वालधि. ॥१२५॥

**वियो जक् ॥ १२७ ॥**

वींक् प्रजनकान्त्यसनखादनेषु च इत्यस्माद् धातोः जक् प्रत्ययो. भवति। बीजम् उत्पत्तिहेतुः ॥ १२७ ॥

**भिषेर्भिष-भिष्णौ च वा ॥ १३१ ॥**

भिषेरज प्रत्ययो भिषभिष्णौ चादेशौ वा भवतः । भिषिः सौत्रो धातुः भिषजः, भिष्णजः वैद्यः । भेषजमौषधम् ॥१३१॥

**मुर्वेर्मुर् च ॥ १३२ ॥**

मुर्वी बन्धने इत्यस्मादज प्रत्ययः, अस्य च मुरित्यादेशश्च भवति । मुरजः मृदङ्गः ॥ १३२ ॥

**उटजादयः ॥ १३४ ॥**

उटजादयः शब्दा अजप्रत्ययान्ता निपात्यन्ते । वटेर्वस्योत्त्वं च उटजः मुनिकुटीरः । आदिशब्दाद् भूर्जः गरुजः इत्यादयोऽपि ॥ १३४ ॥

**दिव्यविश्रुकुकर्विशकिकङ्किकृपिचपिचमिकम्रगेधिकर्किमर्कि-ककिखलृकृसृभृवृभ्योऽटः ॥ १४२ ॥**

एभ्यो धातुभ्योऽटः प्रत्ययो भवति । दिव् च क्रीडादौ देवटः देवकुलविशेषः शिल्पी च । अव रक्षणादौ अवटः प्रपातः कूपश्च । श्रुट् श्रवणे श्रवटः छत्त्रम् । कुट् शब्दे करटः उच्छिष्टम् । कर्व गतौ कर्वटः क्षुद्रपत्तनम् । शक्लृ शक्तौ शकटम् अनः । ककुड् गतौ कङ्कटः सन्नाहः । कङ्कटं सीमा । कृपौङ् सामर्थ्ये कर्पटं वासः । चप सान्त्वने चपटः रसः । चमू अदने चमटः घस्मरः । कमूङ् कान्तौ कमटः वामनः । एधि वृद्धौ एधटः वल्मीकः । कर्कि-मर्की सौत्रौ धातू कर्कटः कपिलः कुलीरश्च । कर्कटी त्रपुसी ।

मर्कटः कपिः क्षुद्रजन्तुश्च । कक्ख हसने कक्खटः कर्कशः । तॄ प्लवनतरणयो तरट' पीनः । डुकृंञ् करणे करट काक' करिकपोलश्च । सृं गतौ सरट. कृकलास । टुडुभृंञ्क् पोषणे च भरटः भृत्य कुलाल प्लवविशेषश्च । वृञ्ट् वरणे वरट क्षुद्रधान्यं प्रहारश्च ॥ १४२ ॥

कपट-कीकटादयः ॥ १४४ ॥

कपटादय' शब्दा अटप्रत्ययान्ता निपात्यन्ते । कम्पेर्नलोपश्च कपटं माया । ककेरत ईच्च कीकट कृपणः । आदिशब्दात् लघट', पर्पट' इत्यादय' ॥ १४४ ॥

तॄ-कॄ-कृपि-कम्पि-कृषिभ्यः कीटः ॥ १५१ ॥

एभ्यो धातुभ्य किदीट प्रत्ययो भवति । तॄ प्लवनतरणयोः तिरीट कूलवृक्षः मुकुटं वेष्टनं च । कॄत् विक्षेपे किरीटं मुकुटं हिरण्यं च । कृपौङ् सामर्थ्ये कृपीटं हिरण्यं जल च । कपुङ् चलने कम्पीटं कम्प कम्प्र च । कृषीत् विलेखने कृषीट जलम् ॥ १५१॥

बन्धेः ॥ १५७ ॥

बन्धश बन्धने इत्यस्मात् किदूट प्रत्ययो भवति । वधूटी प्रथमवया स्त्री ॥ १५७ ॥

कृ-शक-शाखेरोटः ॥ १६० ॥

एभ्यो धातुभ्य ओट. प्रत्ययो भवति । डुकृंग् करणे करोटः

मृत्य. शिरः कपालं च । करोटं भाजनविशेष । शक्लंट् शक्तौ शकोटः बाहु । शाखृ श्लाखृ व्याप्तौ शाखोट वृक्षविशेषः ॥१६०॥

**वनि–कणि–काश्युषिभ्यष्ठः ॥ १६२ ॥**

एभ्यो धातुभ्य ठ प्रत्ययो भवति । वन भक्तौ वण्ठ. अनिविष्टः । कण शब्दे कण्ठ कन्धरा। काशृङ् दीप्तौ काष्ठ दारु । काष्ठा दिक् अवस्था च । उषू दाहे ओष्ठ दन्तच्छद ॥१६२॥

**पी–विशि–कुणि–पृषिभ्यः कित् ॥ १६३ ॥**

एभ्य कित् ठ प्रत्ययो भवति । पीङूच् पाने पीठम् आसनम् । विशंत् प्रवेशने विष्ठा पुरीषम् । कुणत् शब्दोपकरणयो. कुण्ठ अतीक्ष्ण । पृषू सेचने पृष्ठ अङ्कुश शरीरैकदेशश्च ॥१६३॥

**कुषेर्वा ॥ १६४ ॥**

कुषश् निष्कर्षे इत्यस्मात् ठ. प्रत्ययो भवति, स च किद्वा कुष्ठं व्याधि. गन्धद्रव्यं च । कोष्ठ कुशूल उदरं च ॥ १६४ ॥

**शमेर्लुक् च वा ॥ १६५ ॥**

शमूच् उपशमे इत्यस्मात् ठ प्रत्ययो भवति, अन्त्यस्य च वा लुक् । शठ. धूर्त. । शण्ठ धूर्त नपुसकं च ॥ १६५ ॥

**मृजॄशॄकम्यमिरमिरपिभ्योऽठः ॥ १६७ ॥**

एभ्यो धातुभ्य. अठ प्रत्ययो भवति । मृंत् प्राणत्यागे मरठः अतिद्रवीभूतं दधि कृमिजातिः कण्ठः प्राणश्च । जॄषूच्

जरसि जरठः कठोरः । शृश् हिंसायां शरठ. आयुधं पापं क्रीडनशीलश्च । कमूङ् कान्तौ कमठः भिक्षाभाजन कूर्मास्थि कच्छपः मयूरः वामनश्च । अम गतौ अमठः प्रकर्षगति । रमि क्रीडायां रमठः देशः कृमिजाति क्रीडनशीलः म्लेच्छ. देवश्च विलातानाम् । रप व्यक्ते वचने रपठः विद्वान् मण्डूकश्च ॥१६७॥

## पञ्चमात् डः ॥ १६८ ॥

पञ्चमान्ताद् धातो डः प्रत्ययो भवति । षण भक्तौ षण्डः वनं वृषभश्च । भण शब्दे भण्डः प्रहसनकर. बन्दी च । चण शब्दे चण्ड. क्रूर । पणि व्यवहारस्तुत्यो पण्ड शण्ठ । गणण् संख्याने गण्ड. पौरुषयुक्त पुरुषः । मण शब्दे मण्ड रश्मिः अग्रम् अन्नविकारश्च । वन भक्तौ वण्डः अल्पशोफ निश्चर्माग्रशिश्नश्च । शमू दमूच् उपशमे शण्ड उत्सृष्टः पशु ऋषिश्च । दण्ड वनस्पतिप्रतान राजशासनं नालं प्रहरणं च । रमि क्रीडायां रण्डः पुरुष, रण्डा स्त्री, रण्डमन्तःकरणम् एतत् त्रयमपि स्वसम्बन्धिशून्यमेवमुच्यते । तमेस्तनेर्वा तण्ड ऋषिः । वितण्डा तृतीयकथा । गमे गण्ड कपोल । भामि क्रोधे भाण्डमुपस्कर ॥ १६८ ॥

## कुगुहुनीकुणितुणिपुणिमुणिशुन्यादिभ्यः कित् ॥ १७० ॥

एभ्यो धातुभ्यः किद् ड प्रत्ययो भवति । कुङ् शब्दे कुडः घट हलं च । गुङ् शब्दे गुड गोलः इक्षुविकारश्च । गुडा सन्नाह । हुंकृ दानादनयोः हुड मूर्खः मेषश्च । णीग् प्रापणे नीडं कुलायः ।

कुणत् शब्दोपकरणयोः कुण्डं भाजनं जलाधारविशेषश्च । कुण्डः भर्तरि जीवति जारेण जात अपटि्वन्द्रियश्च। तुणत् कौटिल्ये तुण्डं मुखम् । पुणत् शुभे पुण्ड भिन्नवर्ण । मुणत् प्रतिज्ञाने मुण्डः परिवापितकेश. । शुनत् गतौ शुण्डा सुरा हस्तिहस्तश्च । आदिग्रहणादन्येभ्योऽपि भवति ॥ १७० ॥

**शमि–षणिभ्यां ढः ॥ १७९ ॥**

आभ्यां ढः प्रत्ययो भवति । शमूच् उपशमे शण्ढः नपुसकम् । षण् भक्तौ षण्ढः स एव ॥ १७९ ॥

**कुणेः कित् ॥ १८० ॥**

कुणत् शब्दोपकरणयोरित्यस्मात् किद् ढः भवति । कुण्ढः धूर्त. ॥ १८० ॥

**नञः सहेः षा च ॥ १८१ ॥**

नञ्पूर्वात् षहि मर्षणे इत्यस्माद् ढ. प्रत्ययः, षा चास्यादेशो भवति । आषाढा नक्षत्रम् ॥ १८१ ॥

**इणुर्विशावेणिवृकृवृतजृदृस्तृपिपणिभ्यो णः ॥ १८२ ॥**

एभ्यो णः प्रत्ययो भवति । इंक् गतौ एण कुरङ्ग । उर्वैं हिंसायाम् उर्णा मेषादिलोम भ्रुवोरन्तरावर्तश्च । शोंच तक्षणे शाणः परिमाण शस्त्रतेजनं च । वेणृग् गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु वेण्णा कृष्णवेण्णा च नाम नदी । पृश् पालनपूरणयोः पर्णं

पत्रं शिरश्च । कॄत् विक्षेपे कर्णः श्रवणं कौन्तेयश्च । वॄश् वरणे वर्णः शुक्लादिः ब्राह्मणादिः अकारादिः यशः स्तुतिः प्रकारश्च । तॄ प्लवनतरणयोः तर्णः वत्सः । जॄष् जरसि जर्णः चन्द्रमाः वृक्षः कर्कः क्षयधर्मा शकुनिश्च । दॄङ् आदरे दर्णः पर्णम् । सृप्लृं गतौ सपर्णः सरीसृपजातिः । पणि व्यवहारस्तुत्योः पण्णं व्यवहारः ॥ १८२ ॥

**तॄकॄशॄपॄभृवृश्रुरुरुहिलक्षिविचक्षिचुक्किबुक्कितङ्ग्यङ्गिमङ्किकङ्कि-चरिसमीरेरणः ॥ १८७ ॥**

एभ्यः अणः प्रत्ययो भवति । तॄ प्लवनतरणयोः तरणम् । कॄत् विक्षेपे करणम् । शॄश् हिंसायां शरणं गृहम् । पॄश् पालनपूरणयोः परणम् । टुडुभृंगृक् पोषणे च भरणम् । वृगृट् वरणे वरणः वृक्षः सेतुबन्धश्च । वरण कन्याप्रतिपादनम् । श्रुंट् श्रवणे श्रवणः कर्णः भिक्षुश्च । रुक शब्दे, रुङ् रेषणे वा रवणः करभः अग्निः द्रुमः वायुः भृङ्गः शकुनिः सूर्यः घण्टा च । रुह जन्मनि रोहणः गिरिः । लक्षीण् दर्शनाङ्कनयोः लक्षणं व्याकरणं शुभाशुभसूचकं रेखातिलकादि अङ्कनं च । चक्षिक् व्यक्तायां वाचि विचक्षणः विद्वान् । चुक्कण् व्यथने चुक्कणः व्यायामशीलः । बुक्क भाषणे बुक्कणः श्वा वावदूकश्च । तगु गतौ तङ्गणा जनपदः । अगु गतौ अङ्गणम् अजिरम् । मकुङ् मण्डने मङ्कणः ऋषिः । ककुङ् गतौ कङ्कणः प्रतिसरः । चर भक्षणे च चरणः पादः । ईरिक् गतिकम्पनयोः सम्पूर्वः समीरणः वातः ॥

**कृपिविषिदृषिधृषिमृषियुषिद्रुहिग्रहेराणक् ॥ १९१ ॥**

एभ्यो धातुभ्य आणक् प्रत्ययो भवति । कृपौङ् सामर्थ्ये कृपाणः खड्गः । विषू सेचने विषाणं शृङ्गं करिदन्तश्च । वृषू सेचने वृषाण । ञिधृषाट् प्रागल्भ्ये धृषाण. देव । मृषू सहने च मृषाणः। श्रुषि सेवने सौत्रो धातुः श्रुषाणः । द्रुहौच् जिघांसायां द्रुहाणः क्षुरः । ग्रहीश् उपादाने गृहाणः । त्रिषाणादयः स्वप्रकृत्यर्थवाचिनः कर्तरि कारके ज्ञेया । १९१ ॥

**पषो णित् ॥ १९२ ॥**

पषी बाधनस्पर्शनयोः इत्यस्माद् आणक् प्रत्यय , स च णिद् भवति । पाषाणः प्रस्तरः ॥ १९२ ॥

**सु–सि–तनि–तुसेर्दीर्घश्च वा ॥ २०३ ॥**

एभ्यः कित् त. प्रत्ययो दीर्घश्च वा भवति । षुंगट् अभिषवे सूतः सारथिः । सुत पुत्र. । षिगट् बन्धने सीता जनकात्मजा सस्यं हलमार्गश्च । सित वर्ण बन्धश्च । तनूयी विस्तारे तातः पिता पुत्रेष्टनाम च । तन विस्तीर्ण वाद्यविशेषश्च । तुस् शब्दे तूस्तानि वस्त्रदशाः । तुस्ता जटाः प्रदीपन च ॥ २०३ ॥

**हृ–श्या–रुहि–शोणि–पलिभ्य इतः ॥ २१० ॥**

एभ्य इतः प्रत्ययो भवति । हृग् हरणे हरितः वर्ण. । श्यैङ् गतौ श्येत वर्णः मृगः मत्स्यः श्येनश्च । रुह बीजजन्मनि रोहितः वर्णः मत्स्यः मृगजातिश्च लत्वे लोहितः वर्णः । लोहितम् असृक्। शोणृ वर्णगत्योः शोणितं रुधिरम्। पल गतौ पलितं श्वेतकेशाः॥२१०

**कुलि-मयिभ्यामूतक् ॥ २१९ ॥**

आभ्यामूतक् प्रत्ययो भवति । कुल बन्धुसस्त्यानयो' कुलूता: जनपद' । मयि गतौ मयूता वसति' ॥ २१९ ॥

**कबेरोतः प् च ॥ २१७ ॥**

कबृङ् वर्णे इत्यस्माद् ओत प्रत्यय , पश्चान्तादेशो भवति । कपोत पक्षी वर्णश्च ॥ २१७ ॥

**सीमन्त-हेमन्त-भदन्त-दुष्यन्तादयः ॥ २२२ ॥**

एते अन्तप्रत्ययान्ता निपात्यन्ते । सिनोते सीम् च सीमन्त केशमार्ग ग्रामक्षेत्रान्तश्च । हन्तेर्हिनोतेर्वा हेम् च हेमन्तः ऋतु । भन्दते नलुक् च भन्दत' निर्ग्रन्थेषु शाक्येषु च पूज्यः । दुषेर्योऽन्तश्च दुष्यन्त राजा ॥ २२२ ॥

**शकेरुन्तः ॥ २२३ ॥**

शक्लंट् शक्तौ इत्यस्माद् उन्त' प्रत्ययो भवति । शकुन्तः पक्षी ॥ २२३ ॥

**कमि-प्रु-गाऽर्तिभ्यः थः ॥ २२९ ॥**

एभ्य' थ. प्रत्ययो भवति । कमूङ् कान्तौ कन्था प्रावरणं नगर च । प्रुङ् गतौ प्रोथ प्रिय. युवा शूकरमुखं घोणा च । गैं शब्दे गाथा श्लोक. आर्या वा । ऋं गतौ अर्थ. जीवाजीवादिपदार्थः प्रयोजनम् अभिधेयं धनं याच्ञा निवृत्तिश्च ॥ २२९ ॥

## अवाद् गोऽच्च वा ॥ २२६ ॥

अवपूर्वाद् गायते थ प्रत्यय, अत्वान्तादेशो वा भवति । अवगथ, अवगाथ अक्षसवात प्रात सवनं रथयान साम पन्थाश्च ॥ २२६ ॥

## नीनूरमितृतुदिवचिरिचिसिचिश्विहनिपागोपावोद्गाभ्यः क्त् ॥ २२७ ॥

एभ्य कित् थ प्रत्ययो भवति । णीग् प्रापणे नीथ जलम् । सुनीथो नाम राजा नीतिमान् धर्मशील ब्राह्मणश्च । णूत् स्तवने नूथं तीर्थम् । रमि क्रीडाया रथ स्यन्दन । तॄ प्लवनतरणयो तीर्थं जलाशयावगाहनमार्गः पुण्यक्षेत्रमाचार्यश्च। तुदीत् व्यथने तुत्थं चक्षुष्यो धातुविशेषः । वचंक् भाषणे उक्थं शास्त्रं सामवेदश्च । उक्थानि सामानि । रिचूंपी विरेचने रिक्थं धनम् । षिचींत् क्षरणे सिक्थं मदनं पुलाकश्च । ट्वोश्वि गतिवृद्ध्यो शूथ यज्ञप्रदेश । हनंक् हिसागत्यो हथ पन्थाः कालश्च । पा पाने पीथ बालघृत- पानम् अम्भ. नवनीतं च । पीथ मकर रविश्च । गोपूर्वाद् गोपीथ. तीर्थविशेष गोनिपान जलद्रोणी कालविशेषश्च । गे शब्दे अवगी- थम् यज्ञकर्मणि प्रात शसनम् । उद्गीथ. शुनामूर्ध्वमुखानां विराव सामगान प्रथमोच्चारणं च ॥ २२७ ॥

## न्युद्भ्यां शीङः ॥ २२८ ॥

न्युत्पूर्वात् शीङ्क् स्वप्ने इत्यस्मात् कित् थः प्रत्ययो

भवति । निशीथः अर्धरात्रः रात्रि प्रदोषश्च । उच्छीथ. स्वप्नः टिट्टिभश्च ॥ २२८ ॥

सर्तेर्णित् ॥ २३० ॥

सृ गतौ इत्यस्मात् णित् थ प्रत्ययो भवति । सार्थः समूह. ॥ २३० ॥

पथयूथगूथकुथनिथनिथसूरथादयः ॥ २३१ ॥

एते थान्ता निपात्यन्ते । पलते लो लुक् च पथ: पन्था: । यौतेर्गुवतश्च दीर्घश्च यूथं समूह । गूथम् अमेध्यं विष्ठा च । किरते करोतेर्वा कुश्च कुथ: कुथा वा आस्तरणम् । तनोते: तिष्ठतेर्वा तिश्च तिथ काल. । तिम्यते तिथः प्रावृट्काल: । नयतेः ह्रस्वश्च निथ पूर्वक्षत्रिय कालश्च । सुपूर्वाद् रमे सूरथ: दान्तः ॥ २३१ ॥

भृशीशपिशमिगमिरमिवन्दिवञ्चिजीविप्राणिभ्योऽथः ॥२३२॥

एभ्यः अथ प्रत्ययो भवति । टुडुभृंगृक् पोषणे च भरथः कैकेयीसुतः अग्नि लोकपालश्च । शीङ्क् स्वप्ने शयथ. अजगरः प्रदोष मत्स्य वराहश्च । शपी आक्रोशे शपथ प्रत्ययकरणमाक्रोशश्च । शमूच् उपशमे शमथः समाधि आश्रमपदं च । गम्लृं गतौ गमथ. पन्थाः पथिकश्च । रमि क्रीडायां रमथः प्रहर्षः । वदुङ् स्तुत्यभिवादनयो: वन्दथ स्तोता स्तुत्यश्च । वञ्चू गतौ वञ्चथः अध्वा कोकिलः काक दम्भश्च । जीव प्राणधारणे जीवथः

अर्थवान् जलम् अन्नं वायुः मयूरः कूर्म धार्मिकश्च। अनक् प्राणने प्राणथ बलवान् ईश्वरः प्रजापतिश्च ॥ २३२ ॥

आपोऽप् च ॥ २३८ ॥

आप्लंट् व्याप्तौ इत्यस्माद् द. प्रत्ययो भवति, अस्य चाप् आदेशः। अब्दं वर्षम् ॥ २३८ ॥

गोः कित् ॥ २३९ ॥

गुंत् पुरीषोत्सर्गे इत्यस्मात् किद् द प्रत्ययो भवति। गुदम् अपानम् ॥ २३९ ॥

कुमुद–बुद्बुदादयः ॥ २४४ ॥

एते उदप्रत्ययान्ता निपात्यन्ते। कमे कुम् च। कुमुदं कैरवम्। बुन्देः कित् वोऽन्तश्च बुद्बुदः जलस्फोट । बुद्बुदं नेत्रजो व्याधिः। आदिशब्दाद् दोहदः अभिलाष ॥ २४४ ॥

स्कन्द्यमिभ्यां धः ॥ २५१ ॥

आभ्यां धः प्रत्ययो भवति। स्कन्दृ गतिशोषणयोः स्कन्ध बाहुमूर्धा ककुदं विभागश्च। अम गतौ अन्धः चक्षुर्विकल ॥२५१॥

नेः स्यतेरधक् ॥ २५२ ॥

निपूर्वात् षोंच् अन्तकर्मणि इत्यस्माद अधक् प्रत्ययो भवति। निषधा जनपदः। निषध. पर्वतः ॥ २५२ ॥

पराच्छो डित् ॥ २५५ ॥

परपूर्वात् शॄश् हिंसायामित्यस्माद् डिद् वध प्रत्ययो भवति। परश्वधः आयुधजातिः ॥ २५६ ॥

**कोरन्धः ॥ २५७ ॥**

कुंङ् शब्दे इत्यस्माद् अन्ध' प्रत्ययो भवति । कवन्ध' छिन्नमूर्धा देह ॥ २५७ ॥

**प्याधापन्यनिस्वदिस्वपिवस्यज्यतिसिविभ्यो नः ॥ २५८॥**

एभ्यो न' प्रत्ययो भवति । प्यैङ् वृद्धौ प्यान समुद्र चन्द्रश्च । डुधांग्क् धारणे च धाना भृष्टो यव अङ्कुरश्च । पनि स्तुतौ पन्नं नीचैः करणं सन्नं जिह्वा च। अनक् प्राणने अन्नं भक्तम् आचारश्च । ष्वदि आस्वादने स्वन्न रुचितम् । ञिष्वपंक् शये स्वप्न. मनोविकार' निद्रा च । वसं निवासे वस्नं वास' मूल्यं मेढ़म् आगमश्च । अज क्षेपणे च वेन. प्रजापति ध्यानी राजा वायुः यज्ञ प्राज्ञः मूर्खश्च। अत सातत्यगमने अत्न आत्मा वायुः मेघ' प्रजापतिश्च । षिवूच् उतौ स्योन सुखं तन्तुवायसूत्रसंतानः समुद्र सूर्यः रश्मिः आस्तरणं च ॥ २५८ ॥

**षसेर्णित् ॥ २५९ ॥**

षसक् स्वप्ने इत्यस्माद् णिद् नः प्रत्ययो भवति । सास्ना गोकण्ठावलम्बि चर्म निद्रा च ॥ २५९ ॥

**जीणशीदीबुध्यविमीभ्यः कित् ॥ २६१ ॥**

एभ्यः किद् न प्रत्ययो भवति । जि अभिभवे जिन अर्हन्

बुद्धश्च । इण्क् गतौ इन स्वामी सन्निपात· ईश्वर राजा सूर्यश्च । शीङ्क् स्वप्ने शीन' पीलुः । दीङ्च् क्षये दीनः खिन्न. कृपणश्च । बुधिच् ज्ञाने बुध्न मूलं पृष्ठान्त रुद्रश्च । अव रक्षणादौ ऊनम् अपरिपूर्णम् । मीङ्च् हिंसाया मीन मत्स्य राशिश्च ॥ २६१ ॥

**सोरू च ॥ २६३ ॥**

षुगृट् अभिषवे इत्यस्माद् न. प्रत्यय., ऊकारश्चान्तादेशो भवति । सूना घातस्थानम् दुहिता पुत्रः प्रकृति आघातस्थान च ॥ २६३ ॥

**रमेस्त् च ॥ २६४ ॥**

रमि क्रीडायाम् इत्यस्माद् नः प्रत्ययः, तश्चान्तादेशो भवति। रत्न वज्रादि ॥ २६४ ॥

**युवसिरसिरुचिजिमस्जिदेविस्यन्दिचन्दिमन्दिमण्डिमर्दिदहिवह्यादेरनः ॥ २६९ ॥**

एभ्य अनः प्रत्ययो भवति । युक् मिश्रणे यवना. जनपद. । यवनं मिश्रणम् । असूच् क्षेपणे असन. बीजकः । रसण् आस्वादनस्नेहनयो रसना जिह्वा । रुचि अभिप्रीत्यां च रोचना गोपित्तम् । रोचन' चन्द्रः । विपूर्वाद् रोचतेः विरोचनः अग्निः सूर्यः इन्दु. दानवश्च । जिं अभिभवे जयनम् ऊर्णापटः । टुमस्जोंत् शुद्धौ मज्जनं स्नानं तोयं च । देवृङ् देवने देवनः अक्षः कितवश्च । स्यन्दौङ् स्रवणे स्यन्दनः रथ' । चदु दीप्त्याह्लादयोः चन्दनं गन्धद्र-

व्यम् । मदुङ् स्तुत्यादौ मन्दन स्तोत्रम् । मडु भूषायां मण्डनम् अलंकारः । मदैच् हर्षे मदन वृक्षः काम मधूच्छिष्टं च । दह भस्मीकरणे दहन अग्निः । वही प्रापणे वहन नौ. । आदिग्रहणात् पचेः पचन अग्नि । पुनाते पवनो वायु । बिभर्ते भरणं साधनम् । नयते नयन नेत्रम् । द्युते द्योतन आदित्य. । रचे रचना वैचित्र्यम । गृञ्जे गृञ्जनम् अभक्ष्यद्रव्यविशेष । प्रस्कन्दनः । प्रपतन इत्यादयो भवन्ति ॥ २६९ ॥

**पठेर्णित् ॥ २८७ ॥**

पठ व्यक्तायां वाचीत्यस्माद् णिद ईन भवति । पाठीन मत्स्य ॥ २८७ ॥

**पिशि–मिथि–क्षुधिभ्य कित् ॥ २९० ॥**

एभ्य. किदुनः प्रत्ययो भवति । पिशत् अवयवे पिशुनः खलः । पिशुन मैत्रीभेदक वचनम् । मिथृङ् मेधाहिसयो मिथुनं स्त्रीपुंसद्वन्द्वम् राशिश्च । क्षुधंच् बुभुक्षायां क्षुधुन कीटक ॥२९०॥

**फलेर्गोऽन्तश्च ॥ २९१ ॥**

फल निष्पत्तौ इत्यस्मादुन प्रत्यय, गश्चान्तो भवति । फल्गुन अर्जुनः । फल्गुनी नक्षत्रम् ॥ २९१ ॥

**वी–पति–पटिभ्यः तनः ॥ २९२ ॥**

एभ्य तनः प्रत्ययो भवति । वींक् प्रजनादौ वेतनं भृति । पत्लृ गतौ पत्तनम् । पट गतौ पट्टनं द्वावपि नगरविशेषौ ॥२९२॥

## पृ-पूभ्यां कित् ॥ २९३ ॥

आभ्यां कित् तन प्रत्ययो भवति । पृङ्त् व्यायामे पृतना सेना । पूगश् पवने पूतना राक्षसी ॥ २९३ ॥

## कृत्यशौभ्यां स्नक् ॥ २९४ ॥

आभ्यां स्नक् प्रत्ययो भवति । कृतैत् छेदने कृत्स्न सर्वम् । अशौटि व्याप्तौ अक्ष्ण नयनं व्याधिः रज्जुः तेजनम् अखण्डं च ॥ २९४ ॥

## भापाचणिचमिविषिसृपृतृशीतलयलिशमिरमिवपिभ्यः पः ॥ २९६ ॥

एभ्यः पः प्रत्ययो भवति । भाक् दीप्तौ भाप आदित्य ज्येष्ठश्च भ्राता । पांक् रक्षणे पापं कल्मषम् । पापः घोरः । चण हिंसादानयोश्च । चणपा नगरी । चणपः वृक्ष । चमू अदने चम्पा नगरी । विष्लृकी व्याप्तौ वेष्प परमात्मा स्वर्ग आकाशश्च । निपूर्वाद् निवेष्पः अपां गर्भ कूप वृक्षजाति अन्तरिक्षं च । सृ गतौ सर्प अहिः । पृश् पालनपूरणयो पर्प. प्लवः शङ्खः समुद्रः शस्त्र च । तॄ प्लवनतरणयोः तर्प उडुप नौश्च । शीङ्क् स्वप्ने शेपः पुच्छम् । तलण् प्रतिष्ठायां तल्पं शयनीयम् अङ्गं दाराः युद्धं च । अली भूषणादौ अल्पं स्तोकम् । शमूच् उपशमे शम्पा विद्युत् काञ्ची च । विपूर्वाद् विशम्प. दानवः । रमिं क्रीडायां रम्पा चर्मकारोपकरणम् । टुवपीं बीजसंताने वप्प. पिता ॥ २९६ ॥

**युसुकुरुतुच्युस्त्वो दे॒र्घश्च ॥ २९७ ॥**

एभ्य प, ऊकारश्चान्तादेशो भवति । युक् मिश्रणे यूप यज्ञपशुबन्धनकाष्ठम् । षुंगट् अभिषवे सूप मुद्गादिमिश्रकृत । कुंक् शब्दे कूप प्रहि । रुक् शब्दे रूपं श्वेतादि लावण्य स्वभावश्च । तुंक् वृत्त्यादौ तूप आयतनविशेष । च्युङ् गतौ च्यूप. आदित्य वायु संग्रामश्च । ष्टुगक् स्तुतौ स्तूप बोधिसत्त्वभवनम् उपायतन जिननिर्वाणस्थानोपरि चिह्नविशेष ॥ २९७ ॥

**कॄ-शॄ-सॄभ्य ऊर् चान्तस्य ॥ २९८ ॥**

एभ्य प प्रत्ययो भवति, अन्तस्य च ऊर । कॄत् विक्षेपे कूर्प भ्रूमध्यम् । शॄश् हिंसायां शूर्प धान्यादिनिष्पवनभाण्ड संख्या च । सॄं गतौ सूर्प भुजगम मत्स्यजातिश्च ॥ २९८ ॥

**नियो वा ॥ ३०२ ॥**

णीग् प्रापणे इत्यस्मात् प· प्रत्ययो भवति, स च किद् वा । नीपः कदम्ब । नेप· नयः पुरोहित. वृक्ष मृतकश्च । नेपम् उदकं यान च ॥ ३०२ ॥

**शंसेः श इच्चातः ॥ ३०६ ॥**

शसू स्तुतौ चेत्यस्मादप प्रत्ययः, तालव्यः शकारोऽन्तादेशः, अकारस्य चेकारो भवति । शिंशपा वृक्षविशेष. ॥३०६॥

**विष्टपोलप-वातपादयः ॥ ३०७ ॥**

विष्टपादय. शब्दाः किदपप्रत्ययान्ता निपात्यन्ते । विषे-स्तोऽन्तश्च । विष्टपं जगत् सुकृतिना स्थानं च । वलेरुल् च उलपं पर्वततृण पङ्कजं जलं च । उलप ऋषि । वातेस्तोऽन्तश्च वातप· ऋषि· । आदिग्रहणात् खरपादयो भवन्ति ॥ ३०७ ॥

**कलेरापः ॥ ३०८ ॥**

कलि शब्दसख्यानयो· इत्यस्माद आप प्रत्ययो भवति । कलाप. काञ्ची समूहः शिखण्डश्च ॥ ३०८ ॥

**दलेरीपो दिल् च ॥ ३१० ॥**

दल विशरणे इत्यस्मादीप प्रत्ययो भवति, दिल् चास्या-देशः । दिलीप राजा ॥ ३१० ॥

**उडेरुपक् ॥ ३११ ॥**

उड् सघाते इत्यस्मात् सौत्रादुपक प्रत्ययो भवति । उडुप प्लव । जपादित्वद् वत्वं उडुव ॥ ३११ ॥

**अश ऊप पश्च ॥ ३१२ ॥**

अशौटि व्याप्तौ इत्यस्माद् ऊप· प्रत्ययः, पश्चान्तादेशो भवति । अपूप· पक्वान्नविशेष ॥ ३१२ ॥

**सर्तेः षपः । ३१३ ॥**

सृ गतौ इत्यस्मात् षप प्रत्ययो भवति । सर्षप रक्षोघ्न द्रव्य शाक च ॥ ३१३ ॥

**री-शीभ्यां फः ॥ ३१४ ॥**

आभ्यां फ प्रत्ययो भवति । रीङ्च् स्रवणे रेफ कुत्सित. । शीङ्क् स्वप्ने शेफ मेढ्र ॥ ३१४ ॥

कलि-गलेरस्योच्च ॥ ३१५ ॥

आभ्यां फ प्रत्यय, अकारस्य चोकारो भवति । कलि शब्दसंख्यानयो, गल अदने कुल्फ, गुल्फ जङ्घाङ्घ्रिसन्धिः । गुल्फ' पदोपरिग्रन्थि ॥ ३१५ ॥

शफ-कफ-शिफा-शोफादयः ॥ ३१६ ॥

शफादय शब्दाः फप्रत्ययान्ता निपात्यन्ते । श्यते' कायतेश्च ह्रस्वश्च । शफ खुर प्रियंवदश्च । कफ श्लेष्मा । श्यतेरित्वमोत्वं च शिफा वृक्षजटा । शोफ श्वयथु' खुरश्च । आदिशब्दाद् रिफा नफा-सुनफादय' ॥ ३१६ ॥

शम्यमेर्णिद् वा ॥ ३१८ ॥

आभ्यां ब प्रत्यय, स च णिद् वा । शमूच् उपशमे शम्ब वज्र कर्षणविशेष वेणुदण्ड तोत्रम् अरित्रं च । शम्ब-शाम्बौ जाम्बवतेयौ । अम्बा माता । आम्ब अपह्नवः ॥ ३१८ ॥

शल्यलेरुच्चातः ॥ ३१९ ।

आभ्यां ब प्रत्यय, अकारस्य चोकारो भवति । पल फल शल गतौ शुल्ब ताम्रम् । अली भूषणादौ उल्बं रजतं गर्भवेष्टनम् । शुल्बं बभ्रु तरक्षुश्च ॥ ३१९ ॥

कृ-कडि-कटि-वटेरम्बः ॥ ३२१ ॥

एभ्योऽम्ब प्रत्ययो भवति । डुकृग् करणे करम्ब. दध्यो-द्गन दधिसक्तव' पुष्प च । कडत् मदे कडम्बः जातिविशेष जनपदश्च । कटै वर्षावरणयो कटम्बः पक्वान्नविशेष वादित्र च । कडम्बकटम्बौ वृक्षौ च । वट वेष्टने वटम्ब शैल तृणपुञ्जश्च ॥३२१॥

## डीर्णीबन्धिशृधिचलिभ्यो डिम्बः ॥ ३२९ ॥

एभ्यो डिदिम्बः प्रत्ययो भवति । डीङ् विहायसा गतौ डिम्बः राजोपद्रव । णीग् प्रापणे निम्ब वृक्षविशेषः । बन्धंश बन्धने बिम्ब प्रतिच्छन्द देहश्च । बिम्बी वल्लिजाति । शृधूङ् शब्दकुत्सायां शिम्ब मृगजाति, शिम्बी निष्पाववल्ली च । चल कम्पने चिम्बा यवागूजाति ॥ ३२९ ॥

## गृदृरमिहनिजन्यर्तिदलिभ्यो भः ॥ ३२७ ॥

एभ्यो भ' प्रत्ययो भवति । गृत् निगरणे गर्भः जठरस्थ प्राणी । दृश् विदारणे दर्भ कुशः । रमि क्रीडाया रम्भा अप्सराः कदली च । हनक् हिंसागत्यो. हम्भा गोधेनुनाद । जनैचि प्रादुर्भावे जम्भ दानव दन्तश्च । जम्भा मुखविदारणम् । ऋक गतौ अर्भः शिशु' । दल विदारणे दल्भ ऋषि वल्कलं विदा-रणं च ॥ ३२७ ॥

## इणः कित ॥ ३२८ ॥

इंणक् गतौ इत्यस्मात किद् भ. प्रत्ययो भवति । इभः हस्ती ॥ ३२८ ॥

कृशृगृशलिकलिकडिगर्दिरासिरमिवडिवल्लेरभः ॥ ३२९ ॥

एभ्योऽभ प्रत्ययो भवति । कृत् विक्षेपे करभः त्रिवर्ष उष्ट्र । शृश् हिंसाया शरभ श्वापदविशेष । गृत् निगरणे गरभ. उदरस्थो जन्तु । पल फल शल गतौ शलभ. पतङ्ग । कलि शब्दसंख्यानयो कलभ यौवनाभिमुखो हस्ती । कडत् मदे कडभ हस्तिपोतक । गर्द शब्दे गर्दभ खर । रासृङ् शब्दे रासभ खरः । रभि क्रीडाया रमभ प्रहर्ष । वड सौत्रो धातु वडभी वेश्माग्रभूमिका, लत्वे च वलभी । वल्लि संवरणे वल्लभ स्वामी दयितश्च ॥ ३२९ ॥

ऋषि-वृषि-लुसिभ्यः कित् ॥ ३३१ ॥

एभ्य किदभ प्रत्ययो भवति । ऋषैत् गतौ, वृषू सेचने ऋषभ, वृषभश्च पुङ्गव भगवाश्चादितीर्थङ्कर । ऋषभ वायु । लुसि सौत्र लुसभ हिंस्र मत्तहस्ती वन च ॥ ३३१ ॥

सि-टिकिभ्यामिभः सैर-टिट्टौ च ॥ ३३२ ॥

आभ्यामिभ प्रत्ययो भवति, दन्त्यादि सैर टिट्टश्चादेशौ यथासंख्य भवत । षिगृट् बन्धने सैरिभ. महिष. । टिकि गतौ टिट्टिभः पक्षी ॥ ३३२ ॥

अर्त्तीरिस्तुसुहुसृधृधृक्षियक्षिभावाव्याधापायावलिपदिनीभ्या मः ॥ ३३८ ॥

एभ्यो म प्रत्ययो भवति। ऋंक् गतौ अर्म अक्षिरोग' ग्राम. स्थल च। ईरिक् गतिकम्पनयो ईर्म व्रण । ष्टुगक् स्तुतौ स्तोम' समूह. यज्ञः स्तोत्रं च। षुंगट् अभिषवे सोम चन्द्र. वल्ली च। हुंक् दानादनयो होम आहुति. । सृं गतौ सर्मः नदः कालश्च। सर्म स्थान सुख च। घृ सेचने घर्मः ग्रीष्म । धृङ्त् स्थाने धर्म. उत्त-मक्षमादि. न्यायश्च। शॄश् हिसाया शर्म सुखम् । क्षित् निवास-गत्योः क्षेमं कल्याणम्। यक्षिण् पूजाया यक्ष्मः व्याधि । भाक् दीप्तौ भामः क्रोध । भामा स्त्री। वाक् गतिगन्धनयोः वाम. प्रतिकूल सव्यश्च। व्येग सवरणे व्याम वक्षोभुजायति । डुधांगक् धारणे च धामं निलय तेजश्च। पा पाने पामा कच्छू । याक् प्रापणे याम' प्रहर. । वलि सवरणे वल्म. ग्रन्थि । पदिच् गतौ पद्म कमलम्। णीग् प्रापणे नेम अर्ध' समीपश्च ॥ ३३८ ॥

## ग्रसि–हाग्भ्यां ग्रा–जिह्यौ च ॥ ३३९ ॥

आभ्या म प्रत्यय, अनयोश्च ग्राजिह्यौ आदेशौ यथासंख्यं भवत. । ग्राम समूहादि' । जिह्म कुटिलश्च ॥ ३३९ ॥

## विलिभिलिसिधीन्धिधूसूशाध्यारुसिविशुषिमुर्षापिसुहियुधि-दसिभ्य. कित् ॥ ३४० ॥

एभ्यः किद् म प्रत्ययो भवति। विलत् वरणे विल्मं प्रकाशः। भिलिः सौत्रः भिल्मं भास्वरम्। षिधू गत्यां सिध्मं रिक्षम्। श्यैङ् गतौ श्याम' वर्ण' । श्यामं नभः। श्यामा रात्रि' औषधिश्च।

ध्यै चिन्तायां ध्याम. अव्यक्तवर्णः । रुक् शब्दे रुमा लवण-भूमि. । षिवूच् उतौ स्यूम रश्मिः दीर्घ सूत्रतन्तुश्च । स्यूमं जलम् । शुषंच् शोषणे शुष्मं बलं जलं संयोगश्च । मुषश् स्तेये मुष्मः मुषिक' । ईष उञ्छे ईष्म वसन्तः बाणः वातश्च । षुहच् शक्तौ सुह्मा' जनपद । सुह्म. राजा । युधिच् संप्रहारे युध्म. शरत्काल. शूरः शत्रु. संग्रामश्च । दसूच् उपक्षये दस्म हीन' वह्नि' यज्ञश्च ॥ ३४० ॥

## क्षु–हिभ्यां वा ॥ ३४१ ॥

आभ्या म' प्रत्यय, स च किद् वा भवति । टुक्षुक् शब्दे क्षुमा अतसी । क्षोम वस्त्रम् । हिट् गतिवृद्धयो हिमं तुषार । हेम सुवर्णम् ॥ ३४१ ॥

## स्थाछामासासूमन्यनिकनिषसिपलिकलिशलिशकी–र्ष्यसहिबन्धिभ्यो यः ॥ ३५७ ॥

एभ्यो य. प्रत्ययो भवति । ष्ठा गतिनिवृत्तौ स्थायः स्थानम् । स्थाया भूमिः । दों छोच् छेदने छाया तम' प्रतिरूप कान्तिश्च । मांक् माने माया छद्म दिव्यानुभावदर्शनं च । षोंच् अन्तकर्मणि सायं दिनावसानम् । षूत् प्रेरणे सव्य वाम' दक्षिणश्च । मनिंच् ज्ञान मन्या धमनि. । अनक् प्राणने अन्य परः । कनै दीप्त्यादिषु कन्या कुमारी । षसक् स्वप्ने सस्यं क्षेत्रस्थं गोधूमादि । पल गतौ पल्य. कटकुसूल । कलि शब्दसंख्यानयोः कल्य नीरोग ।

पल फल शल गतौ शल्यम् अन्तर्गतं लोहादि । शक्लृंट् शक्तौ शक्यमसारम् । ईर्ष्यि ईर्ष्यार्थ. ईर्ष्यति ईर्ष्यणं वा ईर्ष्या मात्सर्यम् । षहि मर्षणे सह्यः पश्चादर्णवपार्श्वशैल ।बन्धश् बन्धने बन्ध्या अप्रसूतिः ॥ ३५७ ॥

**नञो हलि-पतेः ॥ ३५८ ॥**

नञ्पूर्वाभ्यामाभ्या यः प्रत्ययो भवति । हल विलेखने अहल्या गोतमपत्नी । पत्लृ गतौ अपत्य पुत्रसन्तान. ॥ ३५८ ॥

**सञ्जेर्ध् च ॥ ३५९ ॥**

षञ्ज सङ्गे इत्यस्माद य प्रत्यय , धकारश्चान्तादेशो भवति । सन्ध्या दिननिशान्तरम् ॥ ३५९ ॥

**मृ-शी-पसि-वस्यनिभ्यस्तादिः ॥ ३६० ॥**

एभ्यस्तकारादि य प्रत्ययो भवति । मृत् प्राणत्यागे मर्त्यः मनुष्य । शीङ्क् स्वप्ने शेत्य शकुनि संवत्सर अजगरश्च । पसि निवासे सौत्रो दन्त्यान्त पस्त्य गृहम् । वस निवासे वस्त्य गुरु । अनक् प्राणने अन्त्य निरवसित चण्डालादिश्च ॥३६०॥

**ऋशि-जनि-पुणि-कृतिभ्यः कित् ॥ ३६१ ॥**

एभ्यः किद् य. प्रत्ययो भवति । ऋश् गतौ स्तुतौ वा स्व रादिस्तालव्यान्त ऋश्य मृगजातिः । जनैचि प्रादुर्भावे जन्यं संग्राम. । जाया पत्नी ‘ ये नवा ’ इत्यात्त्वम् । पुणत् शुभे पुण्यं सत्कर्म । कृतैत छेदने कृन्तति कृत्या दुर्गा ॥ ३६१ ॥

**कुलेर्ड् च वा ॥ ३६२ ॥**

कुल बन्धुसंस्त्यानयो इत्यस्मात् किद् य प्रत्यय , डकार-श्चान्तादेशो वा भवति । कुड्यं भित्ति । कुल्या सारणी ॥३६२॥

**अग-पुलाभ्यां स्तम्भेर्डित् ॥ ३६३ ॥**

अग पुल इत्येताभ्यां परस्मात् स्तम्भे. सौत्रात् डिद् यः प्रत्ययो भवति ।. अगस्त्य पुलस्त्यश्च ऋषि ॥ ३६३ ॥

**कुगुवलिमलिकणितन्याम्यक्षेरयः ॥ ३६५ ॥**

एभ्य. अय प्रत्ययो भवति । कुंक् शब्दे कवय ऋषिः पुरोडाशश्च । गुंङ् शब्दे गवय गवाकृति' पशुविशेषः । वलि सवरणे वलय कटक । मलि धारणे मलय पर्वत. । कण शब्दे कणय आयुधविशेष । तनूयी विस्तारे तनय पुत्र' । अमण् रोगे णिचि च आमय' व्याधि । अक्षौ व्याप्तौ च अक्षय' विष्णु ॥ ३६५ ॥

**चायेः केक् च ॥ ३६६ ॥**

चायृग् पूजानिशामनयो इत्यस्मादय प्रत्यय', अस्य च केक् इत्यादेशो भवति । केकय क्षत्रिय ॥ ३६६ ॥

**कुलि-लुलि-कलि-कषिभ्यः कायः ॥ ३७२ ॥**

एभ्यः किदाय प्रत्ययो भवति । कुल बन्धुसंस्त्यानयोः

कुलायः नीडम् । लुलिः सौत्रः लुलाय महिष । कलि शब्द-संख्यानयोः कलायः त्रिपुटः । कष हिंसायां कषाय कल्कादि ॥ ३७२ ॥

वेतेस्तादिः ॥ ३७८ ॥

वीक् प्रजनादावित्यस्मात् तकारादिर्णिदालीय प्रत्ययो भवति । वैतालीयं छन्दोजाति ॥ ३७८ ॥

धाग्राजिशॄरमियाज्यर्त्तेरन्यः ॥ ३७९ ॥

एभ्योऽन्य प्रत्ययो भवति । डुधांगृक् धारणे च धान्य सस्यजाति । राजृग् दीप्तौ राजन्यः क्षत्रियः ज्योति. अग्निश्च । शॄश् हिंसायां शरण्य. त्राता । रमिं क्रीडायां रमण्यं शोभनम् । यजीं देवपूजादौ याजन्य क्षत्रिय. यज्ञश्च । ऋक् गतौ अरण्यं वनम् ॥ ३७९ ॥

वदि–सहिभ्यामान्यः ॥ ३८१ ॥

आभ्यामान्य. प्रत्ययो भवति । वद् व्यक्ताया वाचि वदान्य. दाता गुणवान् चारुभाषी वा । षहि मर्षणे सहान्यः शैलः ॥ ३८१ ॥

भीवृधिरुधिवज्यगिरमिवमिवपिजपिशकिस्फायिवन्दीन्दिप-दिमदिमन्दिचन्दिदसिघसिनसिहस्यसिवासिदहिसहिभ्यो रः ॥ ३८७ ॥

एभ्यो र' प्रत्ययो भवति। ञिभींक् भये भेरः भेद' करभ शार मण्डूक दुन्दुभि. कातरश्च। ऋफिडादित्वात् लत्वे भेल चिकित्साग्रन्थकार' शार मण्डूक प्रहीण' अप्राज्ञश्च। वृधूङ् वृद्धौ वर्ध्र चर्मविकार चन्द्र मेघश्च। रुधूपी आवरणे रोध्र वृक्षविशेष। वज गतौ वज्र कुलिशं रत्नविशेषश्च। अग कुटिलाया गतौ अग्र प्राग्भाग श्रेष्ठश्च। रमि क्रीडाया रम्र कामुकः। टुवमू उद्गिरणे वम्र धर्मविशेष धूमश्च। वम्री उपदेहिका। टुवपी बीजसंताने वप्रः केदार प्राकार वास्तुभूमिश्च। जप मानसे च जप्र' ब्राह्मण मण्डूकश्च। शक्लृंट् शक्तौ शक्रः इन्द्र'। स्फायैङ् वृद्धौ स्फारम् उल्बणं प्रभूतं च। वदुङ् स्तुत्यभिवादनयो वन्द्रः बन्दी केतु कामश्च। वन्द्रं समूह। इदु परमैश्वर्ये इन्द्र शक्र। पदिच् गतौ पद्रं ग्रामादिनिवेश शून्य च। मदैच् हर्षे मद्रा' जनपद क्षत्रियश्च। मद्र सुखम्। मदुङ् स्तुत्यभिवादनयो. मन्द्रः मधुर स्वर, मन्द्र गभीरम्। चदु दीप्त्याह्लादयो' चन्द्र' शशी' सुवर्णं च। दसूच् उपक्षये दस्रः शिशिरं चन्द्रमाः अश्विनोर्ज्येष्ठश्च। दस्रौ अश्विनौ। घस्लृं अदने घस्र' दिवसः। णसि कौटिल्ये नस्र' नासिकापुट ऋषिश्च। हसे हसने हस्र' दिनं घातुक हर्षुलश्च। हस्रं बलाधानं संनिपातश्च। सहस्रं दश शतानि। असूच् क्षेपणे अस्रम् अश्रु। वासिच् शब्दे वास्र पुरुषः शब्द' सघातः शरभ रासभ पक्षी च। वास्रा धेनु.। दह भस्मीकरणे दह्रः अग्नि शिशु सूर्यश्च। षहि मर्षणे सह्र. शैल' ॥ ३८७॥

ऋज्ज्यजितञ्चिवञ्चिरिपिसृपितृपिदृपिचुपिक्षिपिक्षुपिक्षुदिमुदिरुदि-
छिदिभिदिखिदुन्दिदम्भिशुभ्युम्भिदंशिचिसिवहिवि-
सिवसिशुचिसिधिगृधिवीन्धिश्वितिवृतिनीशीसु-
सूभ्यः कित् ॥ ३८८ ॥

एभ्य किद् र प्रत्ययो भवति । ऋजि गतिस्थानार्जनो-र्जनेषु ऋज्रः नायक. इन्द्रः अर्थश्च । अज क्षेपणे च वीर' वि-क्रान्तः । तञ्चू वञ्चू गतौ तक्रम् उदश्वित् । वक्र' कुटिल अङ्गा-रकः विष्णुश्च । उभयत्र न्यङ्क्वादित्वात् कत्वम् । रिपि. सौत्र' रिप्र कुत्सितम् । सृप्लृं गतौ सृप्रः चन्द्र' । सृप्रं मधु । सृप्रा नदी । तृपौच् प्रीतौ तृप्रं मेघान्तर्घर्म' आज्यं काष्ठं पापं दु'खं वा । दृपौच् हर्षमोहनयो दृप्र बलं दु'खं च । दृप्रा बुद्धि । चुप मन्दायां गतौ चुप्र. वायुः । क्षिपींत् प्रेरणे क्षिप्र शीघ्रम् । क्षुपि सादने सौत्र क्षुप्र तुहिनं कण्टकिगुल्मकश्च । क्षुदृपी सपेषे क्षुद्रम् अणु जलगर्तश्च । क्षुद्रा मधुकर्य. । क्षुद्र हिस्र । मुदि हर्षे मुद्रा चिह्नकरणम् । रुदृक् अश्रुविमोचने रुद्र' शम्भुः । छिदृपी द्वैधीकरणे छिद्रं विवरम् । भिदृपी विदारणे भिद्रम् अदृढम् । भिद्रः शरः । खिदंत् परिघाते खिद्रं विघ्न' । खिद्र' विषाणं विषाद' चन्द्रः दीनश्च । उन्दैप् क्लेदने उद्र ऋषि' मत्स्यश्च । सम्पूर्वात् समुन्दन्ति आर्द्रीभवन्ति वेलाकाले नद्योऽस्मादिति समुद्र. सागर. भीमादित्वा-दपादाने । दम्भूट् दम्भे दभ्रः अल्पः चन्द्रः कृशः कुशलः सूर्यश्च ।

शुभि दीप्तौ शुभ्रः अवदातः । उम्भत् पूरणे उभ्रो मेघः पेलवश्च । दशं दशने दशूः दन्त. सर्पश्च । चिंगूट् चयने चिरम् अशीघ्रम् । षिंगूट् बन्धने सिरा रुधिरस्रोतोवाहिनी नाडी । वहीं प्रापणे उह्र अनड्वान् । विसच् प्रेरणे विस्रम् आमगन्धि । वसं निवासे उस्रः रश्मिः । उस्रा गौः । शुच शोके शुक्रः ग्रह माम शुक्लश्च । शुक्र रेत । लत्वे शुक्ल वर्णः, कत्वं तु न्यङ्क्वादित्वात् । षिधू गत्यां सिध्र. साधु' वृक्षः मांसप्रभेदश्च । गृधूच् अभिकाङ्क्षायां गृध्रः श्येन' लुब्धक कङ्कश्च । ञिइन्धैपि दीप्तौ विपूर्वात् वीध्रः अग्नि' वायुः नभः निर्मल' पूर्णचन्द्रमण्डलम् । श्विताङ वर्णे श्वित्रं श्वेतकुष्ठम् । वृतूङ् वर्तने वृत्रः दानवः बलवान् रिपुश्च । वृत्रं पापम् । णींग् प्रापणे नीर जलम् । शीङ्क् स्वप्ने शीरः अजगर' । षुंगूट् अभिषवे सुरः देव । सुरा मद्यम् । षूङौच् प्राणिप्रसवे सूरः आदित्य' रश्मिश्च ॥ ३८८ ॥

**इण्–धाग्भ्यां वा ॥ ३८९ ॥**

आभ्यां रः प्रत्ययो भवति, स च वा कित् । इंणक् गतौ इरा मदनीयपानविशेषः मेदीनी च । एरा एडका । डुधांगूक् धारणे च धीरः सत्त्ववान् धृतिमांश्च । धारा जलयष्टि. खड्गावयवः अश्वगतिविशेषश्च ॥ ३८९ ॥

**भन्देर्वा ॥ ३९१ ॥**

भदुङ सुखकल्याणयोः इत्यस्माद् रः प्रत्यय, नकारस्य च लुग् वा भवति । भद्रं भन्द्रं च कल्याणं सुखं च ॥ ३९१ ॥

**चिजिशुसिमितम्यम्यर्देर्दीर्घश्च ॥ ३९२ ॥**

एभ्यो रः प्रत्ययो दीर्घश्चैषां भवति। चिञ् चयने चीरं जीर्णं वस्त्रं वल्कलं च। जि अभिभवे जीरः अजाजी अग्निः वायुः अश्वश्च। जीरम् अन्नम्। लत्वे जीलः चर्मपुटः। शुं गतौ शूरः विक्रान्तः। षिञ् बन्धने सीरं हलम्। सीरा हलविलेखिता लेखा। डुमिञ् प्रक्षेपणे मीरः समुद्रः। मीरं जलम्। मीरा मांस्पचनी देवसीमा च। तमु काङ्क्षायां ताम्रः वर्णः शुल्बं च। अम गतौ आम्रः वृक्षः। अर्द गतियाचनयोः आर्द्रं सरसम्॥ ३९२ ॥

**अवेर्ध् च वा ॥ ३९८ ॥**

अव रक्षणादावित्यस्माद् अरः प्रत्ययो धकारश्चान्तादेशो वा भवति। अधरः हीनः उपरिभावस्य प्रतियोगी दन्तच्छदश्च। अवरः परप्रतियोगी॥ ३९८ ॥

**मृद्युन्दिपिठिकुरिकुहिभ्यः कित् ॥ ३९९ ॥**

एभ्योऽरः प्रत्ययः किद् भवति। मृदश् क्षोदे मृदरः व्याधिः अतिकायः क्षोदश्च। उन्दैप् क्लेदने उदरं जठरं व्याधिश्च। पिठ हिंसासंक्लेशयोः पिठरं भाण्डम्। कुरत् शब्दे कुररः जलपक्षिजातिः। कुहणि विस्मापने कुहरं गम्भीरगर्तः॥ ३९९ ॥

**चाश्यसिवासिमसिमथ्युन्दिमन्दिचतिचङ्क्यङ्किकर्बिचकिबन्धिभ्य उरः ॥ ४२३ ॥**

एभ्य उर. प्रत्ययो भवति । वाशिच् शब्दे वाशुरः शकुनिः गर्दभश्च । वाशुरा रात्रिः । असूच् क्षेपणे असुर' दानवः । वासृणू उपसेवायां वासुरा रात्रिः मसुरा च । मसैच् परिमाणे मसुरा पण्यस्त्री । मसुरं चर्मासनं धान्यविशेषश्च । मथे विलोडने मथुरा नगरी । उन्दैप् क्लेदने उन्दुर' मुषिक. । मदुङ् स्तुत्यादौ मन्दुरा वाजिशाला । चतेग् याचने चतुरः विदग्ध. । चङ्किः सौत्रः चङ्कति चेष्टते चङ्कुरः रथः अनवस्थितश्च । अकुङ् लक्षणे अङ्कुरः प्ररोहः तरुप्रतानभेदश्च । घञ्युपसर्गस्य बहुलमिति बहुलवचनात् दीर्घत्वे अङ्कूर' । कर्ब गतौ कर्बुरः शबल' । चकि तृप्तिप्रतिघातयो· चकुरः दशन । बन्धंश् बन्धने बन्धुर. मनोज्ञः नम्रश्च ॥

## श्वशुरकुकुन्दुरदर्दुरनिचुरप्रचुरचिकुरकुकुरकुक्कुरकुर्कुरशर्कुर-नूपुरनिष्ठुरविथुरमद्गुरवागुरादयः ॥ ४२६ ॥

एते किदुरप्रत्ययान्ता निपात्यन्ते । आशुपूर्वात् शुपूर्वाद्वा अश्नाते. अश्नोतेर्वा आकारलोपश्च । श्वशुर जम्पत्योः पिता । कुपूर्वात् स्कुदुङ् आप्रवणे इत्यस्मात् सलुक् च । कुकुन्दरौ नितम्बकूपौ । दृणातेर्दोऽन्तश्च दर्दुरः मण्डूकः मेघश्च । निपूर्वात् प्रपूर्वात् चिनोतेः चरतेर्वा डिच्च निचुर. तरुविशेष । लत्वे निचुलः । प्रचुरं प्रायः । चकेरिच्चास्य चिकुर युवतीनामीषन्निमीलितमक्षि । चिकुराः केशाः । कुकेः कोऽन्तो वा कुकुरः यादवः । कुक्कुरः श्वा । किरः कुर् कोऽन्तश्च कुर्कुर. श्वा ।

शॄश् हिंसायां गुण• कोऽन्तश्च शर्कुरः तरुणः। णूत् स्तवने णोऽन्तश्च नूपुरः तुलाकोटि। निपूर्वात् तिष्ठतेः निष्ठुर कर्कशः। निष्ठुरं काहलम्। व्यथेर्विथ् च व्यथतेऽस्माज्जन इत्यपादानेऽपि विथुर राक्षस। मदिवात्योर्गोऽन्तश्च मद्गुर मत्स्यविशेषः। वागुरा मृगानाय। आदिग्रहणाद् मन्यतेर्धश्च मधुर रसविशेषः इत्यादि ॥ ४२६ ॥

**मीमसिपशिखटिखडिखर्जिकर्जिसर्जिकृपिवल्लिमण्डिभ्य ऊरः ॥ ४२७ ॥**

एभ्य ऊरः प्रत्ययो भवति। मीङ्च् हिंसायां मयूर शिखी। मह्यां रौतीति वा मयूर। पृषोदरादिषु सञ्ज्ञाशब्दानामनेकधा व्युत्पत्ति लक्षयति। मसैच् परिमाणे मसूरः अवरधान्यजातिः चर्मासनं च। पशिः सौत्रः पश्यते गम्यते इति पशूरः ग्रामः। खट काङ्क्षे खटूर मणिविशेषः। खड़ण् भेदे खडूर खुरलीस्थानम्। खर्ज मार्जने च खर्जूरः वृक्षविशेषः। कर्ज व्यथने कर्जूर स एव मलिनश्च। सर्ज अर्जने सर्जूरः अहः। कृपौङ् सामर्थ्ये कर्पूरः गन्धद्रव्यम्। वल्लि संवरणे वल्लूरः शुष्कं मांसम्। मडु भूषायां मण्डूरः धातुविशेष ॥ ४२७ ॥

**अश्नोतेरीच्चादेः ॥ ४४२ ॥**

अशौटि व्याप्तौ इत्यस्माद् वरट् प्रत्यय, ईकारश्चादेर्भवति। ईश्वर विभुः। ईश्वरी स्त्री ॥ ४४२ ॥

**त्रट् ॥ ४४६ ॥**

सर्वधातुभ्यः त्रट् प्रत्ययो भवति। छादयतीति छत्त्रं छत्त्री वा घर्मवारणम्। पातीति पात्रम् ऊर्जितगुणाधारः साध्वादिः। धात्री भाजनम्। स्नायते स्नात्रं स्नानम्। राजते इति राष्ट्रं देशः। शिष्यतेऽनेनेति शास्त्रं ग्रन्थः। असूच् क्षेपणे अस्त्रं धनुः ॥४४६॥

**स्त्री ॥ ४५० ॥**

स्यते. सूतेः स्त्यायतेः स्तृणातेर्वा त्रट् भवति, स च डित्। स्त्री योषित् ॥ ४५० ॥

**शापाश्याशक्यम्ब्यमिभ्यो लः ॥ ४६२ ॥**

एभ्यो लः प्रत्ययो भवति। शोंच् तक्षणे शाला सभा। मांक् माने माला स्रक्। श्यैङ् गतौ श्याल. पत्नीभ्राता। शक्लंट् शक्तौ शक्लः मनोज्ञदर्शन· मधुरवाक् शक्तश्च। अबुङ् शब्दे, अम गतौ अम्बलः अम्लश्च रस· ॥ ४६२ ॥

**शुक–शी–मूभ्यः कित् ॥ ४६३ ॥**

एभ्य· कित् ल प्रत्ययो भवति। शुक गतौ शुक्ल सितो वर्णः। शीङ्क् स्वप्ने शीलं स्वभावः व्रतं धर्म समाधिश्च। मूङ् बन्धने मूल वृक्षपादावयवः आदि· हेतुश्च ॥ ४६३ ॥

**नहि–लङ्गेर्दीर्घश्च ॥ ४६६ ॥**

आभ्याम् अल. प्रत्यय, अनयोश्च दीर्घो भवति। णहींच बन्धने नाहल· म्लेच्छ·। लगु गतौ लाङ्गलं हलम् ॥ ४६६ ॥

**ऋ–ज्वलेर्गोऽन्तश्च ॥ ४६७ ॥**

आभ्यामल प्रत्ययो गकारश्चान्तो भवति। ऋंक् गतौ अर्गला परिघः। जनैचि प्रादुर्भावे जङ्गलं निर्जलो देशः ॥४६७॥

कुलिपिलिविशिबिडिमृडिकुणिपीप्रीभ्यः कित् ॥ ४७६ ॥

एभ्यः किदालः प्रत्ययो भवति। कुल बन्धुसंस्त्यानयोः कुलालः कुम्भकारः। पिलत् क्षेपे पिलालं श्लिष्टम्। विशंत् प्रवेशने विशालं विस्तीर्णम्। बिड आक्रोशे बिडालः मार्जारः। लत्वे बिलालः स एव। मृणत् हिंसायां मृणालं बिसम्। कुणत् शब्दोपकरणयो कुणाल कृतमालः कटविशेषश्च। कुणाल नगरं कठिनं च। पीङ्च् पाने पियालः वृक्ष, पियालं शाक वीरुच्च। प्रीङ्च् प्रीतौ प्रियाल पियाल ॥ ४७६ ॥

कलयनिमहिद्रमिजटिभटिकुटिचण्डिशण्डितुण्डिपिण्डिभूकुकिभ्य इलः ॥ ४८१ ॥

एभ्य इलः प्रत्ययो भवति। कलि शब्द—सख्यानयो कलिलं गहनं पापम् आत्माधिष्ठितं च शुक्रार्तवम्। अनक् प्राणने अनिलः वायु। मह पूजायां महिला स्त्री। द्रम गतौ द्रमिला त्रैराज्यवासिनः। जट झट संघाते जटिल जटावान्। भट भृतौ भटिलः श्वा सेवकश्च। कुटत् कौटिल्ये कुटिल वक्रम्। चडुङ् कोपे चण्डिल श्वा क्रोधन नापितश्च। शडुङ् रुजायां शण्डिलः ऋषिः। तुडुङ् तोडने तुण्डिलः वाग्जाली। पिडुङ् संघाते पिण्डिलः मेघः हिस्तः हिमः गणकश्च। भू सत्तायां भविलः मुनिः समर्थः गृहं बहुनेता च। कुकि आदाने कोकिलः परभृतः ॥ ४८१ ॥

**गुपि-मिथि-ध्रुभ्यः कित् ॥ ४८३ ॥**

एभ्य किद् इलः प्रत्ययो भवति। गुपौ रक्षणे गुपिलं गहनम्। मिथृग् मेधाहिंसयोः मिथिला नगरी। ध्रुं स्थैर्ये च ध्रुविलः ऋषि ॥ ४८३ ॥

**महेरेलः ॥ ४९२ ॥**

मह पूजायामित्यस्मादेल प्रत्ययो भवति। महेला स्त्री ॥ ४९२ ॥

**कटिपटिकण्डिगण्डिशकिकपिचहिभ्य ओलः ॥ ४९३ ॥**

एभ्य ओलः प्रत्ययो भवति। कटे वर्षावरणयो. कटोलः कटविशेषः वादित्रविशेषश्च। कटोला ओषधिः। पट गतौ पटोला वल्लीविशेष। कडु मदे कण्डोल विदलभाजनविशेष। गडु वदनैकदेशे गण्डोल कृमिविशेष। शक्लंट् शक्तौ शकोल शक्तः। कपिः सौत्र कपोल गण्ड। चह कल्कने चहोल उपद्रव ॥४९३॥

**ग्रह्यादभ्यः कित् ॥ ४९४ ॥**

ग्रहेराकारान्तेभ्यश्च धातुभ्य किदोल प्रत्ययो भवति। ग्रहीश उपादाने गृहोल बालिशः। कायतेः कोलः बदरी वराहश्च। गायते गोल वृत्ताकृतिः। गोला गोदावरी बालरमणकाष्ठ च। पातेः पोला तालाख्यं कपाटबन्धनं परिखा च। लातेः लोलः चपलः। ददातेर्दयतेर्द्यतेर्वा दोला प्रेङ्खणम् ॥ ४९४ ॥

**शमि-कमि-पलिभ्यो बलः ॥ ४९९ ॥**

एभ्यो बल प्रत्ययो भवति । शमूच् उपशमे शम्बलं पाथेयम् । कमूङ् कान्तौ कम्बलः ऊर्णापटः । पल गतौ पल्वलम् अकृत्रिमोदकस्थानविशेषः ॥ ४९९ ॥

**लटिखटिखलिनलिकण्यशौसृशॄकॄगॄदॄपॄशपिश्याशालापदिह्रसीण्भ्यो वः ॥ ५०५ ॥**

एभ्यो व. प्रत्ययो भवति । लट बाल्ये लट्वा क्षुद्रचटका कुसुम्भं च । खट काङ्क्षे खट्वा शयनयन्त्रम् । खल संचये च खल्वं निम्नं खलीनं च । खल्वा दृतिः । णल गन्धे नल्व भूमानविशेष। कण शब्दे कण्वः ऋषि । कण्वं पापम् । अशौटि व्याप्तौ अश्वः तुरगः । सृं गतौ सर्वः शम्भु । शॄश् हिंसायां शर्व शम्भुः । कॄत् विक्षेपे कर्वः आखुः समुद्रः निष्पत्तिक्षेत्रं च । गॄत् निगरणे गर्वः अहङ्कार. । दॄश् विदारणे दर्वा जनपद । दर्व हिंस्र । पॄश् पालनपूरणयो पर्व रुद्र काण्डं च। शपी आक्रोशे शप्व आक्रोश । श्यैङ् गतौ श्याव वर्ण । शोंच् तक्षणे शाव तिर्यग्बालः । लाक् आदाने लाव पक्षिजाति. । पदिंच् गतौ पद्व रथ वायुः भूर्लोकश्च । ह्रस शब्दे ह्रस्वः लघुः । इंणक् गतौ एव केवलः । एव इत्यवधारणे निपातश्च ॥ ५०५ ॥

**शीङापो ह्रस्वश्च वा ॥ ५०६ ॥**

आभ्या वः प्रत्ययः, ह्रस्वश्च वा भवति । शीङक् स्वप्ने शिव

क्षेम सुख मोक्षपदं च । शिवा हरीतकी । शैवं धनम् । शैवः अजगरः सुखकृच्च । शैवा प्रचला निद्राविशेषः मेढ्रश्च । आप्लॄं व्याप्तौ अप्वा देवायुधम् । आप्वा वायुः ॥

**उर्देर्ध् च ॥ ५०७ ॥**

उर्दि मानक्रीडयोश्चेत्यस्माद् वः प्रत्ययः, धश्चान्तादेशो भवति । ऊर्ध्वः उद्धर्ष्मा । ऊर्ध्वम् उपरि । ऊर्ध्वं परस्तात् ॥५०७॥

**लिहेर्जिह् च ॥ ५१३ ॥**

लिहीक् आस्वादने इत्यस्माद् वः प्रत्ययः, अस्य च जिह् इत्यादेशो भवति । जिह्वा ॥ ५१३ ॥

**मणि-वसेर्णित् ॥ ५१६ ॥**

आभ्यां णिद् अवः प्रत्ययो भवति । मण शब्दे माणवः शिष्य । वसं निवासे वासवः शक्र ॥ ५१६ ॥

**मलेर्वा ॥ ५१७ ॥**

मलि धारणे इत्यस्मादवः प्रत्ययः, स च णिद् वा भवति । माल्वा जनपदः । मल्व. दानवः ॥ ५१७ ॥

**प्रथेरिवट् पृथ् च ॥ ५२१ ॥**

प्रथिष् प्रख्याने इत्यस्माद् इवट् प्रत्ययः, अस्य च पृथ् इत्यादेशो भवति । पृथिवी भः ॥ ५२१ ॥

**पा-दा-चम्यमिभ्यः शः ॥ ५२७ ॥**

एभ्य· शः प्रत्ययो भवति । पांक् रक्षणे पाशः बन्धनम् । डुदांगृक् दाने दाश· कैवर्तः । टुवमू उद्गिरणे वंश· वेणु· । अम गतौ अंशः भागः ॥ ९२७ ॥

**कृ–वृ–भृ–वनिभ्यः कित् ॥ ९२८ ॥**

एभ्य. कित् शः प्रत्ययो भवति । डुकृंग् करणे कृशः तनुः। वृगट् वरणे वृशं श्रृङ्गवेरं मूलकं लशूनं च । डुडुभृंगक् पोषणे च भृशम् अत्यर्थम् । वन भक्तौ वशः आयत्त· ॥ ९२८ ॥

**कोर्वा ॥ ९२९ ॥**

कुंङ् शब्दे इत्यस्मात् श· प्रत्यय·, स च किद् वा भवति । कुश. दर्भः । कोशः सारं कुड्मलं च ॥ ९२९ ॥

**क्लिशः के च ॥ ९३० ॥**

क्लिशौश् विबाधने इत्यस्मात् शः प्रत्यय·, अस्य च के इत्यादेशो भवति । केशा· मूर्धजाः ॥ ९३० ॥

**कलेष्टित् ॥ ९३२ ॥**

कलि शब्दसंख्यानयोरित्यस्मात् टिद् अशक् प्रत्ययो भवति। कलशः कुम्भ· । कलशी दधिमन्थनभाजनम् ॥ ९३२ ॥

**पलेराशः ॥ ९३३ ॥**

पल गतावित्यस्मादाशः प्रत्ययो भवति । पलाश· ब्रह्मवृक्षः ॥ ९३३ ॥

**कनेरीश्चातः ॥ ९३४ ॥**

कनै दीप्त्यादावित्यस्मादाशः प्रत्ययः, ईकारश्चाकारस्य भवति। कीनाश. कर्षकः वर्णसंकरः कदर्यश्च। तथा 'लुब्धः कीनाशः स्यात् कीनाशोऽप्युच्यते कृतघ्नश्च। योऽश्नाति वाऽऽममांसं स च कीनाशो यमश्चैव ॥ ९३४ ॥

**कुलिकनिकणिपलिवडिभ्यः किशः ॥९३५॥**

एभ्य. किद् इशः प्रत्ययो भवति। कुल बन्धुसंस्त्यानयोः कुलिशं वज्रम्। कनै दीप्त्यादौ कण शब्दे कनिशं कणिशं च सस्यमञ्जरी। पल गतौ पलिशं यत्र स्थित्वा मृगा व्यापाद्यन्ते। वड आग्रहणे सौत्रः बडिश मत्स्यग्रहणम् ॥ ९३५ ॥

**बलेर्णिद् वा ॥ ९३६ ॥**

बल प्राणनधान्यावरोधयोरित्यस्मात् किशः प्रत्यय, स च णिद् वा। बालिश., बलिश. मूर्ख । बलिशं बडिशम् ॥९३६॥

**मस्ज्यङ्किभ्यामुशः ॥ ९३८ ॥**

आभ्यामुशो। भवति टुमस्जोंत् शुद्धौ 'न्यङ्कूद्गमेघादयः' इति ग' मद्गुश नकुल'। अकुङ् लक्षणे अङ्कुशः सृणि'॥९३८॥

**वृ–कृ–तृ–मीङ्–माभ्यः षः ॥ ९४० ॥**

एभ्य' षः प्रत्ययो भवति। वृञ् वरणे वर्ष' भर्ता। वर्ष संवत्सरः। वर्षा ऋतुः। कॄञ् विक्षेपे कर्षः उन्मानविशेष.। तॄ प्लवनतरणयोः तर्षः प्लवः हर्षश्च। मींञ् हिंसायां मेषः उरभ्रः। मांक् माने माषः धान्यविशेषः हेमपरिमाणं च ॥ ९४० ॥

**योरूच्च वा ॥ ५४१ ॥**

युक् मिश्रणे इत्यस्मात् ष प्रत्ययः, ऊकारश्चान्तादेशोवा । यूषः पेयविशेषः । यूषा छाया । योषा स्त्री ॥ ५४१ ॥

**मह्यविभ्यां टित् ॥ ५४७ ॥**

आभ्यां टिदिषः प्रत्ययो भवति । मह पूजायां महिषः सरिभः राजा च । महिषी राजपत्नी सरिभी च । अव रक्षणादौ अविषः समुद्रः राजा पर्वतश्च । अविषी द्यौ भूमिः गङ्गा च ॥५४७॥

**विदि-पृभ्यां कित् ॥ ५५८ ॥**

आभ्यां किदुषः प्रत्ययो भवति । विदक् ज्ञाने विदुषः विद्वान् । पृश् पालनपूरणयोः पुरुषः पुमान् आत्मा च ॥ ५५८ ॥

**कलेर्मषः ॥ ५६२ ॥**

कलि शब्दसंख्यानयोः इत्यस्मात् मषः प्रत्ययो भवति । कल्मष पापम् ॥ ५६२ ॥

**मावावद्यमिकमिहनिमानिकष्याशेपचिमुचियजिवृतृभ्यः सः ॥ ५६४ ॥**

एभ्यः सः प्रत्ययो भवति । मांक् माने मासः त्रिंशद्रात्रः । वांक् गतिगन्धनयोः वासः आटरूपकः । वद व्यक्तायां वाचि वत्सः तर्णकः ऋषिः प्रियस्य च पुत्रस्याख्यानम् । अम गतौ अंसः भुजशिखरम् । कमूङ् कान्तौ कंसः लोहजातिः विष्णोरराति: हिर-

ण्यमानं च । हनंक् हिंसागत्योः हंसः श्वेतच्छद । मानि मांसं तृतीयो धातुः । कष हिंसायां कक्षः तृणं गहनारण्यं शरीरावयवश्च । अशौटि व्याप्तौ अक्षाः प्रासकाः । अक्षाणि इन्द्रियाणि रथचक्राणि च । डुपचींष् पाके पक्ष अर्धमासः वर्ग शकुन्यवयवः सहायः साध्यं च । मुच्लंती मोक्षणे मोक्ष मुक्तिः । यजीं देवपूजादौ यक्षः गुह्यकः । वृग्श् वरणे वर्स. देशः समुद्रश्च । तृ प्लवनतरणयोः तर्सः वीतंसः सूर्यश्च ॥ ९६४ ॥

## सृ-वयिभ्यां णित् ॥ ५७० ॥

आभ्यां णिदसः प्रत्ययो भवति। सृं गतौ सारसः पक्षिविशेषः। वयि गतौ वायस काकः ॥ ९७० ॥

## कृ-कुरिभ्यां पासः ॥ ५८३ ॥

आभ्यां पासः प्रत्ययो भवति । डुकृंग् करणे कर्पासः पिचुप्रकृतिः वीरुच्च । कुरत् शब्दे कूर्पासः कञ्चुकः ॥ ९८३ ॥

## कलि-कुलिभ्यां मासक् ॥ ५८४ ॥

आभ्यां किद् मासः प्रत्ययो भवति । कलि शब्दसंख्यानयोः कल्मासं शबलम् । कुल बन्धुसंस्त्यानयोः कुल्मास अधस्विन्नं माषादि ॥ ९८४ ॥

## लूगो हः ॥ ५८६ ॥

लुनातेः हः प्रत्ययो भवति । लोहं सुवर्णादि ॥ ९८६ ॥

**क्तितो गे च ॥ ९८७ ॥**

कित निवासे इत्यस्माद् हः प्रत्ययः, अस्य च गे इत्यादेशो भवति। गेहं गृहम् ॥ ९८७ ॥

**अनेरोकहः ॥ ९९५ ॥**

अन प्राणने इत्यस्मादोकहः प्रत्ययो भवति। अनोकहः वृक्षः ॥ ९९९ ॥

**इति सिद्धहेमव्याकरणत उद्धृतोऽयमुणादिसंक्षेपः समाप्तः। तत्समाप्तौ च समाप्तमिदं पूर्वकृदन्तप्रकरणम् ॥**



# अथोत्तरकृदन्तप्रकरणम् ।

---

**तत्र क्वसु-कानौ तद्वत् । ५ । २ । २ ।**

सर्वधातुभ्यः परोक्षाविषये क्वसुकानौ भवतः, तौ च परोक्षावत् स्याताम् । पेचिवान्, पेचानः । शुश्रुवान्, शुश्रुवाणः । सेदिवान् । ऊषिवान् । भावयाम्बभूवान् ।

**वेयिवदनाश्वदनूचानम् । ५ । २ । ३ ।**

एते भूतार्थविषये क्वसुकानान्ताः कर्तरि वा निपात्यन्ते । समीयिवान् । अनाश्वान् । अनूचानः । पक्षे । अगात् । ऐत् । इयाय । नाशीत् । नाश्नात् । नाश । अन्ववोचत् । अन्ववक । अन्वब्रवीत् । अनूवाच ।

**वर्त्स्यति गम्यादिः । ५ । ३ । १ ।**

भविष्यदर्थे गम्यादयः शब्दा इन्नन्ता यथायोगं साधवो भवन्ति । गमी ग्रामम् । आगामी जिनभुवनम् । भावी पुत्रः ।

**वा हेतुसिद्धौ क्तः । ५ । ३ । २ ।**

वर्त्स्यदर्थाद् धातोः धात्वर्थहेतोः सिद्धौ सत्यां क्तप्रत्ययो वा भवति । मेघश्चेद् वृष्टः, सम्पन्नाः सम्पत्स्यन्ते वा शालयः ।

**क्रियायां क्रियार्थायां तुम् णकच् भविष्यन्ती । ५ । ३ । १३ ।**

यस्माद् धातोः तुमादिस्तद्वाच्या क्रिया अर्थः प्रयोजनं यस्याः क्रियायाः, तस्यां क्रियायामुपपदे सत्यां धातोः तुम् णकच्च भविष्यन्ती भवन्ति । कर्तुं याति । कारकः याति । करिष्यामीति याति । क्रियायामिति किम् ? याचिष्ये इत्यस्य पुस्तकम् । क्रियार्थायामिति किम् ? धावतस्ते वास पतिष्यति ॥

**कर्मणोऽण् । ५ । ३ । १४ ।**

क्रियायां क्रियार्थायामुपपदे कर्मणः पराद् भविष्यदर्थाद् धातोः अण् प्रत्ययो भवति । कुम्भकारो गच्छति । काण्डलावो याति ।

**भाववचनाः । ५ । ३ । १५ ।**

क्रियार्थायां क्रियायामुपपदे भविष्यदर्थाद् धातोः भाववचना घञादयः प्रत्यया भवन्ति । पाकाय व्रजति । पक्तये गच्छति । पचनाय याति ।

**पद-रु-जविश-स्पृशेर्घञ् । ५ । ३ । १६ ।**

एभ्यो धातुभ्यो घञ् प्रत्ययः कर्तरि भवति । पद्यते पत्स्यते अपादि वा इति पादः । रुजतीति रोगः । विशति वेश । स्पर्शः ।

**भावाकर्त्रोः । ५ । ३ । १८ ।**

सर्वधातुभ्यो भावे कर्तृवर्जिते च सर्वस्मिन् कारके वाच्ये घञ् प्रत्ययो भवति । पाकः । रागः ।

**इङोऽपादाने तु टिद् वा । ५ । ३ । १९ ।**

इङ्धातोः भावे कर्तृभिन्नकारके च घञ् भवति, स चापादाने टिद् वा भवति। अध्ययनम् अध्यायः अधीयते इत्यध्यायः। उपेत्याधीयतेऽस्मादित्युपाध्याय। उपाध्यायी, उपाध्याया।

**निरभेः पू-ल्वः। ५। ३। २१।**

निरभिपूर्वाभ्यामाभ्यां यथासंख्यं भावाकर्त्रोः घञ् भवति। निष्पूयते इति निष्पाव। अभिलवनमभिलाव। अल्बाधनार्थम्।

**रोरुपसर्गात्। ५। ३। २२।**

उपसर्गपूर्वादस्माद् भावाकर्त्रोः घञ् भवति। संरवणं सरावः। उपसर्गादिति किम्? रवः अत्राल्।

**भू-श्र्यदोऽल्। ५। ३। २३।**

भू श्रि अद् इत्येतेभ्य उपसर्गपूर्वेभ्यो भावाकर्त्रोः अल् भवति। प्रभवनं प्रभवः। विभवः। प्रतिश्रय। संश्रयः। प्रघसः। विघसः।

**संनिव्युपाद् यमः। ५। ३। २५।**

एभ्यः पराद् यम्धातोः भावाकर्त्रोः अल् प्रत्ययो वा भवति। संयमः, संयामः। नियमः, नियामः। वियमः, वियामः। उपयमः, उपयामः।

**नेर्नद-गद-पठ-स्वन-क्वणः। ५। ३। २६।**

निपूर्वेभ्य एभ्यो भावाकर्त्रोः अल् वा भवति। निनदः,

निनादः । निगदः, निगादः । निपठः, निपाठः । निस्वनः, निस्वानः । निक्वणः, निक्वाणः ।

**वैणे क्वणः । ५ । ३ । २७ ।**

वीणायां भवो वैणस्तस्मिन् वर्तमानादुपसर्गपूर्वात् क्वणेः भावाकर्त्रोरल् वा भवति । प्रक्वणः, प्रक्वाणो वा वीणायाः । एवं निक्वणः, निक्वाणः ।

**युवर्णवृदृवशरणगमृद्ग्रहः । ५ । ३ । २८ ।**

इवर्णान्तेभ्य उवर्णान्तेभ्यो वृदृवशरणगमिभ्यः ऋकारान्तेभ्यो ग्रहश्च भावाकर्त्रोरल् भवति । घञोऽपवादः । चयः । निश्चयः । जयः । क्षयः । यवः । रवः । पवः । स्तवः । लवः । वरः । दरः । वशः । रणः । गमः । अवगमः । विगमः । करः । गरः । तरः । ग्रहः ।

**समुदोऽजः पशौ । ५ । ३ । ३० ।**

आभ्यां परादजेः पशुविषयधात्वर्थे सति भावाकर्त्रोरल भवति । समजः पशूनाम् समूह इत्यर्थः । उदजः पशूनां प्रेरणमित्यर्थः । अन्यत्र समाजः ।

**सृ-ग्लहः प्रजनाक्षे । ५ । ३ । ३१ ।**

प्रजनविषयेऽक्षविषये च धात्वर्थे यथासंख्यम् आभ्यां भावाकर्त्रोरल् भवति । प्रजनो गर्भग्रहणं तदर्थं स्त्रीषु पुंसां प्रथमं सरणम् उपसरः । अक्षाणां ग्लहः ग्रहणमित्यर्थः ।

**पणेर्माने । ५ । ३ । ३२ ।**

माने वर्तमानात् पणे भावाकर्त्रोरल् भवति । मूलकस्य पणः । शाकपणः । मूलकादीनां व्यवहारार्थं परिमितो मुष्टिः इत्यर्थः । 'संमदप्रमदौ हर्षे निपात्यौ' । संमदः कोकिलानाम् । प्रमदः कन्यानाम् । अन्यत्र संमादः, प्रमादः इति घञ् ।

हनोऽन्तर्घनान्तर्घणौ देशे । ५ । ३ । ३४ ।

अन्तःपूर्वाद् हन्धातोः अल् प्रत्ययः घनघणादेशौ च देशेऽभिधेये भावाकर्त्रोः निपात्येते । अन्तर्हन्यतेऽस्मिन्निति अन्तर्घनः अन्तर्घणो वा वाहीकेषु देशविशेषः । अन्यत्र तु अन्तर्घातः ।

प्रघण-प्रघाणौ गृहांशे । ५ । ३ । ३५ ।

प्रपूर्वाद् हन्धातोः गृहांशेऽभिधेये अल् प्रत्ययस्तद्योगे च घणघाणौ निपात्येते । प्रहन्यतेऽसौ प्रघण, प्रघाणो वा गृहद्वारालिन्दकः । अन्यत्र प्रघातः ।

निघोद्घसंघोद्घनापघनोपघ्नं निमितप्रशस्तगणात्याधानाङ्गासन्नम् । ५ । ३ । ३६ ।

हन्धातोः निघादयः यथासंख्यं निमितादिष्वर्थेषु वाच्येषु अल्प्रत्ययान्ता निपात्यन्ते । समन्ततो मितं तुल्यं वाऽविशेषेण मितं निमितं तुल्यारोहपरिणाहमित्यर्थः । निघा वृक्षाः, निघाः शालयः तुल्यारोहपरिणाहवन्त इत्यर्थः । यद् वा निर्विशेषं निश्चयेन वा हन्यन्ते ज्ञायन्ते इति निघा वृक्षाः निश्चयेन निर्विशेषेण वा ज्ञाता इत्यर्थः । निघा बृहतिका । निघं वस्त्रम् । उद्घः

प्रशस्तः । गणः समूहः । संहतिः संघः । अत्याधीयन्ते छेदनार्थं काष्ठादीनि यत्र तदत्याधानं उद्घनः । काष्ठोद्घनः । अङ्गं शरीरावयवः अपहन्यतेऽनेनेत्यपघनः अङ्गम् । उपहन्यते समीपे ज्ञायते इत्युपघ्नः आसन्नः । गुरूपघ्नः । ग्रामोपघ्नः ।

मूर्तिनिचिताभ्रे घनः । ५ । ३ । ३७ ।

मूर्त्यादिष्वर्थेषु हन्तेरल् प्रत्ययः, घनादेशश्च निपात्यते । मूर्तिः काठिन्यम् । अभ्रस्य घनः काठिन्यमित्यर्थः । निचितं निरन्तरम् ; घनाः केशाः । घनाः शालयः । अभ्रं मेघः, घनः मेघः ।

व्ययोद्रोः करणे । ५ । ३ । ३८ ।

वि अयस् द्रु इत्येतेभ्यः परात् हन्धातोः करणेऽल्, घनादेशश्च निपात्यते । भावस्य कारकान्तरस्य च निषेधार्थं करणग्रहणम् । विहन्यते तिमिरमनेनेति विघनः । वयः पक्षिणो हन्यतेऽनेनेति वा विघनः । अयो हन्यतेऽनेनेति अयोघनः । द्रुः हन्यन्तेऽनेनेति द्रुघनः कुठारः । स्त्रियां तु परत्वादनडेव विहन्यतेऽनया विहननी । अयोहननी । द्रुहननी ।

स्तम्बाद् घ्नश्च । ५ । ३ । ३९ ।

स्तम्बशब्दात् पराद् हन्धातोरल् प्रत्ययः, घ्न-घनौ चादेशौ करणे निपात्येते । स्तम्बः हन्यतेऽनेन स्तम्बघ्नः दण्डः । स्तम्बघनो यष्टिः । स्त्रियामनडेव ।

न्यभ्युपवेर्वाश्चोत् । ५ । ३ । ४२ ।

नि-अभि-उप-विभ्य' पराद् ह्वयते. भावाकर्त्रोरल्, तत्संनियोगे च वाशब्दस्य उकारो भवति । निहवः । अभिहवः । उपहवः । विहव । अन्यत्र प्रह्वाय. ।

आङो युद्धे । ५ । ३ । ४३ ।

आङ्पूर्वाद् ह्वयते' युद्धेऽर्थे भावाकर्त्रोः अल् भवति, वाशब्दस्य चोकार' । आहूयन्ते योद्धारो यस्मिन् आहव युद्धम् ।

आहावो निपानम् । ५ । ३ । ४४ ।

निपिबन्त्यस्मिन्निति निपानम् पशु–शकुनीनां पानार्थं कृतः जलाधार' । आङ्पूर्वाद् ह्वयते' भावाकर्त्रोरल् आहावादेशश्च निपात्यते निपानेऽभिधेये । आहूयन्ते पशव. पानार्थं यस्मिन्नित्याहावः पशूनाम् । आहावः शकुनीनाम् निपानमित्यर्थ. । अन्यत्र आह्वाय ।

भावेऽनुपसर्गात् । ५ । ३ । ४५ ।

अनुपसर्गाद् ह्वयते भावेऽल् प्रत्ययः, वाशब्दस्य चोकारो भवति । अकर्त्तरीत्यस्यानुप्रवेशनिषेधार्थं भाव इति । ह्वान हवः । कर्मणि ह्वाय , उपसर्गादपि आह्वानम् आह्वाय' ।

हनो वा वध् च । ५ । ३ । ४६ ।

अनुपसर्गाद् हन्तेर्भावेऽल् वा भवति । तत्सन्नियोगे चास्य वधादेश. । हननं वध', घातः । अनुपसर्गादित्येव संघातः ।

**व्यध-जप-मद्भ्यः । ५ । ३ । ४७ ।**

एभ्योऽनुपसर्गेभ्यो भावाकर्त्रोरल् भवति । व्यधः । जपः । मदः । अनुपसर्गादित्येव आव्याधः । उपजापः । उन्मादः ।

**नवा क्वण-यम-हस-स्वनः । ५ । ३ । ४८ ।**

अनुपसर्गेभ्य एभ्यो भावाकर्त्रोरल् वा भवति । क्वणः, क्वाणः । यमः, यामः । हसः, हासः । स्वनः, स्वानः ।

**वर्षविघ्नेऽवाद् ग्रहः । ५ । ३ । ५० ।**

अवपूर्वाद् ग्रहेर्वर्षविघ्ने वाच्ये भावाकर्त्रोरल् वा भवति । अवग्रहः, अवग्राहः वृष्टेः प्रतिबन्ध इत्यर्थः ।

**वृगो वस्त्रे । ५ । ३ । ५२ ।**

प्रपूर्वाद् वृणोतेः वस्त्रविशेषे वाच्ये भावाकर्त्रोरल् वा भवति । प्रवरः, प्रावार ।

**युपू-द्रोर्घञ् । ५ । ३ । ५४ ।**

उत्पूर्वेभ्य एभ्यो भावाकर्त्रोर्घञ् भवति । उद्यावः । उत्पावः । उद्द्रावः । 'समाह्वय इति द्यूते, आह्वय इति च सञ्ज्ञायां निपात्यौ' । समाह्वयः द्यूतम् । आह्वयः नाम ।

**चितिदेहावासोपसमाधाने कश्चादेः । ५ । ३ । ७९ ।**

चितिः यज्ञेऽग्निविशेषः, तदाधारो वा । देहः शरीरम् । आवासः निवासः । उपसमाधानमुपर्युपरि राशीकरणम् । एष्वर्थेषु

चिनोतेः भावाकर्त्रोर्घञ् तत्संनियोगे चादेः ककारादेशो भवति। आकायमग्निं चिन्वीत। देहे कायः शरीरम्। आवासे ऋषिनिकायः। उपसमाधाने गोमयनिकायः। गोमयपरिकायः।

**माने। ५। ३। ८१।**

माने गम्ये धातो भावाकर्त्रोः घञ् भवति। मानमियत्ता, सा च द्वेधा संख्या परिमाणं च। एको निघासः। द्वौ निघासौ। समित्संग्राहः। तण्डुलसंग्राहः मुष्टिरित्यर्थः। मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति अल एवायमपवादः, क्त्यादिभिस्तु बाध्यते। एका तिलोच्छ्रितिः। द्वे प्रसृती।

**स्थाऽऽदिभ्यः कः। ५। ३। ८२।**

स्थादिभ्यो धातुभ्यो भावाकर्त्रोः क प्रत्ययो भवति। आखूनामुत्थानम् आखूत्थः वर्तते। शलभोत्थः। प्रतिष्ठन्त्यस्मिन्निति प्रस्थः सानुः। संतिष्ठन्तेऽस्यामिति संस्था। व्यवस्था। प्रपिबन्त्यस्यामिति प्रपा। विधः। आविधः। विघ्नः।

**ट्वितोऽथुः। ५। ३। ८३।**

ट्वितो धातोः भावाकर्त्रोरथुः प्रत्ययो भवति। वेपथुः। वमथुः। श्वयथुः। स्फूर्जथुः। श्रासथुः। नन्दथुः। क्षवथुः। दवथुः।

**ड्वितस्त्रिमक् तत्कृतम्। ५। ३। ८४।**

ड्वितो धातोः भावाकर्त्रोः त्रिमक् भवति, तेन धात्वर्थेन

कृतं निर्वृत्तमित्यस्मिन्नर्थे। पाकेन निर्वृत्तं पक्त्रिमम्। कृत्रिमम्। लब्ध्रिमम्। याचित्रिमम्।

**यजिस्वपिरक्षियतिप्रच्छो नः। ५। ३। ८६।**

एभ्यो भावाकर्त्रोः न प्रत्ययो भवति। यज्ञः। स्वप्नः। रक्ष्णः। यत्नः। प्रश्नः।

**उपसर्गाद् दः किः। ५। ३। ८७।**

उपसर्गपूर्वाद् दासञ्ज्ञकाद् धातोः भावाकर्त्रोः किः भवति। आदिः। प्रधिः। आधिः। निधिः। संधिः। समाधिः।

**व्याप्यादाधारे। ५। ३। ८८।**

कर्मणः पराद् दासञ्ज्ञकाद् धातोः आधारे कारके किर्भवति। जलं धीयतेऽस्मिन्निति जलधिः। शरधिः। इषुधिः। बालधिः। शेवधिः।

**अभिव्याप्तौ भावेऽनञिन्। ५। ३। ९०।**

क्रियया स्वसम्बन्धिनः साकल्येनाभिसम्बन्धोऽभिव्याप्तिः। तस्यां गम्यमानायां धातोः भावेऽनञिन् इत्येतौ प्रत्ययौ भवतः। समन्ताद् रावः संरवणम्। साराविणं वर्तते सेनायाम्।

**स्त्रियां क्तिः। ५। ३। ९१।**

धातोः भावाकर्त्रोः स्त्रियां क्तिर्भवति। स्त्रियामिति प्रत्ययार्थविशेषणम्। कृतिः। हृतिः। चितिः। नीतिः। नुतिः। विभूतिः।

श्वादिभ्यः । ९ । ३ । ९२ ।

शृणोत्यादिभ्यो धातुभ्यः स्त्रीलिङ्गे भावाकर्त्रोः क्तिर्भवति। वक्ष्यमाणैः क्विबादिभिः सह समावेशाथ वचनम् । श्रुतिः, प्रतिश्रुत् । स्तुतिः, प्रतिस्तुत् । संपत्तिः, संपत् । विपत्तिः, विपद् । आसत्ति , संसद् । संवित्ति , संवित् । पक्तिः, पचा । इष्टिः, इच्छा । मतिः, मन्या इत्यादि ।

समिणासुगः । ९ । ३ । ९३ ।

सम्पूर्वादिणः आङ्पूर्वात् सुगश्च स्त्रियां क्तिः भवति । क्यपोऽपवादः । समितिः । आसुतिः । अन्यत्र इत्या, सुत्या इति क्यबेव ।

सातिहेतियूतिजूतिज्ञप्तिकीर्ति । ९ । ३ । ९४ ।

एते क्तिप्रत्ययान्ता स्त्रिया निपात्यन्ते । सिनोतेः सुनोतेः स्यतेर्वा आत्वमित्वाभावश्च निपात्यते सातिः । हिनोतेः हन्तेर्वा हेतिः । यौतेः यूतिः । जवतेः जूतिः । ज्ञपयतेः ज्ञप्तिः । कीर्तयतेः कीर्तिः । ज्ञपि–कीर्त्योः ण्यन्तलक्षणोऽनो न भवति ।

गा–पा–पचो भावे । ९ । ३ । ९५ ।

एभ्यो भावेऽर्थे स्त्रियां क्तिर्भवति । संगीतिः । पिबतेः प्रपीतिः । पक्तिः । भावग्रहणादन्यत्र कर्तृभिन्ने कारके क्तिबाधकोऽङेव भवति गापचोः, पाधातोस्तु आधारे स्थादिभ्यः कः, अपादाने उपसर्गादातः इत्यङ् । 'स्थाधातोः भावे वा क्तिर्वाच्यः'

प्रस्थितिः । उपस्थितिः । पक्षेऽङपि प्रस्था । आस्था । व्यवस्था । उपस्थेत्यादयोऽपि ।

**आस्यटि–व्रज्–यजः क्यप् । ५ । ३ । ९७ ।**

एभ्यो भावे स्त्रियां क्यब् भवति । आस्या । अट्या । व्रज्या । इज्या ।

**भृगो नाम्नि । ५ । ३ । ९८ ।**

भृगः परो भावेऽर्थे स्त्रियां सञ्ज्ञायां क्यब् भवति । भरणं भृत्या । नाम्नीति किम् ? भृति । भाव इत्येव भ्रियते इति भार्या वधूः ।

**समजनिपन्निपद्शीङ्सुग्विदिचरिमनीणः । ५ । ३ । ९९ ।**

एभ्यो धातुभ्यो भावाकर्त्रोः स्त्रियां क्यब् भवति । समजन्ति अस्यामिति समज्या । निपतन्त्यस्यामिति निपत्या । एवं निषद्या । शेतेऽस्यां शय्या । सुत्या । हिताहितं विदन्ति तयेति विद्या । चर्या । मन्या । इत्या ।

**कृगः श च वा । ५ । ३ । १०० ।**

कृधातोः भावाकर्त्रोः स्त्रियां शः प्रत्ययो वा भवति, चकारात् क्यप् च । क्रिया, कृत्या । पक्षे कृतिः ।

**मृगयेच्छायाच्ञातृष्णाकृपाभाश्रद्धाऽन्तर्धा । ५ । ३ । १०१ ।**

एते स्त्रियां निपात्यन्ते । तत्रेच्छा भावे, शेषाः भावाकर्त्रोः । मृगयतेः मृगया । इच्छतेः इच्छा । अनयोः शः प्रत्ययः ।

याचितृष्ण्योः ननङौ याच्ञा । तृष्णा । कृपेरङ् रेफस्य च ऋकारः । कृपा । भातेरङ् भा । श्रत्पूर्वाद् अन्तःपूर्वाच्च दधातेः अङ् श्रद्धा । अन्तर्धा ।

**परेः सृ-चरेर्यः । ५ । ३ । १०२ ।**

परिपूर्वाभ्यां सृचरिभ्यां भावाकर्त्रोः स्त्रियां यः प्रत्ययो भवति । परितः सरणं परिसर्या । परिचर्या ।

**वाऽटाट्यात् । ५ । ३ । १०३ ।**

यङन्तादटतेः स्त्रियां यः प्रत्ययो वा भवति भावाकर्त्रोः । अटाट्या पक्षे अटाटा ।

**जागुरश्च । ५ । ३ । १०४ ।**

जागृधातोः भावाकर्त्रोः स्त्रियामः यश्च प्रत्ययो भवति । जागरा, जागर्या ।

**शंसिप्रत्ययात् । ५ । ३ । १०५ ।**

शंसुधातोः प्रत्ययान्ताच्च धातो भावाकर्त्रोः स्त्रियामः प्रत्ययो भवति । प्रशंसा । गोपाया । ऋतीया । मीमांसा । चिकीर्षा । पुत्रकाम्या । पुत्रीया ।

**क्तेटो गुरोर्व्यञ्जनात् । ५ । ३ । १०६ ।**

क्तस्येट् यस्मात् तस्मात् क्तेटो गुरुमतो व्यञ्जनान्ताद् धातोः भावाकर्त्रोः स्त्रियामः प्रत्ययो भवति । ईहा । ऊहा । ईक्षा । शिक्षा । भिक्षा । दीक्षा । व्यतीहा । क्तेट इति किम् ? स्रस्तिः । ध्वस्तिः । आप्तिः । गुरोरिति किम् ? स्फूर्तिः । व्यञ्जनादिति किम् ? संशीतिः ।

**षितोऽङ् । ५ । ३ । १०७ ।**

षिद्धातुभ्य. भावाकर्त्रो. स्त्रियामङ् भवति । डुपचींष् पाके पचा । क्षमा । घटा । त्वरा । व्यथा । प्रथा । जरा ।

**भिदादयः । ५ । ३ । १०८ ।**

भिदादयः शब्दाः स्त्रियामङ्प्रत्ययान्ताः भावाकर्त्रोः निपात्यन्ते । भेदनं विदारणं भिदा । एवं छिदा । विदा । मृजा । दया । रुजा । अनुकम्पा । पृच्छा । क्षिपा । चूडा ।

**भीषिभूषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यः ५ । ३ । १०९ ।**

एभ्यो ण्यन्तेभ्यः भावाकर्त्रो. स्त्रियामङ् भवति । ण्यन्तत्वादने प्राप्ते वचनम् । भीषा । भूषा । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । स्पृहा । तोला । दोला ।

**उपसर्गादातः । ५ । ३ । ११० ।**

उपसर्गपूर्वादाकारान्ताद् धातोः भावाकर्त्रो स्त्रियामङ् भवति । उपदा । उपधा । प्रधा । विधा । संधा । प्रमा । प्रमितिस्तु श्वादित्वात् ।

**णिवेत्त्यासश्रन्थघट्टवन्देरनः । ५ । ३ । १११ ।**

ण्यन्तेभ्यो वेत्त्यादिभ्यश्च धातुभ्यः स्त्रियां भावाकर्त्रो. अनः प्रत्ययो भवति । कारणा । वारणा । धारणा । कामना । भावना ।

वेदना । आसना । श्रन्थना । घट्टना । वन्दना । वेत्तीति तिवृन्निर्देशाद् ज्ञानार्थ एव परिग्राह्यः ।

इषोऽनिच्छायाम् । ५ । ३ । ११२ ।

अनिच्छायां वर्तमानादिषेः भावाकर्त्रोः स्त्रियामनो भवति । एषणा । अन्वेषणा । पिण्डैषणा । अनिच्छायामिति किम्? इष्टिः । वित्तैषणा, प्राणैषणा, परलोकैषणा इत्यादयस्तु बहुलाधिकारात् ।

पर्यधेर्वा । ५ । ३ । ११३ ।

पर्यधिपूर्वादिषेः भावाकर्त्रोः स्त्रियामनिच्छायां वर्तमानाद् अनो वा भवति । पर्येषणा, परीष्टिः । अध्येषणा, अधीष्टिः ।

क्रुत्सम्पदादिभ्यः क्विप् । ५ । ३ । ११४ ।

अनुपसर्गपूर्वेभ्यः क्रुधादिभ्यः समादिपूर्वेभ्यश्च पदादिभ्यः स्त्रियां भावाकर्त्रोः क्विब् भवति । क्रुत् । युत् । क्षुत् । तृड् । रुक् । शुक् । मुत् । सम्पद् । विपद् । आपद् । प्रतिपद् । संसत् । परिषत् । आशीः । प्रतिश्रुत् । उपानत् । समित् । आकृतिगणोऽयम् ।

भ्यादिभ्यो वा । ५ । ३ । ११५ ।

बिभेत्यादिभ्यो धातुभ्यः स्त्रियां भावाकर्त्रोः क्विप् वा भवति। भीः, भीतिः । ह्रीः, ह्रीतिः । लूः, लूनिः । भूः, भूतिः । कण्डूः, कण्डूया । कृत्, कृतिः । भिद्, भित्तिः । दृक्, दृष्टिः । नक्, नष्टिः । ज्वरेः जूः, जूर्तिः ।

**व्यतिहारेऽनीहादिभ्यो ञः । ५ । ३ । ११६ ।**

अन्योन्यस्य कृतप्रतिकृतिः व्यतिहारः । व्यतिहारविषयेभ्यः धातुभ्यो ईहादिवर्जितेभ्यः स्त्रियां ञः प्रत्ययो भवति । परस्परमाक्रोशनं व्यावक्रोशी । व्यावमोषी । व्यावहासी । व्यावलेखी । व्यावचर्ची । व्यात्युक्षी । व्यातिचारी । ईहादिवर्जनाद् व्यतीहा । व्यतिपृच्छा ।

**नञोऽनिः शापे । ५ । ३ । ११७ ।**

नञः पराद् धातोः श ये भावाकर्त्रोः स्त्रियामनिः भवति । अजननिः ते वृषल भूयात् । एवम् अजीवनि, अगमनिः, अकरणिः, अप्रयाणिः ।

**ग्ला-हा-ज्यः । ५ । ३ । ११८ ।**

एभ्यो भावाकर्त्रोः स्त्रियामनिः भवति । ग्लानिः । हानिः । ज्यानिः ।

**प्रश्नाख्याने वेञ् । ५ । ३ । ११९ ।**

प्रश्ने आख्याने च गम्ये स्त्रियां भावाकर्त्रोः धातोः इञ् प्रत्ययो वा भवति । प्रश्ने कां त्वं कारिमकार्षीः ? । कां कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः ? । आख्याने सर्वां कारिमकार्षम् । सर्वां कारिकां क्रियां कृत्यां कृतिं वाऽकार्षम् ।

**पर्यायार्हणोत्पत्तौ च णकः । ५ । ३ । १२० ।**

प्रश्नाख्यानयोः गम्यमानयोः एषु चार्थेषु स्त्रियां भावाकर्त्रोः

धातोः णकः प्रत्ययो भवति । क्त्याद्यपवादः । पर्यायः क्रमः परिपाटिरिति यावद् । भवतः आसिका, शायिका, अग्रगामिका आसितुं शयितुमग्रे गन्तुं च भवतः क्रम इत्यर्थः । अर्हणमर्हः योग्यता। अर्हति भवान् इक्षुभक्षिकाम्, ओदनभोजिकाम्, पयःपायिकाम् । ऋणं यत् परस्मै धार्यते इक्षुभक्षिकां मे धारयसि। उत्पत्तिः जन्म इक्षुभक्षिका मे उदपादि । प्रश्ने कां त्वं कारिकामकार्षीः । आख्याने सर्वां कारिकामकार्षम् ।

**नाम्नि पुंसि च । ५ । ३ । १२१ ।**

धातोः स्त्रियां भावाकर्त्रोः सञ्ज्ञायां णकः प्रत्ययो भवति । यथादर्शन पुंसि च । प्रच्छर्दनं प्रच्छर्द्यतेऽनया वा प्रच्छर्दिका। एवं प्रवाहिका । विचर्चिका । विपादिका । एता रोगसञ्ज्ञा । उद्दालकपुष्पाणि भज्यन्ते यस्यां सा उद्दालकपुष्पभञ्जिका । एवं वारणपुष्पप्रचायिका। अभ्योषखादिका । शालभञ्जिका। एवंनामानः क्रीडाः । पुंसि अरोचनं न रोचतेऽस्मिन्निति वा अरोचकः । अनाशक. । उत्कन्दकः । उत्कर्णकः ।

**भावे । ५ । ३ । १२२ ।**

भावे धात्वर्थनिर्देशे स्त्रियां धातोः णकः प्रत्ययो भवति । आसिका । शायिका । जीविका । कारिका ।

**क्लीबे क्तः । ५ । ३ । १२३ ।**

नपुंसकलिङ्गे भावेऽर्थे धातो' क्तः प्रत्ययो भवति । हसितं

छात्रस्य । नृत्तं मयूरस्य । व्याहृतं कोकिलस्य । गतं गजस्य। क्लीब इति किम् ? हसः । हासः ।

अनट् । ५ । ३ । १२४ ।

क्लीबे भावेऽर्थे धातोः अनट् प्रत्ययो भवति । गमनम् । वचनम् । हसनम् ।

यत्कर्मस्पर्शात् कर्त्रङ्गसुखं ततः । ५ । ३ । १२५ ।

येन कर्मणा संस्पृश्यमानस्य कर्तुः अङ्गस्य सुखमुत्पद्यते ततः कर्मणः परात् धातोः क्लीबे भावेऽनड् भवति । पूर्वेण सिद्धे नित्य-समासार्थं वचनम् । पयःपानं सुखम् । ओदनभोजनं सुखम् । कर्मेति किम् ? तूलिकाया उत्थानं सुखम् । स्पर्शादिति किम् ? अग्निकुण्डस्योपासनं सुखम् । कर्त्रिति किम् ? शिष्येण गुरोः स्नापनं सुखम् । अङ्गेति किम् ? पुत्रस्य परिष्वञ्जनं सुखम् । सुखमिति किम् ? कण्टकानां मर्दनं सुखम् ।

रम्यादिभ्यः कर्तरि । ५ । ३ । १२६ ।

रम्यादिभ्यो धातुभ्यः कर्तर्यनड् भवति । रमणी । कमनी । नन्दनी ।

कारणम् । ५ । ३ । १२७ ।

कृग्धातोः कर्तर्यनट् प्रत्ययो वृद्धिश्च निपात्यते । करोतीति कारणम् ।

भुजि-पत्यादिभ्यः कर्मापादाने । ५ । ३ । १२८ ।

मुज्यादिभ्यः पत्यादिभ्यश्च धातुभ्यो यथासंख्यं कर्मण्यपादाने चानड् भवति। भुज्यते इति भोजनम् । निरदन्ति तदिति निरदनम् । अपादाने प्रपतत्यस्मादिति प्रपतन । प्रस्कन्दनः । निर्झरणः । अपादानम् ।

**करणाधारे । ५ । ३ । १२९ ।**

करणे आधारे चार्थो धातोरनड् भवति । करणे एषणी । लेखनी । विचयनी । इध्मव्रश्चनः । पलाशशातन. । श्मश्रुकर्तन । आधारे गोदोहनी । सक्तुधानी । तिलपीडनी । शयनम् । आसनम् । अधिकरणम् । आस्थानम् ।

**पुंनाम्नि घः । ५ । ३ । १३० ।**

पुंस नाम पुंनाम, तत्र गम्यमाने करणाधारयो धातो. घः भवति । करणे प्रच्छद· । उरच्छदः । दन्तच्छदः। आधारे आकर। भवः । लयः । विषयः ।

**गोचरसंचरवहव्रजव्यजखलापणनिगमबकभगकषाकषनिकषम्। ५ । ३ । १३१ ।**

एते करणाधारयोः घप्रत्ययान्ता निपात्यन्ते पुनाम्नि । गावश्चरन्त्यस्मिन्निति गोचरः देश. । इदं व्युत्पत्तिमात्रं विषयस्य तु सञ्ज्ञा । सर्वसंविदामनेकान्तात्मकं वस्तु गोचरः । संचरन्तेऽनेनेति संचरः । वहन्ति येन वहः वृषस्कन्धदेशः । व्रजन्त्यस्मिन्निति व्रजः । व्यजत्यनेनेति व्यज· । खलन्त्यस्मिन्निति खल· । एत्य

पणायन्ति यस्मिन् स आपण । निगच्छन्ति यत्रेति निगमः । वक्तीति बकः । भज्यतेऽस्मिन्निति भग । भगमिति तु बाहुलकात् क्लीबेऽपि घे सिद्धे सिद्धम् । कषत्यस्मिन्निति कषः । एवमाकषः । निकष. ।

## व्यञ्जनाद् घञ् । ५ । ३ । १३२ ।

व्यञ्जनान्ताद् धातो पुंनाम्नि करणाधारे घञ् भवति । विद-न्त्यनेनेति वेदः । चेष्टतेऽनेनेति चेष्ट बलम् । एवमापाकः । आ-राम । लेख । बन्धः । वेग । राग । रङ्ग । प्रासाद । अपामार्ग ।

## अवात् तृस्तृभ्याम् । ५ । ३ । १३३ ।

अवपूर्वाभ्यां तृस्तृभ्या करणाधारे पुंनाम्नि घञ् भवति । अव-तरन्त्यस्मिन्निति अवतारः । अवस्तृणन्त्यस्मिन्निति अवस्तारः बाहुलकादसञ्ज्ञायामपि । अवतारो नद्याः ।

## न्यायावायाध्यायोद्यावसंहारावहाराधारदारजारम् । ५ । ३ । १३४ ।

एते शब्दा घञन्ता पुनाम्नि करणाधारयो निपात्यन्ते । घस्यापवादः । निपूर्वस्येणः नीयतेऽनेनेति न्याय. । एत्य वयन्ति यस्मिन्निति अवायः । अधीयतेऽनेनास्मिन्निति वाऽध्याय । उद्यु-वन्ति येनेत्युद्याव । सहरन्ति येन सहारः । अवहरन्ति येनाव-हारः । आध्रियते यत्रेत्याधार । दीर्यन्ते एभिः दाराः ।

जीर्यतेऽनेनेति जारः । दारयन्तीति दाराः इत्यपि । 'जाले वाच्ये आनायोः निपात्यः' आनायो जालं मत्स्यानां मृगाणां वा ।

उदङ्कोऽतोये । ५ । ३ । १३५ ।

उत्पूर्वादञ्चतेः पुंनाम्नि करणाधारयोः घञ् निपात्यते, अतोये तोयविषयश्चेद् धात्वर्थो न भवति । तैलोदङ्कः । घृतोदङ्कः । अतोय इति किम् उदकोदञ्चनः ।

खनो डडरेकेकवकघं च । ५ । ३ । १३७ ।

खनेः पुंनाम्नि करणाधारयोः डडरइकइकवकघघञ् च प्रत्यया भवन्ति । आखायते आखन्यते वाऽनेनास्मिन् वा आखः । आखरः । आखनिकः । आखनिकवकः । आखनः । आखानः ।

इकिस्तिव् स्वरूपार्थे । ५ । ३ । १३८ ।

धातोः स्वरूपेऽर्थेऽभिधेये च इकिस्तिव् इत्येते प्रत्यया भवन्ति । भञ्जिः । कृधिः । बुधिः । मनिः । अर्थे-यजेरङ्गानि । भुजिः क्रियते । पचतिर्वर्तते । गच्छतिः ।

दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात् खल् । ५ । ३ । १३९ ।

कृच्छ्रं दुःखम्, अकृच्छ्रं सुखम्, कृच्छ्रार्थवृत्तेः दुरः सामर्थ्यादकृच्छ्रार्थवृत्तिभ्यां स्वीषद्भ्यां परात् धातोः भावकर्मणोरर्थयोः खल् प्रत्ययो भवति । दुःखेन शय्यते इति दुःशयम्, सुखेन शय्यते इति सुशयम्, ईषच्छय्यं भवता । सुखेन क्रियते इति सुकरः,

दुःखेन क्रियते इति दुष्करः, ईषत्करः कटो भवता। दुष्करम्, सुकरम्, ईषत्करं भवता।

**च्व्यर्थे कर्त्राप्याद् भूकृगः। ५। ३। १४०।**

कृच्छ्राकृच्छ्रार्थेभ्यो दुःस्वीषद्भ्यः पराभ्यां च्व्यर्थे ः ‍ेमानाभ्यां कर्तृकर्मवाचिभ्यां शब्दाभ्यां पराभ्यां यथासंख्यं भूकृग्भ्यां परः खल् प्रत्ययो भवति। दुःखेनानाढ्येनाढ्येन भूयते दुराढ्यंभवं त्वया। सुखेनानाढ्येनाढ्येन भूयते स्वाढ्यंभवं मया। ईषदाढ्यंभवं भवता। दुःखेनानाढ्य आढ्यः क्रियते दुराढ्यंकरः मैत्रो भवता। सुखेनानाढ्यः आढ्यः क्रियते स्वाढ्यंकरो मैत्रो भवता। ईषदाढ्यंकरो मैत्रो भवता। वीरणानि सुखेनाकटः कटः क्रियन्ते इति सुकटंकराणि वीरणानि। मृत् सुखेनाघटः घटः क्रियते इति सुघटंकरा मृद्। च्व्यर्थ इति किम्? दुराढ्येन भूयते। स्वाढ्येन भूयते। ईषदाढ्येन भूयते। आढ्य एव किञ्चिद् विशेषमापद्यते। एवं दुराढ्यः क्रियते।

**शासूयुधिदृशिधृषिमृषातोऽनः। ५। ३। १४१।**

कृच्छ्राकृच्छ्रार्थकदुःस्वीषत्पूर्वेभ्यः शासूप्रभृतिभ्य आदन्तेभ्यश्च धातुभ्यो भावकर्मणोरन प्रत्ययो भवति। दुःखेन शिष्यते इति दुःशासनः। सुखेन शिष्यते सुशासनः। ईषच्छासनः। एवं दुर्योधनः। दुर्दर्शनः। दुर्धर्षणः। दुर्मर्षणः। आदन्त दुरुत्थानं त्वया। सूत्थानं चैत्रेण। ईषदुत्थानं भवता। दुष्पानं दुग्धं कण्ठरोगवता। सुपानं पयः भवता। ईषत्पानमित्यादि।

**निषेधेऽलं-खल्वोः क्त्वा । ५ । ४ । ४४ ।**

निषेधार्थयोरलंखल्वोरुपपदयो॰ धातो॰ क्त्वा प्रत्ययो वा भवति । अलं कृत्वा । खलु कृत्वा । न कर्तव्यमित्यर्थः । पक्षे यथाप्राप्तम् । अलं वत्स रोदनेन । अलं रुदितेन ।

**परावरे । ५ । ४ । ४५ ।**

परावरयो गम्यमानयो धातो क्त्वा प्रत्ययो वा भवति । अतिक्रम्य वलभीं शत्रुञ्जय॰, वलभ्या परः इत्यर्थ । यौवनमतिक्रम्य वार्धकम् यौवनात् परमित्यर्थः । अवरे अप्राप्य नदीं पर्वतः नद्या अर्वागित्यर्थ॰ । अप्राप्य यौवनं बाल्यम् ।

**निमील्यादि-मेङः तुल्यकर्तृके । ५ । ४ । ४६ ।**

धात्वर्थान्तरेण तुल्य कर्ता यस्य स तुल्यकर्तृक, तस्मिन्नर्थे वर्तमानेभ्यो निमील्यादिभ्यो. मेङश्च धातो. सम्बन्धे सति क्त्वा वा भवति । नेत्रे निमील्य हसति । मुख व्यादाय स्वपिति । दन्तान् प्रकाश्य जल्पति। अपमाय अपमित्य याचते। निमिल्यादीनां समानकालार्थः, मेङ. परकालार्थश्चारम्भः। पूर्व हि याचते पश्चादपमयते।

**प्राक्काले । ५ । ४ । ४७ ।**

परकालेन धात्वर्थेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्तमानाद् धातोः धातोः सम्बन्धे क्त्वा वा भवति । आसित्वा भुङ्क्ते । भुक्त्वा व्रजति । स्नात्वा भुङ्क्ते । पीत्वा व्रजति । पक्षे आस्यते भोक्तुमित्यादि । प्राक्काल इति किम् ? आस्यते, भुज्यते, पीयते ।

**ण्मुल् चाभीक्ष्ण्ये । ३ । ४ । ५८ ।**

आभीक्ष्ण्ययुक्ते परकालिकधात्वर्थेन सह तुल्यकर्तृके प्राक्काले{ऽ}थ वर्तमानाद् धातो धातोः सम्बन्धे ण्मुल् चकारात् क्त्वा च वा भवति । भोजं भोज व्रजति । भुक्त्वा भुक्त्वा व्रजति । पायं पायं गच्छति । पीत्वा पीत्वा गच्छति ।

**पूर्वाग्रे प्रथमे । ३ । ४ । ४९ ।**

पूर्वादिषूपपदेषु प्राक्कालार्थे वर्तमानाद् धातोः धातोः सम्बन्धे ण्मुल् वा भवति । अनाभीक्ष्ण्यार्थं वचनम् । पूर्वं भोजं व्रजति । पूर्वं भुक्त्वा व्रजति । अग्रे भोज याति । अग्रे भुक्त्वा याति । प्रथमं भोजं गच्छति । प्रथमं भुक्त्वा गच्छति । पूर्वं भोजनं कृत्वा ततः एतीत्यर्थः ।

**अन्यथैवंकथमित्थमः कृञोऽनर्थकात् । ३ । ४ । ५० ।**

एभ्यः परात् तुल्यकर्तृकेऽर्थे वर्तमानात् करोतेरनर्थकाद् धातोः सम्बन्धे ण्मुल् वा भवति । अन्यथाकारं भुङ्क्ते । एवंकारं भुङ्क्ते । कथंकारं भुङ्क्ते । इत्थंकारं भुङ्क्ते । पक्षे क्त्वा अन्यथा कृत्वा भुङ्क्ते इत्यादि । करोतेरन्यथादिभ्यः पृथगर्थाभावादनर्थकत्वम् । यावता अन्यथा भुङ्क्ते इत्युच्यते, तावता अन्यथाकारमित्यप्युच्यते । अत्र समासोऽपि नित्यः ङस्युक्तत्वात् ।

**यथा-तथादीर्ष्योत्तरे । ३ । ४ । ५१ ।**

यथातथाभ्यां परात् तुल्यकर्तृकेऽथ वर्तमानाद् अनर्थकात् कृगः धातोः सम्बन्धे ख्णम् वा भवति, ईर्ष्यश्चेदुत्तरं करोति तत्र। कथ भवान् भोक्ष्यते ? इति पृष्टः सन् असूयया तमुत्तरयति यथाकारमहं भोक्ष्ये, तथाकारमहं भोक्ष्ये किं तवानेन ? ।

**शापे व्याप्यात् । ५ । ४ । ५२ ।**

कर्मण· परात् तुल्यकर्तृकेऽर्थे वर्तमानात कृगः धातो· सम्बन्धे ख्णम् वा भवति, आक्रोशे गम्यमाने । चौरंकारमाक्रोशति–चौरं कृत्वा चौरशब्दमुच्चार्याक्रोशतीत्यर्थः, चौरोऽसीत्याक्रोशति इति फलितोऽर्थः ।

**स्वाद्वर्थाददीर्घात् । ५ । ४ । ५३ ।**

स्वाद्वर्थे वर्तमानाददीर्घान्ताद् व्याप्यात् परस्मात् तुल्यकर्तृकेऽर्थे वर्तमानात् करोतेः धातोः सम्बन्धे ख्णम् वा भवति । स्वादुकारं भुङ्क्ते । मिष्टकारं भुङ्क्ते। पक्षे स्वादुं कृत्वा, मिष्टं कृत्वा भुङ्क्ते । अदीर्घादिति किम् ? स्वाद्वीं कृत्वा यवागू भुङ्क्ते ।

**विद्–दृग्भ्यः कार्त्स्न्ये णम् । ५ । ४ । ५४ ।**

कार्त्स्न्ययुक्तव्याप्यात् परेभ्यस्तुल्यकर्तृके वर्तमानेभ्यो विदिभ्यः दृशेश्च धातो. सम्बन्धे णम् वा भवति। अतिथिवेदं भोजयति। यं यमतिथि जानाति लभते विचारयति वा त तं भोजयतीत्यर्थः । कन्यादर्श वरयति यां यां कन्यां पश्यति तां सर्वां वरयतीत्यर्थः। बहुवचनात् त्रयोऽपि विदो गृह्यन्ते ।

## यावतो विन्द-जीवः । ५ । ४ । ५५ ।

कार्त्स्न्ययुक्तव्याप्याद् यावच्छब्दात् पराभ्यां विन्दजीविभ्या तुल्यकर्तृके वर्तमानाभ्यां धातोः सम्बन्धे णम् वा भवति। यावद्वेदं भुङ्क्ते यावल्लभते तावद् भुङ्क्ते इत्यर्थ । यावज्जीवमधीते यावज् जीवति तावदधीत इत्यर्थः ।

## चर्मोदरात् पूरेः । ५ । ४ । ५६ ।

चर्मोदराभ्यां व्याप्याभ्यां परात् तुल्यकर्तृकेऽर्थे वर्तमानात् पूरेः णम् प्रत्ययो वा भवति । चर्मपूरमास्ते चर्म पूरयित्वा आस्ते इत्यर्थः । उदरपूरं शेते उदरं पूरयित्वा शेते इत्यर्थः ।

## वृष्टिमाने ऊलुक् चास्य वा । ५ । ४ । ५७ ।

कर्मणः परात् पूरयतेर्धातोः धातोः सम्बन्धे णम् वा भवति । अस्य च पूरयतेरूकारस्य लुग् वा भवति । समुदायेन चेद् वृष्टेरियत्ता गम्यते । गोष्पदप्र गोष्पदपूर वा वृष्टो मेघ । गङ्गाप्रं गंगापूर वा वृष्टो देव । यावता गोष्पदादि पूरणा भवति तावद् वृष्ट इत्यर्थः ।

## चेलार्थात् क्नोपेः । ५ । ४ । ५८ ।

चेलार्थाद् व्याप्यात् परात् तुल्यकर्तृकार्थात् क्नोपयतेः वृष्टिमाने गम्ये धातोः सम्बन्धे णम् वा भवति । चेलक्नोप वृष्टो देवः । एवं वस्त्रक्नोपं वसनक्नोपं वा वृष्टो मेघः । यावता चेलमार्द्रीभवति तावद् वृष्ट इत्यर्थः ।

**गात्र–पुरुषात् स्नः । ५ । ४ । ५९ ।**

गात्ररूपात् पुरुषरूपाच्च व्याप्यात् परादन्तर्भूतण्यर्थात् स्नाते–स्तुल्यकर्तृकेऽर्थे वर्तमानाद् वृष्टिमाने गम्ये धातोः सम्बन्धे णम् वा भवति । गात्रस्नाय वृष्टो देव. । पुरुषस्नायं वृष्टो मेघ । यावता गात्र पुरुषश्च स्नाप्यते तावद् वृष्ट' ।

**शुष्क–चूर्ण–रूक्षात् पिषस्तस्यैव । ५ । ४ । ६० ।**

एभ्यो व्याप्येभ्यः परात् पिषे. तस्यैव धातो सम्बन्धे णम् वा भवति । शुष्कपेषं पिनष्टि । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि । शुष्क चूर्ण रूक्षं वा पिनष्टीत्यर्थ. ।

**कृग्–ग्रहोऽकृत–जीवात् । ५ । ४ । ६१ ।**

अकृत–जीवाभ्या व्याप्याभ्यां पराभ्यां कृग्–ग्रहिभ्यां यथा-सख्य तस्यैव धातो' सम्बन्धे णम् वा भवति । अकृतकारं करोति अकृतं करोतीत्यर्थः । जीवग्राहं गृह्णाति जीवन्तं गृह्णातीत्यर्थ' ।

**निमूलात् कषः । ५ । ४ । ६२ ।**

निमूलाद् व्याप्यात् परात् कषेस्तस्यैव धातो' सम्बन्धे णम् वा भवति। निमूलकाषं कषति निमूलं कषतीत्यर्थ । पक्षे निमूलस्य काषं कषति ।

**हनश्च समूलात् । ५ । ४ । ६३ ।**

समूलाद् व्याप्यात् पराद् हन्तेः कषेश्च तस्यैव धातोः सम्बन्धे

णम् वा भवति । समूलकाषं कषति समूल कषतीत्यर्थः । समूलघातं हन्ति समूलं हन्तीत्यर्थ. ।

**करणेभ्यः । ५ । ४ । ६४ ।**

करणात् कारकात् पराद् हन्ते. णम् वा भवति तस्यैव धातोः सम्बन्धे । पाणिघातं कुड्यमाहन्ति, पाणिना कुड्यमाहन्तीत्यर्थः, बहुवचनात् करणपूर्वाद हिंसार्थादपि हन्तेरनेनैव णम्, न तु 'हिंसार्थादेकाप्यात्' इत्यनेन । अस्युपघातमरीन् हन्ति । अनेन णमि नित्यसमासः ।

**स्वस्नेहार्थात् पुष-पिषः । ५ । ४ । ६५ ।**

करणवाचिनः स्वार्थात् स्नेहार्थाच्च पराद् यथासख्य पुषः पिषश्च तस्यैव सम्बन्धे सति णम् वा भवति । स्वपोषं पुष्णाति । आत्मपोषं पुष्णाति । स्वशब्दस्यात्मात्मीयज्ञातिधनार्थत्वेन गोपोषं महिषीपोषं मातृपोषं धनपोषं च पुष्णातीत्याद्यपि । स्वादिभिः पुष्णातीत्यर्थ । स्नेहार्थाद उदपेष पिनष्टि । घृतपेष तैलपेष क्षीरपेषं वा पिनष्टि । उदकादिना पिनष्टीत्यर्थ ।

**हस्तार्थाद् ग्रह-वर्ति-वृतः । ५ । ४ । ६६ ।**

हस्तार्थककरणवाचिनः पराद ग्रहवर्तिवृतः तस्यैव सम्बन्धे णम् वा भवति । हस्तग्राहं गृह्णाति । करग्राहं गृह्णाति । पाणिग्राहं गृह्णाति । हस्तेन गृह्णातीत्यर्थ. । हस्तवर्तं वर्तयति हस्तेन वर्तयतीत्यर्थः । हस्तवर्तं वर्तते । करवर्तं वर्तते । हस्तेन वर्तत इत्यर्थः वर्तिवृत इति वृतेर्ण्यन्तस्याण्यन्तस्य च ग्रहणम् ।

**बन्धेर्नाम्नि । ५ । ४ । ६७ ।**

बन्धिः प्रकृतिः नामविशेषणं च, बन्धनस्य यद् नाम तद्विषयात् बन्ध्यर्थस्य बन्धेः करणवाचिनः परात् तस्यैव सम्बन्धे णम् वा भवति। क्रौञ्चबन्धं बद्धः। मकटबन्धं बद्धः। मयूरिकाबन्धं बद्धः। क्रौञ्चाद्याकारो बन्धः क्रौञ्चादिशब्देनोच्यते, तेन बन्धेन बद्धः। क्रौञ्चाद्याकारकेण बन्धेन बद्ध इत्यर्थः।

**आधारात् । ५ । ४ । ६८ ।**

आधारवाचिनः परात् बन्धेस्तस्यैव सम्बन्धे सति णम् वा भवति। चक्रबन्धं बद्धः। चारकबन्धं बद्धः। गुप्तिबन्धं बद्धः चक्रादिषु बद्ध इत्यर्थः।

**कर्तुर्जीव–पुरुषाद् नश्–वहः । ५ । ४ । ६९ ।**

कर्तृवाचिभ्यां जीव–पुरुषाभ्यां पराभ्यां यथासंख्यं नशि–वहिभ्यां तस्यैव धातोः सम्बन्धे णम् वा भवति। जीवनाशं नश्यति जीवन् नश्यति। पुरुषवाहं वहति पुरुषः प्रेष्यो भूत्वा वहतीत्यर्थः।

**ऊर्ध्वात् पूःशुषः । ५ । ४ । ७० ।**

कर्तृवाचकाऊर्ध्वशब्दात् पूरः शुषश्च तस्यैव धातोः सम्बन्धे सति णम् वा भवति। ऊर्ध्वपूरं पूयते। ऊर्ध्वः पूर्यते इत्यर्थः। ऊर्ध्वशोषं शुष्यति ऊर्ध्वः शुष्यतीत्यर्थः।

**व्याप्याच्चेवात् । ५ । ४ । ७१ ।**

उपमानार्थाद् व्याप्यात् कर्तुश्च पराद् धातोः तस्यैव सम्बन्धे णम् वा भवति । सुवर्णनिधायं निहितः सुवर्णमिव निहित इत्यर्थः । रत्ननिधायं निहितः । ओदनपाकं पक्वः । कर्तु काकनाशं नष्टः । काक इव नष्ट इत्यर्थः । जमालिनाशं नष्टः । अभ्रविलायं विलीनः अभ्रमिव विलीन इत्यर्थः ।

**उपात् किरो लवने । ५ । ४ । ७२ ।**

लवनेऽर्थे वर्तमानादुपपूर्वात् किरते अन्यधातोः सम्बन्धे णम् वा भवति । लवनग्रहणात् तस्यैव सम्बन्धे इति निवृत्तम् । उपस्कारं मद्रका लुनान्ति विक्षिपन्तः लुनन्ति इत्यर्थः ।

**दंशेस्तृतीयया । ५ । ४ । ७३ ।**

तुल्यकर्तृकेऽर्थे वर्तमानादुपपूर्वाद् दंशेस्तृतीयान्तेन योगे सति अन्यस्य धातोः सम्बन्धे सति णम् वा भवति । मूलकेनोपदंशं भुङ्क्ते । अत्र 'तृतीयोक्ता' इति समासस्य विकल्पनाद् मूलकोपदंशं भुङ्क्ते इत्यपि । पक्षे मूलकेनोपदश्य भुङ्क्ते । एवमार्द्रकोपदंशम्, आर्द्रकेणोपदशम्, आर्द्रकमुपदश्य भुङ्क्ते इत्यादि।

**हिंसार्थादेकाप्यात् । ५ । ४ । ७४ ।**

हिंसार्थाद् धातोः सम्बध्यमानेन धातुना सहैकाप्यात् तृतीयान्तेन योगे तुल्यकर्तृकेऽर्थे वर्तमानाद् णम् वा भवति । दण्डेनोपघातं दण्डोपघातं गाः सादयति । खड्गेन प्रहारं खड्गप्रहारं शत्रून् विज-

यते । दण्डेनाताडं दण्डाताडं गाः कलयति । पक्षे दण्डेनोपहत्ये-त्यादि । हिंसार्थादिति किम् ? चन्दनादिना महावीरं पूजयति । एकाप्यादिति किम् ? दण्डेनाहत्य चैत्रं गोपाल धेनूः खेटयति ।

**उपपीड–रुध–कर्षस्तत्सप्तम्या । ५ । ४ । ७५ ।**

तृतीयायुक्ता सप्तमी तत्सप्तमी । तृतीयान्तेन सप्तम्यन्तेन च योगे सति उपपूर्वेभ्यः पीडरुधकर्षभ्यस्तुल्यकर्तृकेऽर्थे वर्तमानेभ्यो धातोः सम्बन्धे णम् वा भवति। पार्श्वाभ्यामुपपीडं पार्श्वोपपीड शेते । पार्श्वयोरुपपीडं पार्श्वोपपीडं शेते । व्रजेनोपरोधं व्रजोपरोध गाः सादयति। व्रजे उपरोधं व्रजोपरोधं गाः स्थापयति । पाणिनोपकर्ष पाण्युपकर्ष धानाः पिनष्टि। पाणावुपकर्ष पाण्युपकर्ष धानाः गृह्णाति । कर्षतेः शवो निर्देशाद् भौवादिकस्य ग्रहणं न तौदादिकस्य । तेन भूमौ उपकृष्य तिलान् वपति इति विलेखनार्थस्य न णम् ।

**प्रमाण–समासत्त्योः । ५ । ४ । ७६ ।**

आयाममानं प्रमाणम्, समासत्तिः संरम्भपूर्वकः सन्निकर्षः, तयोः गम्यमानयोः तृतीयान्तेन सप्तम्यन्तेन च योगे तुल्यकर्तृकेऽर्थे वर्तमानाद् धातोः धातोः सम्बन्धे सति णम् वा भवति । द्व्यङ्गुलेनोत्कर्ष द्व्यङ्गुलोत्कर्ष गण्डिकाः छिनत्ति । द्व्यङ्गुले उत्कर्ष द्व्यङ्गुलोत्कर्ष गण्डिकाश्छिनत्ति । समासत्तिः केशैर्ग्राहं केशग्राहं युध्यन्ते । केशेषु ग्राहं केशग्राहं युध्यन्ते । पक्षे द्व्यङ्गुलेनोत्कृष्य द्व्यङ्गुले उत्कृष्य गण्डिकाः छिनत्ति इत्यादि ।

**पञ्चम्या त्वरायाम् । ५ । ४ । ७७ ।**

त्वरा औत्सुक्यम्, तस्यां गम्यमानायां पञ्चम्यन्तेन योगे तुल्यकर्तृकेऽर्थे वर्तमानाद् धातोः धातोः सम्बन्धे णम् वा भवति । शय्याया उत्थायं शय्योत्थायं धावति । पक्षे शय्याया उत्थाय धावति ।

**द्वितीयया । ५ । ४ । ७८ ।**

द्वितीयान्तन योगे तुल्यकर्तृकेऽर्थे वर्तमानाद् धातोः सम्बन्धे णम् वा भवति त्वरायां गम्यायाम् । लोष्ठान् ग्राहं लोष्ठग्राहं युध्यन्ते । एवं यष्टीः ग्राहं यष्टिग्राहं युध्यन्ते । दण्डमुद्यामं दण्डोद्यामं धावति । एवं योद्धुं त्वरन्ते यदायुधग्रहणमपि नाद्रियन्ते । यत्किञ्चिदासन्न तद् गृह्णन्ति । पक्षे लोष्ठान् गृहीत्वा युध्यन्ते इत्यादि ।

**स्वाङ्गेनाध्रुवेण । ५ । ४ । ७९ ।**

व्याकरणशास्त्रोक्त स्वाङ्गमत्र ग्राह्यम् 'अविकारोऽद्रवमित्यादिलक्षणम्, यस्मिन्नङ्गे च्छिन्ने प्राणी न म्रियते तदध्रुवम्, अध्रुवेण स्वाङ्गेन द्वितीयान्तेन योगे सति तुल्यकर्तृकेऽर्थे वर्तमानाद् धातो सम्बन्धे सति णम् वा भवति । भ्रुवौ विक्षेपं भ्रूविक्षेपं जल्पति । अक्षिणी निकाणम् अक्षिनिकाणं हसति । केशान् परिधायं केशपरिधायं नृत्यति । पक्षे भ्रुवौ विक्षिप्य जल्पति । स्वाङ्गेनेति किम् ? कफमुन्मूल्य जल्पति । अध्रुवेणेति किम् ? शिरः उत्क्षिप्य कथयति ।

